# महानाटकम् ।

---

महाकवि श्रीलहनूमता

विरचितम् ।

श्रीमधुसूदनमिश्रेण

सन्दर्भ्य सञ्जीवितम् ।

---

बि, ए, उपाधिधारिणा

पण्डितकुलपतिना

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया

समलङ्कृतम् ।

---

तृतीयसंस्करणम् ।

---

कलिकातानगर्य्याम्

गिरीशयन्त्रे मुद्रितम् ।

ई १८९८ ।

# महानाटकम् ।

## प्रथमोऽङ्कः ।

### नान्दी ।

विश्वेशो वः स पायात्त्रिगुणसचिवतां योऽवलम्ब्यानुवारं,
विश्वद्रीचीनसृष्टिस्थितिविलयमजः स्वेच्छया निर्मिमीते ।
यस्येयत्तामतीत्य प्रभवति महिमा कोऽपि लोकव्यतीतः,
त्यक्तो यश्चक्षुराद्यैरपि निपुणतमै(मो)र्वीक्षणादिक्रियासु ॥ १ ॥

---

प्रणम्य परमात्मानं श्रीजीवानन्दशर्म्मणा ।
महानाटकविवृतिः क्रियते छात्रहेतुका ॥

नन्दयतीति नान्दी आशीर्वादकरी वाक्, उक्तञ्च दर्पणे, "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥" इति ।

विश्वेश इति । यः न जायते इति अजः सनातन इत्यर्थः, जनेर्डप्रत्ययः । त्रयाणां गुणानां रजःसत्त्वतमसां सचिवता साहाय्यं त्रिगुणसचिवता ताम् अवलम्ब्य आश्रित्य स्वेच्छया निजाभिलाषेण अनुवारं पुनः पुनः, वीप्सायामव्ययीभावः । सृष्टिश्च स्थितिश्च विलयश्चेति सृष्टिस्थितिविलयं, द्वन्द्वैकवद्भावः । विश्वगञ्चतीति विश्वद्र्यङ् तदेव विश्वद्रीचीनं, स्वार्थे ख-प्रत्ययः ।

अपि च ।

विघ्नेशो वः स पायाज्जलनिधिमखिलं पुष्कराग्रेण पीत्वा,
यस्मिन्नुद्धृत्य तोयं( हस्तं )विसृजति, सकलं दृश्यते व्योम्नि देवैः ।
क्वाप्यम्भः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यनन्तः क्व च श्रीः,
क्वाप्यौर्वः क्वापि शैलाः क्वचन मणिगणाः क्वापि नक्रादिचक्रम् ॥२॥

---

विश्वव्यापकमित्यर्थः, तच्च तत् सृष्टिस्थितिप्रलयश्चेति विश्वत्रीचोनसृष्टिस्थितिविलयं तत् निर्मिमीते रजोगुणपरिणामिन ब्रह्मरूपेण जगतां सृष्टिं, सत्त्वगुणपरिणामिन विष्णुरूपेण पालनं, तमोगुणपरिणामिन रुद्ररूपेण संहारं करोतीत्यर्थः, यस्य कोऽपि अनिर्वचनीयः लोकव्यतीतः अलौकिकः महिमा महत्त्वम्, इयत्तां परिमितता सीमामित्यर्थः अतीत्य अतिक्रम्य प्रभवति प्रकर्षेण वर्त्तते, यः निपुणतमैः अतिसमर्थैरित्यर्थः, सूक्ष्मदर्शिभिरिति भावः, चक्षुराद्यैः नेत्रादिभिरिन्द्रियैरित्यर्थः, वीक्षणादिक्रियासु दर्शनादिव्यापारेषु,त्यक्तः विवर्जितः अवाङ्मनसगोचरत्वात् दर्शनेन्द्रियादिभिः ग्रहीतुमशक्य इति यावत्, स विश्वेशः जगदीश्वरः वः युष्मान् पायात् रक्षतु, पाल रक्षणे इत्यस्मादाशीर्लिङ् । स्रग्धरावृत्तं, "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति तल्लक्षणात् । निपुणतमैरित्यत्र निपुणतम इति पाठे निपुणतमः अतिसमर्थ इत्यर्थः, य इत्यस्य विशेषणम् ॥ १ ॥

विघ्नेश इति । यस्मिन् विघ्नेशे पुष्कराग्रेण शुण्डाग्रेण तोयं जलम् उद्धृत्य उत्तोल्य पीत्वा अखिलं समस्तं जलनिधिं समुद्रं विसृजति त्यजति सति, रिक्तीकृत्येति भावः, यद्वा यस्मिन् अखिलं जलनिधिं पुष्कराग्रेण उद्धृत्य पीत्वा तोयं विसृजति

जयति रघुवंशतिलकः कौशल्यानन्दिवर्द्धनो रामः ।
दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः ॥ ३ ॥

---

वर्षति सति, समन्तादिति भावः, तोयमित्यत्र हस्तमिति पाठे पुष्कराग्रेण अखिलं जलनिधिं पीत्वा हस्तं शुण्डादण्डम् उद्धृत्य उत्तोल्य विसृजति समन्तात् त्यजति सति व्योम्नि आकाशे, स्थितैरिति शेषः, देवैः अम्भः जलम् उद्धृतवृष्टमिति भावः, क्वापि कुत्रचित् प्रदेशे, वर्षणस्य एकदेशिकत्वादिति भावः, विष्णुः नारायणः, समुद्रजलशायीति भावः, क्वापि कुत्रचित् स्थलप्रदेशे इत्यर्थः, कमलभूः विष्णुनाभिपद्मजः ब्रह्मेत्यर्थः, क्वचन कुत्रचित् प्रदेशे अनन्तः विष्णोः शयनभूत इति भावः, क्वापि क्वचित् प्रदेशे, श्रीः लक्ष्मीः, विष्णोर्वक्षःस्थलवासिनीति भावः, क्व च कुत्र-चित् प्रदेशे, और्वः बाड़वाग्निः, क्वापि कुत्रचित् प्रदेशे, शैलाः मैनाकादयः पर्व्वताः, क्वापि मणिगणाः रत्ननिकराः, क्वचन कुत्रचित् प्रदेशे, तथा नक्रादिचक्रं कुम्भीरादिजलजन्तुसमूहः, क्वापि कुत्रचित् प्रदेशे, सकलम् अन्यच्च सर्वं सामुद्रं दृश्यते, स विघ्नेशः गणपतिः वः युष्मान् पायात् रक्षतु । अत्रापि पूर्व्वमिव वृत्तम् ॥ २ ॥

जयतीति । रघुवंशतिलकः रघुकुलललाटालङ्कारभूतः, कौशल्याया जनन्या इति भावः, आनन्दिम् आनन्दं वर्द्धयतीति तथोक्तः, दशवदननिधनकारी रावणहन्ता इत्यर्थः, पुण्डरीके इव अक्षिणी यस्य सः पुण्डरीकाक्षः कमलनेत्रः, दशरथस्यापत्यं पुमान् दाशरथिः, रमयति जगदिति रम्यते अस्मिन्निति वा रामः जयति सर्वोत्कर्षेण वर्त्तताम् । जेस्तुवन्तस्तिवन्त इति तुप-स्तिवादेशः । आर्य्या वृत्तं, "यस्याः पादे प्रथमे द्वादशमात्रास्तथा

नमामि देवं सुरकल्पवृक्षं, धनुर्धरं नीरदनीलगात्रम् ।
गुणाभिरामं कमलाननं तं, यदास्पदं न क्षणमुज्झति श्रीः ॥ ४ ॥
रामं लक्ष्मणपूर्व्वजं रघुवरं सीतापतिं सुन्दरं,
काकुत्स्थं करुणामयं गुणनिधिं विप्रप्रियं धार्मिकम् ।
राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्त्तिं,
वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥ ५ ॥

---

तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्या" इति तल्लक्षणात् ॥ ३ ॥

नमामीति । श्रीर्लक्ष्मीः यत् आस्पदम् आश्रयं, क्षणम्, अपिरत्वाध्याहार्य्यः, अल्पकालमपीत्यर्थः न उज्झति न त्यजति, तं सुराणां कल्पवृक्षं वाञ्छितार्थप्रदमित्यर्थः, धनुर्धरं कार्मुकपाणिं, नीरं ददातीति नीरदो नवमेघः तद्वत् नीलं गात्रम् अङ्गं यस्य तं, गुणैः दयादाक्षिण्यादिभिरभिरामः सर्व्वजनमनोरमः तं, कमलाननं सरोजवदनं, दीव्यतीति देवः तं, पचादित्वादच्-प्रत्ययः । नमामि वन्दे । उपेन्द्रवज्रावृत्तं, "स्यादिन्द्रवज्रा यदि तौ जगौ गः," "उपेन्द्रवज्रा प्रथमे लघौ सा" इति तल्लक्षणात् ॥ ४ ॥

राममिति । लक्ष्मणपूर्वजं लक्ष्मणज्येष्ठं, रघुवरं रघुवंशश्रेष्ठं सीतापतिं जानकीवल्लभं, सुन्दरं सुरूपं, ककुदि तिष्ठतीति ककुत्स्थः तस्यापत्यं पुमान् काकुत्स्थः तं, पुरा पुरञ्जयः ( परञ्जयः ) नाम कश्चिदैक्ष्वाकः असुरजयाय सुरगणैरभ्यर्थितः वृषरूपधरस्य देवेन्द्रस्य ककुदि स्थित्वा असुरान् निजघान, ततश्च तस्य ककुत्स्थसंज्ञा जाता, तद्वंश्याश्च काकुत्स्था इत्युच्यन्ते इति पुराणम् । करुणामयं दयापूर्णमित्यर्थः, गुणनिधिं निधीयते अस्मिन्निति निधिः गुणानां सत्यसौजन्यानां निधिर्निलयः तं,

मनोऽभिरामं नयनाभिरामं, वचोऽभिरामं श्रवणाभिरामम्।
सदाभिरामं सतताभिरामं, वन्दे सदा दाशरथिञ्च रामम्॥ ६॥

श्रीरामचन्द्र! भुवि विश्रुत(विस्तृत)कीर्त्तिचन्द्र!
स्मेरास्यचन्द्र! रजनीचरपद्मचन्द्र!।
आनन्दचन्द्र! रघुवंशसमुद्रचन्द्र!
सीतामनः कुमुदचन्द्र! नमो नमस्ते॥ ७॥

---

विप्रप्रियं ब्राह्मणप्रीतिकरं, धार्म्मिकं धर्म्मः श्रुत्यादिविहितं कर्म्म तत्र रतः तं, राजेन्द्रं राजश्रेष्ठं, सत्यसन्धं सत्यप्रतिज्ञं, दशरथतनयं दाशरथिं, श्यामलं दूर्वादलवत् श्यामं, शान्तमूर्त्तिं सौम्यकलेवरं, लोकाभिरामं लोककान्तं, रघुकुलतिलकं रघुवंशावतंसं, राघवं रघोः अपत्यं पुमान् राघवः तं रघुवंशधरं, रावणारिं रावणसूदनं रामं वन्दे प्रणमामि। स्रग्धरा वृत्तम्॥ ५॥

मनोभिराममिति। मनोभिरामं हृदयप्रियं, नयनाभिरामं चक्षुःप्रीणनं, वचोभिरामं वचनसुन्दरं, मधुरवाचमित्यर्थः, श्रवणाभिरामं श्रुतिसुखप्रदं, नामश्रवणादिति भावः, सदाभिरामं सततसुन्दरं, सतताभिरामं सन्ततसुखदं, दाशरथिं दशरथतनयं रामं, सदा सर्व्वस्मिन् काले च, वन्दे प्रणमामि। उपजातिवृत्तम् इन्द्रोपेन्द्रवज्रयोः सम्मेलनात्, तदुक्तं छन्दोमञ्जर्य्याम् "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति॥६॥

श्रीरामेति। श्रीरामचन्द्र! भुवि पृथिव्यां विश्रुतः प्रसिद्धः, विस्तृत इति पाठान्तरं, कीर्त्तिचन्द्रः यशःशशाङ्कः यस्य तत्सम्बुद्धिः। स्मेरं समन्दहासं विकस्वरञ्च आस्यं वदनमेव चन्द्रो यस्य तथाभूतः, तत्सम्बुद्धिः। रजनीचरा राक्षसा एव पद्मानि तेषां चन्द्रः सङ्कोचक इति भावः तत्सम्बुद्धिः। आनन्दचन्द्र!

कल्याणानां निदानं कलिमलमथनं जीवनं सज्जनानां,
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां पावनं पावनानां,
वीजं धर्म्मद्रुमाणां प्रभवतु भवतां भूतये रामनाम ॥ ८ ॥

---

लोकरञ्जन इत्यर्थः, रघुवंश एव समुद्रः तस्य चन्द्रः तत्सम्बुद्धिः, चन्द्रो यथा समुद्रादुत्पन्नः तथा अयं रघुवंशादुत्पन्न इति भावः । हे सीतामनःकुमुदचन्द्र ! सीतायाः मनश्चित्तमेव कुमुदं तस्य चन्द्रः विकासकः,उल्लासक इत्यर्थः, तत्सम्बुद्धिः, ते तुभ्यं नमः नमः पुनः पुनस्त्वां नमामीत्यर्थः । वसन्ततिलकं वृत्तं, "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति तल्लक्षणात् । रूपकालङ्कारः ॥ ७ ॥

कल्याणानामिति । कल्याणानां मङ्गलानां निधीयते अस्मिन्निति निधानम् आश्रयः मङ्गलमयमित्यर्थः, कलिश्चतुर्थं युगं तत्र ये मलाः पापानि तेषां मथनं ध्वंसनं, कलोत्थनेन सत्यादियुगपापानां किमुतेति अर्थापत्तिर्व्यज्यते । सन्तो जनाः साधव इत्यर्थः, तेषां जीव्यतेऽनेनेति जीवनं रक्षणसाधनं, सपदि झटिति परं पदं कैवल्यमित्यर्थः, तस्य प्राप्तये लाभाय प्रस्थितस्य प्रवृत्तस्य मुमुक्षोः मोक्तुमिच्छोः,संसारमिति शेषः, जनस्य पाथेयं सम्बलं, "पाथेयं सम्बलं विदुः" इति विश्वः । कविवराणां कविश्रेष्ठानां वाल्मीकिप्रभृतीनां यानि वचांसि वाक्यानि तेषाम् एकम् अद्वितीयं विश्रामस्थानं विनोदनिलयः, अवलम्बनमिति यावत्, पावयन्तीति पावनानि पापध्वंससाधनानि चान्द्रायणादीनि तेषां पावनं शोधनं, सर्वेषु एव कर्म्मसु रामापरनामविष्णुस्मरणस्य एतत्प्रयोजनकत्वस्य शास्त्रीयत्वादिति भावः ; धर्म्म एव द्रुमः वृक्षः तस्य वीजं मूलकारणं यत् तत् रामनाम

पातु श्रीस्तनपत्रभङ्गमकरीमुद्राङ्कितोरःस्थलो,
देवः सर्व्वजगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयः ।
क्रीड़ाक्रोड़तनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भूः,
भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः ॥ ८ ॥

---

रामेति नाम भवतां सभ्यानामिति भावः, भूतये सम्पदे, ऐहिक-पारलौकिकोभयरूपायै इति शेषः, "भूतिः भस्मनि सम्पदि" इत्यमरः । प्रभवतु प्रकर्षेण अस्तु । स्रग्धरा वृत्तम् ॥ ८ ॥

पाश्चात्यपुस्तके एतमारभ्य चत्वार एव श्लोका नान्दीत्वेन पठिताः, तदत्रापरे त्रयः प्रक्षिप्य व्याख्यायन्ते ।

पात्विति । श्रिया लक्ष्म्याः स्तनयोः पत्रभङ्गेषु पत्रावलीषु या मकरीमुद्रा मकराख्यजन्तुविशेषावयवरेखा, तया अङ्कितं चिह्नितं, तदालिङ्गनादिति भावः, उरःस्थलं वक्षःस्थलं यस्य सः, मधुर्नाम दैत्यभेदः तस्य बध्वः योषितः तासां वक्त्राणि वदनानि एव अब्जानि पद्मानि तेषां सम्बन्धी चन्द्रोदयः उदितश्चन्द्र इति परम्परितरूपकं, वक्त्रेषु अब्जरूपणस्य देवे चन्द्ररूपणकारणत्वात्, तदुक्तं दर्पणे—"यत्र कस्यचिदारोपः परारोपणकारणम् । तत् परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥" इति । चन्द्रोदयो यथा पद्मानां मालिन्यापादकस्तथा भगवान् मधुबधूनां मुखानां, तत् पत्युर्विनाशात्, मालिन्यहेतुरिति भावः । सर्वेषां जगतां पति-रधीश्वरो देवः पातु रक्षतु, युष्मानिति शेषः । तमेव पुनर्विशि-नष्टि क्रोड़ेति । क्रीड़या लीलया क्रोड़ी शूकरो तनुः शरीरं यस्य तस्य वराहरूपं बिभ्रत इत्यर्थः, यस्य देवस्य नवेन्दुवत् विशदः निर्म्मलः तस्मिन्, दंष्ट्राङ्कुरे दशनप्ररोहे भूः पृथिवी प्रलयाब्धिः कल्पान्तसागरः पल्वलम् अल्पं सर इव, तस्य तलात् उत्खाता

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो,
बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरता कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥१०॥

---

उन्मूलिता एका मुस्ता तदाख्यतृणविशेषः, तस्या आकृतिरिव आकृतिर्यस्याः तथाभूता सती भाति स्म राजते स्म । उपमालङ्कारः । शार्दूलविक्रीड़ितं वृत्तं, "सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितम्" इति तल्लक्षणात् ॥ ८ ॥

यमिति । शिवो देवता येषां ते शैवाः शिवोपासकाः यं शिव इति "सहा रुद्रादभूत् प्रकृतिरतः सूत्रं ततोऽहमिति ततो विश्वम्" इति श्रुतेः । वेदान्तिनः वेदान्तविदः ब्रह्मेति "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" इति श्रुतेः । बौद्धाः बुद्धधर्मिणः बुद्ध इति "प्राण्यालम्भनं संसृतिः न नन्दयति माम्" इति श्रुतेः । प्रमाणानि प्रत्यक्षानुमानोपमानशब्दादीनि तेषु निपुणाः तत्सिद्धान्तपटव इति यावत्, न्यायो युक्तिशास्त्रं तं जानन्ति अधीयते वेति नैयायिकाः कर्त्तेति, "सनातनाः पशवः प्रविशन्ति प्रमेयानुभूतेः कर्त्तैव च ततः" इति श्रुतेः । अथ अनन्तरं बौद्धमतप्रचलनानन्तरमित्यर्थः, जैनशासनं बौद्धधर्म्मभेदः तत्र रताः तन्मार्गवर्त्तिन इति यावत्, अर्हन्निति "स्वभाव एवेश्वरो नान्योऽस्ति कदाप्यस्यानीशत्वापत्तेः" इति श्रुतेः । मीमांसकाः कर्म्ममीमांसारताः कर्म्मेति "कर्म्मणा जायते नश्यति भयाभयसुखानि" इति श्रुतेः । उपासते सेवन्ते, सोऽयं त्रैलोक्यनाथः त्रिलोकीश्वरो हरिः वः युष्माकं वाञ्छितफलम् अभीष्टफलं विदधातु पूरयतु । अत्रैकस्य हरेः शिवादिरूपेणानेकधा कीर्त्तनादुल्ले-

तं रामं रावणारिं दशरथतनयं लक्ष्मणाग्रं गुणाढ्यं,
पूज्यं प्राज्यं प्रतापावलयितजलधिं सर्व्वसौभाग्यसिद्धिम् ।
विद्यानन्दैककन्दं कलिमलपटलध्वंसिनं सौम्यदेवं,
सर्वात्मानं नमामि त्रिभुवनशरणं प्रत्यहं निष्कलङ्कम् ॥ ११ ॥

एतौ द्वौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छिदौ,
वैदेहीकुचकुम्भकुङ्कुमरजःसान्द्रारुणाङ्काङ्कितौ ।

---

ख्योऽयमलङ्कारः । तदुक्तं दर्पणे—"क्वचित् भेदात् ग्रहीतॄणां विषयाणां तथा क्वचित् । एकस्यानेकधोल्लेखो यः स उल्लेख इष्यते" इति । शार्दूलविक्रीड़ितं वृत्तम् ॥ १० ॥

तमिति । तं प्रसिद्धं रावणारिं रावणशत्रुं, दशरथतनयं दाशरथिं, लक्ष्मणाग्रं लक्ष्मणाग्रजं, गुणैः धैर्य्यगाम्भीर्य्यादिभिः आढ्यः युक्तः तं,पूज्यम् अर्चनीयं,प्राज्यं प्रभूतं, भूमस्वरूपमित्यर्थः, प्रतापेन आवलयितः आवद्धः जलधिः समुद्रो येन तं, सर्वेषां सौभाग्यस्य सिद्धिर्यस्मात् तं सर्वसौभाग्यसिद्धिदमित्यर्थः, विद्यानन्दयोः चिदानन्दयोरेकमद्वितीयं कन्दं मूलं, कलिमलपटलध्वंसिनं कलियुगकृतपापचयनाशिनं, सौम्यदेवं सौम्यः शान्तमूर्त्तिर्दीव्यतीति देवश्चेति तं सर्वेषामात्मा आत्मभूतः तं, त्रिभुवनशरणं त्रिलोकरक्षकं, निष्कलङ्कम् अनघं, रम्यतेऽस्मिन्निति रमयति जगदिति वा तं रामं प्रत्यहं सततं नमामि वन्दे । स्रग्धरा वृत्तम् ॥ ११ ॥

एताविति । दशकण्ठस्य रावणस्य, कण्ठा एव कदलीकान्तारः रम्भातरुवनं तस्य, कान्तिच्छिदौ प्रभानाशिनौ रावणशिरश्छेदिनावित्यर्थः, वैदेह्याः सीतायाः कुचावेव कुम्भौ तयोः कुङ्कुमरजांसि कुङ्कमचूर्णानि तेषां सान्द्रेण घनेन अरुणेन रक्तेन

लोकत्राणविधानसाधुसवनप्रारम्भयूपौ भुजौ,
देयास्तामुरुविक्रमौ रघुपतेः श्रेयांसि भूयांसि वः ॥ १२ ॥
बालक्रीड़ितमिन्दुशेखरधनुर्भङ्गावधि, प्रह्वता
ताते काननसेवनावधि, कृपा सुग्रीवसख्यावधि ।
आज्ञा वारिधिबन्धनावधि, यशो लङ्केशनाशावधि,
श्रीरामस्य पुनातु लोकवशता जानक्युपेक्षावधि ॥ १३ ॥

---

अङ्केन चिह्नेन अङ्कितौ रञ्जितौ लोकानां जगतां त्राणविधानं रक्षणानुष्ठानमेव साधुसवनम् उत्तमयज्ञः तदेव प्रारभ्यते इति प्रारम्भः कर्म्म तत्र यूपौ पशुबन्धनार्थं दारुविशेषौ, अत्र पशवः लोककण्टका राक्षसा इति बोद्धव्यम् । अत एव उरुविक्रमौ महाविक्रमशालिनौ रघुपतेः रामस्य एतौ द्वौ भुजौ बाहू वः युष्माकं भूयांसि महान्ति श्रेयांसि मङ्गलानि देयास्तां दत्ताम् आशीर्लिङ् द्विवचनम् । रूपकालङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १२ ॥

बालक्रीड़ितमिति । श्रीरामस्य इन्दुशेखरस्य चन्द्रचूड़स्य धनुर्भङ्गः अवधिः शेषो यस्मिन् तत् क्रियाविशेषणम् ( एवं सर्व्वत्र ) बालक्रीड़ितं शैशवलीला, काननसेवनं वनवासः अवधिः यस्मिन् तत् यथा तथा ताते पितरि, "तातस्तु जनकः पिता" इत्यमरः, प्रह्वता नम्रता, पितृवश्यता पितुराज्ञापालनमिति यावत्, सुग्रीवे वानरेऽपीति भावः, सख्यम् अवधिः यस्मिन् तत् यथा तथा कृपा अनुकम्पा, वारिधेः समुद्रस्य बन्धनं नितरामसम्भवमिति भावः, अवधिर्यस्मिन् तत् यथा तथा आज्ञा शासनं, लङ्केशस्य रावणस्य, त्रिभुवनविजयिन इति भावः, नाशः संहारः अवधिर्यस्मिन् तत् यथा तथा यशः कीर्त्तिः, तथा जानक्याः

नान्द्यन्ते सूत्रधारः । [क]

वाल्मीकेरुपदेशतः स्वयमहो वक्ता हनूमान् कपिः,
श्रीरामस्य रघूद्वहस्य चरितं, सौम्या वयं नर्त्तकाः ।
गोष्ठी तावदियं समस्तसुमनःसङ्घेन संवेष्टिता,
तद्धीराः ! कुरुत प्रमोदमधुना वक्तास्मि रामायणम् ॥१४॥
राजासीत् स महारथो दशरथश्चण्डांशुवंशाग्रणीः,
तस्यासन् रमणीयकेलि(रूप)निलयास्तिस्रो महिष्यः शुभाः ।

---

प्राणाधिकाया इति भावः, उपेक्षा परित्यागः अवधिर्यस्मिन् तत् यथा तथा लोकवशता लोकरञ्जनं पुनातु पवित्रीकरोतु, सर्वानस्मानिति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १३ ॥

[क] नान्द्यन्ते इति । नान्दी पूर्वोक्ताशीर्वादरूपा तस्या अन्ते अवसाने सूत्रं धरतीति सूत्रधारः नाट्यप्रवर्त्तकानां प्रवरो नटविशेषः, आहेति क्रियाध्याहारेणान्वेति ।

वाल्मीकेरिति । वाल्मीकेः उपदेशतः शिक्षणात् हनूमान् कपिः वानरः स्वयं वक्ता कथयिता, अहो वानरस्यापि कवित्वमित्याश्चर्य्यमित्यर्थः । रघूद्वहस्य रघुवंशधुरन्धरस्य श्रीरामस्य चरितम् अतीव मनोहरमिति भावः, नर्त्तका अभिनेतारो वयं सौम्याः शोभनाः, कुशला इति यावत्, इयं तावत् गोष्ठी सभा समस्तानां समवेतानां सुमनसां सहृदयानां, विदुषामित्यर्थः, सङ्घेन समूहेन संवेष्टिता सम्पूरिता तत्तस्मात् नाट्योपयोगिसमग्रसामग्रीसंयोगादिति भावः, हे धीराः ! सुधियः ! अधुना प्रमोदम् आनन्दं कुरुतः अनुभवत, रामायणं रामचरितं वक्तास्मि वर्णयितास्मि । शार्दूलविक्रीड़ितं वृत्तम् ॥ १४ ॥

कथामुपक्षिपति राजेति । सः प्रसिद्धः चण्डांशोः सूर्य्यस्य

वीरांस्तांश्चतुरः सुतान् सुषुविरे चत्त्रानुरूपांस्तथा,
ज्येष्ठो राम इतः कनिष्ठभरतस्तस्यानुजो लक्ष्मणः ॥ १५ ॥
शत्रुघ्नो राजपुत्रस्तदनु समभवच्छत्रुनिघ्नैकवीरः,
सोऽयं स्नेहानुवृत्त्या भरतमनुगतः कैकयीसूनुमेव ॥
सौमित्री राममेवान्वगमदथ सदा धर्म्मकर्म्मप्रवीणः,
श्रीमद्दाशरथाः स्वयं सुररिपोरंशावतारा अमी ॥ १६ ॥

---

वंशे वंशस्य कुले कुलस्य वा अग्रणीः श्रेष्ठः, महारथः "आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नरः। शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥" इत्युक्तलक्षणः, दशरथो नामेत्यध्याहार्य्यं, राजा भूपतिरासीत्। तस्य राज्ञः रमणीयकेलिनिलयाः रमणीयक्रीड़ानिपुणा इत्यर्थः, कमनीयरूपनिलया इति पाठे रमणीयसौन्दर्य्यशालिन्य इत्यर्थः, तिस्रः शुभाः शोभनाः, महिष्यः पत्न्यः आसन् बभूवुः। ता महिष्यः चतुरः तथा चत्त्रानुरूपान् चत्त्रधर्मोपयोगिनो वीरान् शौर्य्यगुणसम्पन्नान् सुतान् पुत्रान् सुषुविरे प्रसूतवत्यः; तेषां ज्येष्ठोऽग्रजः रामः, इतः रामात् कनिष्ठः अनुजः भरतः, तस्य भरतस्य अनुजः लक्ष्मणः, तदनु तदनन्तरं शत्रुनिघ्नः शत्रुघाती अतएव एकवीरः अद्वितीयवीर्य्यसम्पन्नः राजपुत्रः शत्रुघ्नः समभवदिति सर्वत्रान्वेति। सोऽयं शत्रुघ्नः स्नेहानुवृत्त्या स्नेहस्यानुसरणेन कैकयीसूनुं भरतमेव अनुगतः, अथानन्तरं, तथेति भावः, धर्म्मकर्म्मप्रवीणः धर्म्मकार्य्यपरः सुमित्राया अपत्यं पुमान् सौमित्रिः लक्ष्मण इत्यर्थः, सदा सर्वस्मिन् काले राममेव अन्वगमत् अनुगतः। स्वयं साक्षात् सुररिपोः विष्णोः अंशावताराः अंशरूपेण उत्पन्नाः अमी श्रीमन्तः दाशरथाः दशरथतनयाः रामलक्ष्मण-

तेषां रामः कुशिकतनयप्रार्थितो यज्ञसिद्ध्यै,
तातस्याज्ञां शिरसि विदधल्लक्ष्मणेनानुयातः ।
पौरस्त्रीभिर्नयनकमलैः सादरं वीक्ष्यमाणः,
क्रव्यादालो( नां )निधनकुतुकी यज्ञभूमिं प्रतस्थे ॥ १७ ॥

ततः श्रीरामचन्द्रे तपोवनं प्रविशति वैतालिकवाक्यम् ।
विद्यां विशिष्टां विजयां जयाञ्च, सम्प्राप्य सम्यङ् ननु गाधिपुत्रात् ।
रक्षांसि हन्तुं क्रतुबन्धुबन्धुः, समागतः सम्प्रति रामभद्रः ॥ १८ ॥

---

भरतशत्रुघ्नाः, बभूविरे इति शेषः । पूर्ववृत्तं शार्दूलविक्रीडितम्, उत्तरं स्रग्धरारचितमिति द्रष्टव्यम् ॥ १५ ॥ १६ ॥

तेषामिति । तेषां चतुर्णां दाशरथानां मध्ये रामः यज्ञस्य क्रतोः सिद्ध्यै निर्विघ्नेन समाप्त्यर्थं कुशिकतनयेन विश्वामित्रेण प्रार्थितः, राजानमिति शेषः, तातस्य जनकस्य दशरथस्य आज्ञां "गच्छ विश्वामित्रेण सह अस्य यज्ञसिद्धये" इत्यादेशं शिरसि मूर्द्धनि विदधत् दधानः लक्ष्मणेन अनुयातः अनुगतः पौरस्त्रीभिः पुरवासिनीभिर्नारीभिः नयनकमलैः नेत्रसरोजैः सादरं सस्पृहं वीक्ष्यमाणः दृश्यमानः सन् क्रव्यादालीनां निशाचरसङ्घानां निधने वधे कुतुकी कौतुकवान्, समुत्सुक इत्यर्थः, क्रव्यादानां निधनकुतुकीति पाठे स एवार्थः, यज्ञभूमिं विश्वामित्रस्य यज्ञक्षेत्रं प्रतस्थे प्रचचाल । मन्दाक्रान्ता वृत्तं,"मन्दाक्रान्ताम्बुधि-रसनगैर्मोभनौ तौ गयुग्मम्" इति तल्लक्षणात् ॥ १७ ॥

विद्यामिति । सम्प्रति क्रतवो बन्धवः मित्राणि येषां ते क्रतुबन्धवः यज्ञशीला मुनय इत्यर्थः, तेषां बन्धुः प्रियः, सहाय इत्यर्थः, रामभद्रः गाधिसुतात् विश्वामित्रात् विशिष्टाम् उत्-कृष्टां विजयां जयाञ्च क्षुधाहारिणीं पिपासाहारिणीञ्चेति भावः,

मारीचं निजघान राक्षसचमूनाथं स्वयं राघवः,
सर्वेऽन्ये किल लक्ष्मणस्य विशिखैर्याताः कृतान्तालयम् ।
तोषं प्रापुरथो महर्षिसहिताः सर्वे पुनर्ब्राह्मणाः,
ताभ्यां संयुयुजुः शुभाशिषमतिस्फीताः समाप्तक्रियाः ॥ १९ ॥

हते रक्षःकुले तत्र रामेण विधिवत् क्रतौ ।
निर्वृत्ते कौशिकः प्रायात्ताभ्यां जनकपत्तनम् ॥ २० ॥

---

विद्यां बलामतिबलामिति रामायणपाठः । यथा—"क्षुत्-पिपासे न ते राम ! भविष्येते नृपात्मज ! । बलामतिबलाञ्चैव पठतस्तव राघव ॥" इति । सम्यक् सुष्ठु यथा तथा सम्प्राप्य अधिगम्य रक्षांसि निशाचरान्, यज्ञविघ्नकराणीति भावः, हन्तुं समागतः ननु समागत एव । उपजाति वृत्तम् ॥ १८ ॥

मारीचमिति ।—राघवः रामः स्वयं राक्षसीनां चमूनां सेनानां नाथम् अधिपं मारीचं निजघान विव्याधेत्यर्थः, विद्ध्वा निरास्थदिति यावत् । उत्तरत्र मारीचस्य मायामृगतयोपयोगित्वादत्र निपूर्वकाद्धन्तेर्लक्षणया निराकरणार्थत्वमिति बोध्यम् । अन्ये सर्वे राक्षसाः लक्ष्मणस्य विशिखैः शरैः कृतान्तालयं यमसदनं याताः किल गता एव, अथानन्तरं राक्षसरूपविघ्नशमनात् परमित्यर्थः, महर्षिभिः सहिताः सर्वे ब्राह्मणाः तोषम् आनन्दं प्रापुः लेभिरे, पुनः किञ्च अतिस्फीता अतिशयेन स्फूर्त्तिशालिनः समाप्ता क्रिया यज्ञानुष्ठानं यैः तथाभूताः सन्तः ताभ्यां रामलक्ष्मणाभ्यां शुभाशिषं संयुयुजुः चक्रुः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १९ ॥

हते इति ।—रामेण तत्र तस्मिन् रक्षसां कुले हते नाशिते ततश्च क्रतौ यज्ञकर्मणि विधिवत् यथाविधि निर्वृत्ते समाप्तिं

अथ मिथिलां प्रविशति रामे वैतालिकैः पठितम् ।
यो दत्तः कुशिकात्मजाय मुनये तातेन यज्ञोत्सव-
प्रत्यूहप्रशमाय, वर्त्मविपिने हत्वाऽहितां ताड़काम् ।
लब्ध्वास्त्राणि मुनेरवेक्ष्य च मखं तस्यानुगः कौतुकात्
सोऽयं सम्प्रति राघवो निमिपतेः प्राप्तः पुरीं सानुजः ॥ २१ ॥
आसीदुद्भटभूपतिप्रतिभटप्रोन्माथिविक्रान्तिको,
भूपः पङ्क्तिरथो विभावसुकुलप्रख्यातकेतुर्बली ।

---

गते सति कौशिकः विश्वामित्रः ताभ्यां रामलक्ष्मणाभ्यां, सहार्थे तृतीया, जनकपत्तनं जनकस्य पत्तनं नगरं, मिथिलामित्यर्थः, प्रायात् गतवान् । अनुष्टुब्वृत्तम् ॥ २० ॥

यो दत्त इति ।—यज्ञोत्सवस्य यज्ञरूपोत्सवकर्मणः प्रत्यूहः विघ्नः तस्य प्रशमाय शान्त्यर्थं तातेन पित्रा, "तातस्तु जनकः पिता" इत्यमरः, दशरथेनेति यावत्, यः मुनये कुशिकात्मजाय विश्वामित्राय दत्तः समर्पितः सोऽयं सानुजः सलक्ष्मणः राघवः रामः वर्त्मविपिने अरण्यमार्गे अहितां शत्रुभूतां ताड़कां हत्वा विनाश्य मुनेः विश्वामित्रात् अस्त्राणि लब्ध्वा अस्त्रविद्यां प्राप्य इत्यर्थः, तस्य मुनेः मखं यज्ञम् अवेक्ष्य दृष्ट्वा च कौतुकात् जनकपुरीदर्शने कौतूहलादित्यर्थः, अनुगः अनुगामी सन्, तस्य मुनेरिति भावः सम्प्रति अधुना निमिपतेः सीरध्वजस्य पुरीं राजधानीं मिथिलामित्यर्थः प्राप्तः गतः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २१ ॥

पाश्चात्यपुस्तकधृतपाठोऽत्रैव क्षेपणीयः ।

आसीदिति ।—उद्भटा उद्धता भूपतयः राजान एव प्रतिभटाः प्रतिवीराः तेषां प्रकर्षेण उन्माथिनी विध्वंसिनी

उर्वीविर्वरभूरिभारहृतये भूरिश्रवाः पुत्रतां,
यस्यार स्वमथो विधाय महितः पूर्णश्चतुर्धा विभुः ॥ २२ ॥
तेषामीश्वरतागुणैश्च जनुषा ज्यायानभूद्राघवो,
रामः सोऽप्यथ कौशिकेन मुनिना रक्षोभयात् याचितः ।
राजानं स यशोधनो नरपतिः प्रादात् सुतं दुःखितः,
तस्मै सोऽपि तमन्वगादनुगतः सौमित्रिणोच्चैर्मुदा ॥ २३ ॥

---

विक्रान्तिर्विभ्रमः यस्य तथोक्तः, "नद्यृतः कः" इति कप्रत्ययः । विभावसुः सूर्य्यः, "विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः" इत्यमरः ; तस्य कुलं वंशः तस्य तस्मिन् वा प्रख्यातः प्रसिद्धः केतुः ध्वजभूत इत्यर्थः, बली महाबलः पङ्क्तिरथः दशरथः नाम राजा आसीत् । अथ कियद्दिनानन्तरम् उर्वीविर्वराणां पृथिवीपाषण्डानां, राक्षसानामित्यर्थः, यो भूरिभारः महानुपद्रव इति यावत्, तस्य हृतये हरणाय पूर्णः विभुः सर्वशक्तिमान् महितः त्रिभुवनवन्दित इत्यर्थः, भूरिश्रवाः नारायणः स्वमात्मानं चतुर्धा विधाय राम-लक्ष्मण-भरत-शत्रुघ्नरूपेण विभज्येत्यर्थः, यस्य पङ्क्तिरथस्य पुत्रताम् आर प्राप । ऋ गताविति धातोर्लिट् । शार्दूलविक्रीड़ितं वृत्तम् ॥ २२ ॥

तेषामिति ।—तेषां चतुर्णां पुत्राणां मध्ये राघवो रघुकुलजो रामः ईश्वरतागुणैरैश्वरिकगुणातिरेकैः जनुषा जन्मना च, "जनुर्जननजन्मानि" इत्यमरः, अग्रोत्पत्त्या चेत्यर्थः, ज्यायान् ज्येष्ठः अभूत् । अथानन्तरं कौशिकेन मुनिना विश्वामित्रेण रक्षोभयात् राक्षसेभ्यो भयात् हेतोः राजानं दशरथं सोऽपि ज्येष्ठोऽपि नितरां प्रियत्वादत्याज्योऽपीति भावः, रामः याचितः

सुन्दस्त्रीदमनप्रमोदमुदितादास्थाय विद्योदयं,
रामः सत्यवतीसुतादथ गतस्तस्याश्रमं लीलया ।
क्लृप्ते कौशिकनन्दनेन च मखे तत्रागतान् राक्षसान्,
हत्वामूमुचदाशु भाविविदसौ मारीचमुग्राकृतिम् ॥ २४ ॥

---

प्रार्थितः ; यश एव धनं यस्य स यशोधनः यशोलिप्सुरिति भावः, स नरपतिः राजा दुःखितः सन्, पुत्रवियोगादिति भावः, तस्मै विश्वामित्राय सुतं रामं प्रादात् प्रदत्तवान् । सोऽपि रामः सौमित्रिणा सुमित्राया अपत्यं पुमान् तेन लक्ष्मणेनेत्यर्थः, अनुगतः समभिव्याहृतः सन् उच्चैर्महत्या मुदा हर्षेण तं मुनिम् अन्वगात् अनुजगाम । शार्दूलविक्रीड़ितं वृत्तम् ॥ २३ ॥

सुन्देति । सुन्दो नाम असुरः तस्य स्त्री ताड़का नाम गन्धर्वकन्या अगस्त्यशापात् राक्षसीभूता, तस्या दमनेन संहारेण यः प्रमोदः आनन्दः तेन मुदितात् उल्लसितात् सत्यवतीसुतात् सत्यवती नाम गाधेः पत्नी तस्य सुतात् विश्वामित्रादित्यर्थः, विद्यानां धनुर्वेदानामुदयः आगमः तम् आस्थाय प्राप्य अथ अनन्तरं तस्य कौशिकस्य आश्रमं गतोऽसौ रामः तत्र आश्रमे कौशिकनन्दनेन विश्वामित्रेण क्लृप्ते रचिते, प्रस्तुते इत्यर्थः, मखे यज्ञे "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः, आगतान्, तद्ध्वंसायेति भावः, राक्षसान् लीलया अनायासेन-हत्वा विनाश्य भाविवित् निमित्तभूतेनानेन मृगरूपेण छलयित्वा रावणः सीतां हरिष्यति ततोऽसौ मया संहार्य्य इति भविष्यज्ञः सन् आशु शीघ्रं, तदानीमित्यर्थः,उग्रा भीषणा आकृतिर्यस्य तं मारीचम् अमूमुचत् तत्याज, पारे समुद्रं बाणेनैकेन प्रचिक्षेपेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २४ ॥

पूर्णे यज्ञविधौ यियासुरभवद्रामेण सार्द्धं मुनिः,
सीतासंवरणागताखिलनृपव्याभग्नवीर्य्यश्रियम्।
श्रुत्वा तद्धनुरुत्सवञ्च मिथिलामास्थाय तेनाधिकं,
सत्कारैरुपलम्भितः पुनरगाच्चापाश्रितं मण्डलम्॥ २५॥

अथ जनकवाक्यम्।

असुरसुरभुजङ्गवानराणाम्,
अथ नरकिन्नरसिद्धचारणानाम्।
नमयति यदि कोऽपि चापमेतं,
मम दुहितुः स परिग्रहं करोतु॥ २६॥

---

पूर्णे इति। यज्ञविधौ पूर्णे निर्विघ्नेन समाप्तिं गते सति मुनिः रामेण सार्द्धं सीतायाः संवरणे समधिगमार्थमित्यर्थः, आगतानाम् अखिलानां सर्वेषां नृपाणां व्याभग्ना विशेषेण भङ्गं नीता वीर्य्यस्य श्रीः समृद्धिर्यस्मिन् तथाभूतं, सीतासंवरणागत-सर्व्वभूपतिदर्पघ्नमिति भावः, तस्य जनकस्य धनुरुत्सवं धनुर्यज्ञ-मित्यर्थः ; यद्वा तदेव धनुः तद्धनुः तस्य उत्सवः तं श्रुत्वा यियासुः जिगमिषुरभवत् जनकेनामन्त्रितो मिथिलामगच्छदित्यर्थः। मिथिलामास्थाय आसाद्य च तेन मैथिलेन जनकेन सत्कारैः सपर्य्याभिरधिकम् अत्यर्थं यथा तथा उपलम्भितः प्रत्युद्गतः सन् पुनः चापाश्रितं मण्डलं धनुर्यज्ञस्थानम् अगाच्च गतवांश्च। शार्दूलविक्रीडितं वृत्तम्॥ २५॥

असुरेति। असुराश्च सुराश्च भुजङ्गाः पन्नगाश्च वानराश्च तेषाम्, अथ किंवा नराश्च किन्नराश्च सिद्धाश्च चारणाश्च तेषां मध्ये, निर्द्धारे षष्ठी, कोऽपि जनः एतं पुरतः परिदृश्यमान-मित्यर्थः, चापं धनुः नमयति यदि, सः यः कश्चित् नमयितेत्यर्थः,

तच्छ्रुत्वा रावणदूतः शौष्कलः सकोपम्।

साद्धं हरेण हरवल्लभया गिरीशं,
हेरम्बषण्मुखवृषप्रमथावकीर्णम्।
कैलासमुद्धृतवतो दशकन्धरस्य,
कोयन्नु ते धनुषि दुर्मददोःपरीक्षा ? ॥ २७ ॥

तयोरुक्तिप्रत्युक्ती।

माहेश्वरं धनुः कुर्य्यादधिज्यञ्चेद्ददाम्यहम्।
गुरोः शम्भोर्धनुर्नो चेच्चूर्णतां नयति क्षणात् ॥ २८ ॥

---

मम दुहितुः सीतायाः परिग्रहं स्वीकारं करोतु। पुष्पिताग्रा वृत्तम्—"अयुजि न-युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणात् ॥ २६ ॥

सार्द्धमिति। हरेण महेश्वरेण हरवल्लभया गौर्य्या सार्द्धं हेरम्बः गणेशः षण्मुखः षडाननः कार्त्तिकेयः वृषः वाहनभूतः पुङ्गवः प्रमथाः पारिषदा नन्द्यादयः, "प्रमथाः स्युः पारिषदाः" इत्यमरः, तैरवकीर्णम् आवृतं, व्याप्तमित्यर्थः, कैलासम् उद्धृतवतः उत्क्षिप्तवतः, दशकन्धरस्य दशग्रीवस्य रावणस्य सम्बन्धे ते तव धनुषि दुर्मदानां मदोद्धतानां दोष्णां भुजानां कोयं परीक्षा ? नात्र तस्य तथाविधस्य क्षुद्रे कर्म्मणि बाहुबलं परीक्षणीयं कैलासोद्धरणेनैवास्य दण्डापूपायितत्वादिति भावः। वसन्त-तिलकं वृत्तम्।

माहेश्वरमिति। महेश्वरस्य इदं माहेश्वरम् इदं धनुः चेत् यदि अधिज्यम् अधिरूढमौर्वीकं कुर्य्यात्, रावण इति य इति वेति शेषः, तदाहं ददामि कन्यां, तस्मै इति शेषः; ददामि तामिति पाठान्तरम्। जनकोक्तिरियम्। गुरोरिष्टदेवस्य शम्भोः

दातव्येयमवश्यमेव दुहिता कस्मैचिदेनामसौ,
दोःक्रीड़ा-मशकीकृत-त्रिभुवनो लङ्कापतिर्याचते।
तत् किं मूढ़वदीक्षसे ननु कथागोष्ठीषु नः शासति,
तद्वृत्तानि परोरजांसि मुनयः प्राच्या मरीच्यादयः॥ २९ ॥

पुनश्च रामं प्रति।

समन्तादुत्तालैः सुरसहचरीचामरमरु-
त्तरङ्गैरुन्मीलद्भुजपरिघसौरभ्यशुचिना।

---

धनुः नो चेत् न भवति यदि, तदा क्षणात् अल्पेनैव क्षणेनेत्यर्थः, चूर्णतां नयति, रावण इति शेषः। शौष्कलोक्तिरियम्। अनुष्टुप् वृत्तम्॥ २८॥

एशियाट्यपुस्तकादुद्धृत्य योज्यते। दातव्येयमिति।

दातव्येति। इयं दुहिता कन्या अवश्यमेव कस्मैचित् दातव्या, न तु गृहे रक्षणीयेति भावः। तदेनाम् अवश्यदेयाम् असौ दोष्णां भुजानां, विंशतेरिति भावः, क्रीड़या मशकीकृतं मशकवत्कृतं, तुच्छीकृतमित्यर्थः, निर्जितमिति यावत्, त्रिभुवनं येन तथाभूतो लङ्कापतिः रावणः याचते प्रार्थयते। तत्तर्हि किं कथं मूढ़वत् बालिशवत् ईक्षसे पश्यसि, न किमपि विचारयसीति भावः, ननु वितर्के, प्राच्याः प्राक्तनाः, पुराणा इत्यर्थः, मरीच्यादयः मुनयः कथागोष्ठीषु कथाप्रस्तावेषु नः अस्मान् परोरजांसि रजोगुणातीतानि, सात्त्विकानीत्यर्थः, विशुद्धानीति यावत्; यद्वा रजोभ्यः भूरेणुभ्यः पराणि अधिकानि, असंख्यानीति यावत्, परोरजांसि तस्य रावणस्य वृत्तानि चरितानि शासति कथयन्ति। शास्तेर्लट्। शार्दूलविक्रीड़ितं वृत्तम्॥ २९॥

स्वयं पौलस्त्येन त्रिभुवनजिता चेतसि धृताम्
अरे राम ! त्वं मा जनकपतिपुत्रीमुपयथाः ॥ ३० ॥
शम्भोरावासमचलमुत्क्षेप्तुं भुजकौतुकी ।
माहेश्वरं धनुः क्रष्टुमर्हति दशकन्धरः ॥ २१ ॥

दूतः सखेदम् ।

माहेश्वरो दशग्रीवः क्षुद्राश्चान्ये महीभुजः ।

---

समन्तादिति। अरे राम! समन्तात् चतसृषु दिक्षु उत्तालैः उच्चलैः सुरसहचरीणां सुराङ्गनानां ये चामरमरुतः वीज्यमानचामरवाताः तेषां तरङ्गाः ऊर्म्मयः तैः उन्मीलतां स्फुरतां भुजा एव परिघा अर्गलविशेषाः तेषां सौरभ्येण सौगन्ध्येन शुचिरुज्ज्वलः तेन त्रिभुवनजिता त्रिलोकीजयिना पुलस्त्यो नाम महर्षिः ब्रह्मपुत्रः तस्यापत्यं पुमान् तेन पौलस्त्येन, एतेनास्य महाकुलीनत्वं द्योत्यते; रावणेन स्वयम् आत्मना चेतसि हृदये धृतां परिणयार्थं सङ्कल्पितामिति यावत्, जनकपतिपुत्रीं जानकीं त्वं मा उपयथाः न परिणय। उपात् यच्छतेः "उपयमो विवाहे" इत्यात्मनेपदम्। लुङि माङ्योगे अडागमाभावः। शिखरिणी वृत्तं—"रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥ ३० ॥

शम्भोरिति। शम्भोर्हरस्य आवासं वास्तव्यम् अचलं कैलासम्, उत्क्षेप्तुम् उद्धर्त्तुं भुजकौतुकी भुजकौतुकवान् दशकन्धरः दशाननः माहेश्वरं धनुः क्रष्टुम् आकर्षणेनाधिज्यं कर्त्तुमित्यर्थः, अर्हति अधिकरोति,योग्यो भवतीत्यर्थः। यः कैलासमुद्धृतवान् तस्य धनुषोऽस्य कर्षणमकिञ्चित्करमिति भावः। अनुष्टुप् वृत्तम् ॥२१॥

माहेश्वर इति। दशग्रीवो माहेश्वरः महेश्वरोपासकः,

पिनाकारोपणं शुल्कं हा सीते! किं भविष्यति ॥ २२ ॥

इत्युक्त्वा गते दूते ।

सभायां नृपयुक्तायां जनकस्य पुरोहितः ।
शतानन्दो वचः प्राह शृण्वतां सर्वभूभुजाम् ॥ २३ ॥

शृणुत जनकशुल्कं क्षत्रियाः! सर्व एते,
दशवदनभुजानां कुण्ठिता यत्र शक्तिः
नमयति धनुरैशं यः सहारोपणेन,
त्रिभुवनजयलक्ष्मीर्मैथिली तस्य दाराः ॥ २४ ॥

---

अत एवासौ तद्धनुरिदं न कर्षतीति भावः। अन्ये अपरे महीभुजो राजानः क्षुद्राः लघवः, अक्षमा इति यावत्, पिनाकस्य ऐश्वरधनुषः, "पिनाकोऽजगवं धनुः" इत्यमरः, आरोपणम् अधिज्यकरणं शुल्कं पणः, सीते! हा कष्टं किं भविष्यति? तव परिणये न कोऽप्युपायो दृश्यते इति तात्पर्य्यम्। अनुष्टुप् वृत्तम् ॥ २२ ॥

सभायामिति। नृपैः राजभिः युक्तायाम् अध्युषितायां सभायां जनकस्य पुरोहितः शतानन्दः शृण्वतां सर्वभूभुजां सर्वेषां राज्ञां, कर्म्मणि षष्ठी, वचः वक्ष्यमाणं प्राह उवाच। अनुष्टुप् वृत्तम् ॥ २३ ॥

शृणुतेति। एते सर्वे क्षत्रियाः! यूयं जनकस्य शुल्कं पणं शृणुत। जनककल्पाः क्षत्रियाः शुल्कमिते इति पाठे जनको रुद्रः, "लोकरुद्रनृपव्याजतातेषु जनकः पुमान्" इति धरणिः; तस्मादीषदूनाः जनककल्पाः रुद्रसदृशा इत्यर्थः, हे जनककल्पाः क्षत्रिया राजानः एते सभासदो यूयं शुल्कं पणं शृणुत। यत्र दशवदनस्य रावणस्य भुजानां शक्तिः सामर्थ्यं कुण्ठिता

नृपतिभिरगृहीते धनुषि जनकवाक्यम्।

आद्वीपान्तरतोऽप्यमी नृपतयः सर्वे समभ्यागताः,
कन्येयं कलधौतकोमलरुचिः कीर्त्तिस्तु नातः परा।
नाकृष्टं न च टङ्कितं, न नमितं, नोत्थापितं स्थानतः
केनापीदमहो! महद्धनुरतो निर्वीरमुर्वीतलम्॥ २५॥

---

सङ्कुचिता, तदित्यध्याहार्य्यम्, ऐशं माहेश्वरं धनुः यः आरोपणेन मौर्वीसंयोजनेन सह नमयति मौर्व्या संयोजयति नमयति चेत्यर्थः, सहारोपणेनेत्यत्र तदारोपणेनेति पाठे तत् ऐशं धनुः आरोपणेन मौर्वीसंयोजनेनेत्यर्थः; त्रिभुवनस्य जयलक्ष्मीः जयश्रीः मैथिली सीता, जानकीति पाठान्तरम्; तस्य धनुर्नमयितुः दाराः भार्य्या, भविष्यतीति शेषः। त्रिभुवनजयलक्ष्मीरित्यनेन मैथिलीपतेस्त्रिभुवनविजेतृत्वं भावीति ध्वन्यते। मालिनी वृत्तं—"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात्॥ २४॥

आद्वीपान्तरत इति। आद्वीपान्तरतः द्वीपान्तरात् आरभ्य, आद्वीपात् परत इति पाठान्तरम्, अपि अमी सर्वे नृपतयः राजानः समभ्यागताः समुपस्थिताः। इयं कन्या कलधौतं काञ्चनं, "कलधौतं रौप्यहेम्नोः" इत्यमरः, तद्वत् कोमला मृद्वी, मृदुलोज्ज्वलेति यावत्, रुचिः कान्तिः, अङ्गप्रभेत्यर्थः यस्याः तादृशी, अतः अस्मात् धनुर्भङ्गेन कन्यायास्तादृश्याः परिग्रहात् परा महती कीर्त्तिस्तु यशस्तु, न अस्तीति शेषः। कन्यायाः कलधौतकोमलरुचेः कीर्त्तेश्च लाभः पर इति पाठे कलधौतकोमलरुचेः कन्यायाः कीर्त्तेश्च यशसश्च परः महान् लाभः, कन्येयं कलधौतकोमलरुचिः कीर्त्तेश्च लाभोऽपर इत्यपि पाठान्तरम्।

सखीजनवाक्यम् ।

रामो दूर्वादलश्यामो जानकी कानकी लता ।
अनयोर्योग्य उद्वाहो धनुरैशं पणो महान् ॥ २६ ॥

अथ सीताया मनसि भावनम् ।

कमठपृष्ठकठोरमिदं धनुः,
मधुरमूर्त्तिरसौ रघुनन्दनः ।
कथमधिज्यमनेन विधीयताम्,
अहह ! तात ! पणस्तव दारुणः ॥ २७ ॥

---

अहो ! आश्चर्य्यम्, इदं महत् धनुः केनापि राज्ञा न आकृष्टम् ? तत्तिष्ठतु, न टङ्कितं न टङ्कारध्वनिमत् कृतम् ? तदप्यास्तां, न नमितं न नतीकृतम् ? तदपि तिष्ठतु, स्थानतः निवेशस्थानात् न उत्थापितं न उत्तोलितम् ? अपसारितं वा ? अतः हेतोः उर्वीतलं भूमण्डलं न सन्ति वीरा यस्मिन् तत् निर्वीरं वीरशून्यं, वर्त्तते इति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २५ ॥

राम इति । रामः दूर्वादलवत् श्यामः श्यामवर्णः, जानकी जनकनन्दिनी सीता कानकी काञ्चनी लता वल्ली, "वल्ली तु व्रततिर्लता" इत्यमरः, अनयोः सीतारामयोः उद्वाहः परिणयः योग्यः अनुरूपः, किन्तु ऐशं धनुः हरकार्म्मुकं, तद्भङ्ग इति भावः, महान् पणः शुल्कम्, असम्भवोऽयं विधिरिति भावः । अनुष्टुप् वृत्तम् ॥ २६ ॥

कमठेति । इदं धनुः कमठस्य कच्छपस्य पृष्ठवत् कठोरं कठिनं, दृढ़मित्यर्थः, दुर्भेद्यमिति भावः । असौ रघुनन्दनो रामः मधुरा मनोहारिणी कोमला वा मूर्त्तिर्यस्य तथोक्तः,

श्रीरामे लज्जां कुर्वति सीताया उत्साहं वर्द्धयन् लक्ष्मणः।
देव (वीर) श्रीरघुनाथ! किं बहुतया? दासोऽस्मि ते लक्ष्मणः,
मेर्वादीनपि भूधरान्न गणये जीर्णः पिनाकः कियान्?।
तन्मामादिश वीर! पश्य भवतो वाक्यादहं कौतुकी,
प्रोद्वर्त्तुं प्रचलायितुं नमयितुं भङ्क्तुं सदैनत् क्षमः॥ २८॥

---

सौम्यकलेवरः कोमलाङ्ग इत्यर्थः, नेदमनेन भेत्तुं शक्यते इति भावः। अनेन मधुरमूर्त्तिना रघुनन्दनेन इदं धनुः कथं केन प्रकारेण अधिज्यम् अधिरोपितगुणं विधीयतां क्रियताम्? न कथमपि अधिज्यं विधातुं सम्भाव्यते इति भावः, सम्भावनायां लोट्। अहहेति खेदे, हे तात! पितः! तव पणः शुल्कं दारुणः अप्रतिविधेय इति भावः; यद्वा तातपणः इत्येकं पदं, तातस्य पणः यो मे धनुरधिज्यं करिष्यति तस्मै सीतां दास्यामीत्येवंरूपः, स्तवे स्तुत्यां, संकीर्त्तनेऽपीत्यर्थः, "स्तवः स्तोत्रं स्तुतिर्नुतिः" इत्यमरः। दारुणः भीषणः, तव पणश्चेन्नाभविष्यत्तदाहं रामं पतिं प्राप्स्यामि इति भावः। द्रुतविलम्बितं वृत्तं— "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात्॥ २७॥

देवेति। हे देव श्रीरघुनाथ! वीरेति पाठान्तरे हे वीर श्रीरघुनाथ! बहुतया बाहुल्येन, विस्तारकथनेनेति भावः, किम्? न किमपि प्रयोजनमस्तीत्यर्थः, अस्मीत्यहमित्यर्थेऽव्ययम्, अस्मि अहं लक्ष्मणः ते तव दासः मेर्वादीन् सुमेरुप्रभृतीन् अपि भूधरान् पर्वतान् न गणये न लक्षये, दुर्धरत्वेनेति भावः। जीर्णः पुरातनः पिनाकोऽजगवम्, ऐश्वरं धनुरित्यर्थः, "पिनाकोऽजगवं धनुः" इत्यमरः। कियान्? अतितुच्छ इति भावः। हे वीर! तस्मात् माम् आदिश आज्ञापय, पश्य अवलोकय, अहं

म—२

गृहीतहरकोदण्डे रामे परिणयोन्मुखे ।
पस्पन्दे नयनं वामं जानकीजामदग्न्ययोः ॥ ३९ ॥

रामेण धनुषि गृहीते लक्ष्मणवाक्यम् ।

पृथ्वि ! स्थिरा भव, भुजङ्गम ! धारयैनां,
त्वं कूर्म्मराज ! तदिदं द्वितयं दधीथाः ।

---

भवतो वाक्यात् आदेशात् कौतुकी समुत्सुकः, सत्वरः सन्निति यावत् । वीर ! पश्य भवतो वाक्यादहं कौतुकीत्यत्र पश्य पश्य च वलं भृत्यस्य यत् कौतुकमिति पाठे भृत्यस्य मम बलं पश्य यच्च कौतुकं तत् पश्येत्यर्थः । अहम् एतत् धनुः प्रोद्धर्त्तुम् उत्तोलयितुं प्रचलायितुं स्थानान्तरं नेतुमित्यर्थः, नमयितुं नम्रीकर्त्तुं भङ्क्तुं खण्डयितुञ्च सदा सर्वस्मिन् काले क्षमः शक्तः । प्रोद्धर्त्तुं प्रतिनामितुं प्रचलितुं नेतुं निहन्तुं क्षम इति पाठे प्रतिनामितुं नम्रीकर्त्तुं प्रचलितुं गुणारोपणेन सञ्चालयितुं नेतुं स्थानान्तरं प्रापयितुं निहन्तुं नाशयितुं, भङ्क्तुमित्यर्थः, क्षमः शक्त इत्यर्थः । ममैवात्वेदृशी शक्तिः भवतां तु ईश्वराणां किमु वक्तव्यमिति ध्वन्यते । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३८ ॥

गृहीत इति । गृहीतं हरस्य कोदण्डः धनुर्येन तथोक्ते अतएव परिणयोन्मुखे सीतालाभाभिमुखे सति जानकी-जामदग्न्ययोः सीता-भार्गवयोः वामं नयनं पस्पन्दे अस्फुरत् । स्त्रीणां वामाक्षिस्पन्दनं शुभसूचकं पुंसान्तु अशुभसूचकमाह वसन्तराजः—"चक्षुर्वामं मृगदृशो जयकारि भृशं तथा । तदेव पुरुषस्यारात् स्फुरितं भयशंसनम् ॥" इति । अनुष्टुप् वृत्तम् ॥३९॥

पृथ्वीति । हे पृथ्वि ! त्वं स्थिरा भव न कम्पस्वेति भावः, स्थिरत्वादेः सिद्धत्वेऽपि उपप्लवसम्भावनया यत्रातिशयोक्ति-

दिक्कुञ्जराः ! कुरुत तत्त्रितये दिधीर्षाम्,
आर्य्यः करोति हरकार्मुकमाततज्यम् ॥ ४० ॥

पृथ्वी याति रसातलं, फणिपतिर्नम्रं फणामण्डलं
बिभ्रत् क्षुभ्यति, कूर्म्मराजसहिता (तो)दिक्कुञ्जराः कातराः।
आतन्वन्ति च बृंहितं, दिशि भटैः सार्द्धं धराधारिणः,
कम्पन्ते, रघुपुङ्गवे पुरजितः सज्यं धनुः कुर्वति ॥ ४१ ॥

---

रियमेवं सर्वत्र। हे भुजङ्गम ! नागराज ! एनां पृथ्वीं धारय, दार्व्येनेति भावः। हे कूर्म्मराज ! त्वं तदिदं द्वितयं पृथ्वी-भुजङ्गमावित्यर्थः, दधीथाः यत्नेन धारयेत्यर्थः। हे दिक्-कुञ्जराः ! दिग्गजाः ! यूयं तत्त्रितये तेषां पृथ्व्यादीनां त्रितये पृथ्वीभुजङ्गराजकूर्म्मराजेष्वित्यर्थः, दिधीर्षां धारणेच्छां, विशिष्ट-प्रयासेनेति भावः, कुरुत। कुत इति अध्याहार्य्यम् अत्र, आर्य्यः रामः हरकार्मुकम् ऐश्वरं धनुः आततज्यम् आरोपितमौर्वीकं करोति। आर्य्य इत्यत्र राम इति पाठान्तरम्। अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। वसन्ततिलकं वृत्तं—"ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात् ॥ ४० ॥

पृथ्वीति। रघुपुङ्गवे रघूणां श्रेष्ठे रामे पुरजितः त्रिपुरारे-र्हरस्य धनुः कार्मुकं सज्यं ज्यया सङ्गतं कुर्वति सति पृथ्वी भूः रसातलं पातालं याति गच्छति, रसातलमित्यत्र विनम्रता-मिति पाठे विनम्रताम् अधोनतिमित्यर्थः; फणिपतिः शेष-नागः फणामण्डलं नम्रम् अवनतं, पृथ्व्यवनमनादिति भावः, बिभ्रत् दधानः सन् क्षुभ्यति व्यथते। कूर्म्मराजेन कमठपतिना सहिताः दिक्कुञ्जराः दिग्गजाः कातराः सन्तः दिशि बृंहितं स्वं गर्जितं, "बृंहितं करिगर्जितम्" इत्यमरः, आतन्वन्ति कुर्वन्ति

तत्र नृपतीनां चेष्टा।

रामे रुद्रशरासनं तुलयति, स्मित्वा स्थितं पार्थिवैः,
शिञ्जासञ्जनतत्परे च हसितं दत्त्वा मिथस्तालिकाम्।
आरोप्य प्रचलाङ्गुलीकिसलयैर्म्लानं गुणास्फालने,
साराकर्षणभग्नपर्वणि पुनः सिंहासने मूर्च्छितम्॥ ४२॥

---

च। कूर्म्मराजसहित इति पाठे कूर्म्मराजसहितः फणिपतिरित्यस्य विशेषणम्। धराधारिणः पर्वताः "महीध्रशिखरिक्ष्माभृदहार्य्यधरपर्वताः" इत्यमरः। भटैः वीरैः, प्रतिपक्षीयैरिति भावः, सार्द्धं कम्पन्ते। वेपन्त इति पाठे स एवार्थः। अत्र चतुर्थपादवाक्यस्य पूर्वपादत्रयवाक्यानां हेतुत्वात् काव्यलिङ्गमलङ्कारः, "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति लक्षणात्। शार्दूलविक्रीड़ितं वृत्तम्॥ ४१॥

रामे इति। रामे रुद्रस्य हरस्य शरासनं धनुः तुलयति उद्धरति सति पार्थिवैः सभासदैः राजभिः स्मित्वा मन्दं हसित्वा, बालचापल्यमिति धियेति भावः, स्थितम् आसितम्। शिञ्जा मौर्वी तस्या तया वा आसञ्जनं संयोजनं तत्र तत्परः प्रवृत्तः तस्मिन् सति च मिथः परस्परं, "मिथोऽन्योऽन्ये रहस्यपि" इत्यमरः। तालिकां करतलध्वनिं दत्त्वा हसितम्, उन्मत्तोऽयमिति धियेति भावः। प्रचलाश्चञ्चला अङ्गुल्य एव किसलयाः प्रवालाः तैः आरोप्य मौर्वीं सङ्गमय्य गुणस्य ज्यायाः आस्फालयतीति आस्फालनः तस्मिन्, नन्द्यादित्वाद्नप्रत्ययः, ज्याकर्षणेन टङ्कारध्वनिमातन्वतीत्यर्थः, सति म्लानं मलिनत्वं प्राप्तमित्यर्थः। साराकर्षणेन दृढ़ाकर्षणेन भग्नानि पर्वाणि ग्रन्थयः येन तथा-

अन्येषामपि।

उत्क्षिप्तं सह कौशिकस्य पुलकैः, सार्द्धं मुखैर्नामितं
भूपानां, जनकस्य संशयधिया सार्कं समास्फालितम्।
वैदेही-मनसा समञ्च सहसा कृष्टं यतो भार्गव-
प्रौढ़ाहङ्कृतिकन्दलेन महता तद्भग्नमैशं धनुः॥ ४२॥

---

भूते सति पुनः सिंहासने मूर्च्छितं मोहः प्राप्त इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्॥ ४२॥

उत्क्षिप्तमिति। तत् ऐशं धनुः कौशिकस्य विश्वामित्रस्य पुलकैः आनन्दजरोमहर्षैः सह उत्क्षिप्तम् उत्थापितं, रामेणेति कर्त्तृपदं सर्वत्र अध्याहार्य्यम्। रामो धनुरुत्क्षिप्तवान् कौशिकस्य चाङ्गानि आनन्देन पुलकितानि अभवन्नित्यर्थः। भूपानां सभासदां प्रतिपक्षनृपाणां मुखैः सार्द्धं नामितम् अवनतीकृतं, धनुर्नमनकाल एव निपक्षनृपतीनां मुखानि लज्जया अवनतानि अभवन्नित्यर्थः। जनकस्य संशयधिया रामो धनुरधिज्यं कर्त्तुं पारयति न वेति सन्देहबुद्ध्या सार्कं सह समास्फालितं सन्ताड़ितं, धनुरास्फालनकाले एव जनकस्य सन्देहबुद्धिः निरस्तेति भावः। वैदेह्याः सीतायाः मनसा समं सह सहसा आकृष्टं, धनुराकर्षणं सीताया मनोहरणञ्च समकालमभूदित्यर्थः, ततः अनन्तरं महता घोरेण भार्गवस्य परशुरामस्य प्रौढ़ा या अहङ्कृतिः अहङ्कारः तया कन्दलः विवादः क्षत्रियविरोधः तेन, सहार्थे तृतीया, भार्गवप्रौढ़ाहङ्कृतिदुर्मदेन सहितमिति पाठे भार्गवस्य प्रौढ़ाहङ्कृतिदुर्मदेन उत्कटाहङ्कारगौरवेण सहितं सहेत्यर्थः, भग्नं खण्डितं, धनुर्भङ्गः परशुरामक्षत्रविरोधश्च परशुरामगर्वध्वंसश्च वा समकालमभूदिति भावः। सहोक्तिरलङ्कारः "सहार्थस्य बलादेकं

रुन्धन्नष्ट विधेः श्रुतीर्मुखरयन्नष्टौ दिशः, क्रोड़यन्
मूर्त्तीरष्ट महेश्वरस्य, दलयन्नष्टौ कुलक्ष्माभृतः।
अत्युच्चैर्बधिराणि पन्नगकुलान्यष्टौ च सम्पादयन्,
उन्मीलत्ययमार्य्यबाहुविदलत्कोदण्डकोलाहलः॥ ४४॥

---

यत्र स्यात् वाचकं द्वयोः। सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्॥" इति लक्षणात्। शार्दूलविक्रीड़ितं वृत्तम्॥ ४३॥

रुन्धन्निति। अयम् आर्य्यस्य रामस्य बाहुना भुजेन विदलतः भज्यमानस्य कोदण्डस्य धनुषः, ऐश्वरस्येति भावः, कोलाहलः कलरवः, आर्य्यदोर्बलदलत्कोदण्डकोलाहल इति पाठे आर्य्यस्य दोर्बलेन बाहुबलेन दलतः भज्यमानस्य कोदण्डस्य कोलाहल इत्यर्थः। विधेः ब्रह्मणः अष्ट श्रुतीः श्रोत्राणि श्रवणेन्द्रियाणि, चतुर्मुखत्वादिति भावः, रुन्धन् आवृण्वन्, बधिरयन्निति यावत्, अष्टौ दिशः मुखरयन् ध्वनयन् महेश्वरस्य अष्ट मूर्त्तीः—"भूर्जलं वह्निराकाशं वायुर्यज्वा शशी रविः। इत्यष्टौ मूर्त्तयः शम्भोः" इत्युक्ताः, क्रोड़यन् क्रोड़ीकुर्वन्, व्याप्नुवन्नित्यर्थः, मतभेदादियमुक्तिः। कुलक्ष्माभृतः कुलपर्वतान्, "विजयः कुमुदो नीलो निषधो हिमवानथ। जयन्तः कालनिषधो वाह्लीकोऽष्टौ दिगद्रयः॥" इत्युक्तान् दलयन् स्फोटयन्, अष्टौ च पन्नगकुलानि—"अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः। कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः॥" इत्युक्तानि अत्युच्चैः अत्यर्थं बधिराणि, अत्युच्चैरित्यत्र तान्यक्ष्णेति पाठे तानि प्रसिद्धानि पन्नगकुलानि अक्ष्णा चक्षुषा बधिराणि, तेषां चक्षुःश्रवत्वादिति भावः, सम्पादयन् कुर्वन् उन्मीलति विस्फुरति। शार्दूलविक्रीड़ितं वृत्तम्॥ ४४॥

अपि च ।

भिन्दन्निद्रां मुरारेः, सकलभुजभृतां त्रोटयन् शौर्य्यदर्पं,
छिन्दन् दिग्दन्तिकर्णांष्टलवलितफणं कम्पयन् सर्पराजम् ।
उद्दामोद्यद्गभीरप्रलयजलधरध्वानधिक्कारघोरः,
टङ्कारः क्षुभ्यमाणत्रिपुरहरधनुर्भङ्गभूराविरासीत् ॥ ४५ ॥

लोकान् सप्त निनादयन् हरिहयानुद्भ्रामयन् सप्त च,
ध्यानात् सप्त निवारयन् मुनिवरान्, सप्तार्णवान् क्षोभयन् ।
उन्मूलानि रसातलानि जनयन् सप्तापि, सम्भूतवान्,
श्रीमद्राघवबाहुदण्डविदलत्कोदण्डचण्डध्वनिः ॥ ४६ ॥

---

भिन्दन्निति । मुरारेः क्षीराब्धिशयितस्येति भावः, निद्रां भिन्दन् हरन्, सकलानां भुजभृतां बाहुशालिनां शौर्य्यदर्पं वीर्य्यगर्वं त्रोटयन् खण्डयन् दिग्दन्तिनां दिग्गजानां कर्णान् छिन्दन् क्षन्तन् टलेन चापल्येन वलिताः कम्पिताः फणा यस्य तं तथोक्तं सर्पराजं नागराजं कम्पयन् उद्दामम् उद्धतं यथा तथा उद्यतः उदयमानस्य गभीरस्य प्रलयजलधरस्य कल्पान्तमेघस्य ध्वानः गर्जितमिव धिक्कारेण विपक्षनृपतीन् प्रति लोकानां निर्भर्त्सनरवेण घोरः भीषणः, धीर इति पाठे गम्भीर इत्यर्थः, क्षुभ्यमाणस्य त्रिपुरहरस्य महेश्वरस्य धनुषः भङ्गात् भवतीति तथोक्तः हरधनुर्भङ्गजनित इत्यर्थः, टङ्कारः टंटमित्याकारशब्दविशेषः आविरासीत् उदतिष्ठत् । स्रग्धरा वृत्तम् ॥ ४५ ॥

लोकानिति । श्रीमतो राघवस्य रामस्य बाहुदण्डेन विदलतः भज्यमानस्य कोदण्डस्य धनुषः चण्डध्वनिः प्रचण्डनिस्वनः सप्त लोकान् भूर्भुवः-स्वर्जनतपोमहः-सत्याख्यान् निनादयन् शब्दाययन् सप्त हरिहयान् सूर्य्याश्वान् च उद-

यावत् कन्दुकलाञ्छनाञ्चितकरः शोणाब्जनालाकृतिः,
कौशल्यार्पितमङ्गलप्रतिसरो रामस्य दोःकन्दलः ।
किञ्चिच्चञ्चति तावदेव विदलच्चण्डीशचापोच्छल-
च्छब्दं कार्णवमग्नमेतदखिलं जातं त्रिलोकीतलम् ॥ ४७ ॥

---

भ्रामयन् उद्भ्रान्तान् कुर्वन् सप्त मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः वशिष्ठश्च इत्युक्तान् मुनिवरान् सप्तर्षीनित्यर्थः, ध्यानात् समाधेः निवारयन् योगभ्रष्टान् कुर्वन्नित्यर्थः, सप्त अर्णवान् सागरान्, लवणेक्षुसुरासर्पिर्दधिदुग्धजलमयानित्यर्थः, क्षोभयन् उद्वेलयन्, सप्त रसातलानि पातालखण्डान्, "अतलं वितलञ्चैव नितलञ्च क्रमादधः । महातलञ्च सुतलं पातालं सप्तकीर्त्तितम् ॥" उन्मूलानि विध्वस्तानीत्यर्थः, जनयन् सम्भूतवान् उद्बभौ इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ४६ ॥

यावदिति । कन्दुकानां गेन्दुकाख्यक्रीड़नद्रव्याणां लाञ्छनेन चिह्नेन, अनवरतक्रीड़नजनितेनेति भावः, अञ्चितः अलङ्कृतः करः पाणिर्यस्य तथाभूतः शोणं रक्तं यत् अब्जं पद्मं तस्य नालवत् आकृतिर्यस्य सः रक्तपद्मभूतस्य करस्य नालदण्डरूप इत्यर्थः, कौशल्यया स्वमात्रा अर्पितः निहितः मङ्गलप्रतिसरः माङ्गलिकहस्तसूत्रं यस्मिन् तथाविधः रामस्य दोःकन्दलः बाहुदण्डः यावत् किञ्चित् चञ्चति उल्लसति, वर्द्धते इति यावत्, तावदेव एतत् अखिलं समस्तं त्रिलोकीतलं त्रिभुवनं विदलतः भज्यमानात् चण्डीशस्य हरस्य चापात् धनुषः उच्छलन् उद्गच्छन् शब्दो यस्मिन् तत् अत एव कः काल एव अर्णवः कार्णवः कल्पान्तसागर इत्यर्थः, तस्मिन् मग्नं पतितं जातम् । शैशव एव रामो हरधनुर्बभञ्जेति तात्पर्य्यम् । शार्दूलविक्रीड़ितं वृत्तम् ॥४७॥

त्रुट्यद्भीमधनुःकठोरनिनदस्तत्राकरोत् विस्मयं,
त्रस्यद्वाजिरवेर्विमार्गगमनं शम्भोः शिरःकम्पनम् ।
दिग्दन्तिस्खलनं कुलाद्रिचलनं सप्तार्णवान्दोलनं,
वैदेहीमदनं मदान्धदमनं त्रैलोक्यसम्मोहनम् ॥ ४८ ॥
दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्गतः ( द्यतः )
टङ्कारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिमः ।

---

त्रुट्यदिति । त्रुट्यतो दलतः भीमस्य भीषणस्य धनुषः कठोरः दारुणः निनदः निस्वनः तत्र, स्थितानामिति शेषः, विस्मयम् आश्चर्य्यं, त्रस्यन्तः बिभ्यतः वाजिनोऽश्वा यस्य तस्य रवेः सूर्य्यस्य विमार्गगमनं विपरीतवर्त्मनि प्रयाणम्, अमार्गगमनमिति पाठे स एवार्थः, शम्भोर्हरस्य शिरःकम्पनं, दिग्दन्तिनां दिग्गजानां स्खलनं भयात् प्रद्रवणं, कुलाद्रीणां कुलाचलानां, "महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । हिमवान् पारिपात्रश्च सप्तैते कुलपर्वताः ॥" इत्युक्तानां चलनं स्थानात् च्यवनं, सप्तानाम् अर्णवानां सागराणां, लवणेक्षुसुरासर्पिर्दधिदुग्धजलमयानामित्यर्थः, आन्दोलनं नितरां सञ्चलनं, सप्तार्णवोन्मेलनमिति पाठे उन्मेलनम् अन्योन्यसम्मिश्रणमित्यर्थः, वैदेह्याः सीताया मदनं हर्षणं, मदान्धानां भुजबलदर्पितानामित्यर्थः, विपक्षभूपानामिति यावत्, दमनं दर्पोपशमनमित्यर्थः, किं बहुना त्रैलोक्यस्य त्रिभुवनस्य सम्मोहनं सम्मूर्च्छनम्, अकरोत् । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

दोर्दण्डेति । आर्य्यस्य रामस्य बालचरितं बाल्यलीला तस्य प्रस्तावना घोषणा तस्या डिण्डिमः वादित्रध्वनिविशेषभूतः दोर्दण्डेन बाहुदण्डेन अञ्चितस्य गृहीतस्य चन्द्रशेखरः शिवः

द्राक् पर्य्यस्तकपालसम्पुटमिलद्-ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ ४९ ॥
शम्भौ यद्गुणवल्लरीमुपनयत्याकृष्य कर्णान्तिकं,
भ्रश्यन्ति त्रिपुरावरोधसुदृशां कर्णोत्पलग्रन्थयः ।
स्वश्चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो
भिद्यन्ते बलयानि, दाशरथिना तद्भग्नमैशं धनुः ॥ ५० ॥

---

तस्य धनुर्दण्डस्य अवभङ्गः दलनं तस्मात् उन्नतः उत्थितः, उद्यत इति पाठे स एवार्थः, टङ्कारध्वनिः द्राक् झटिति, "द्राग् झटित्यञ्जसाह्नाय" इत्यमरः, पर्य्यस्तेन उपरि पतितेन कपालसम्पुटेन मिलतः सङ्गच्छतः ब्रह्माण्डमेव भाण्डं तस्य उदरे अभ्यन्तरे भ्राम्यन् पिण्डितः पिण्डाकारतां प्राप्तः चण्डिमा चण्डत्वं यस्य तथाभूतः सन् कथमद्यापि इदानीमपि न विश्राम्यति न निवर्त्तते ? अहो आश्चर्य्यम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४९ ॥

शम्भाविति । शम्भौ ईश्वरे यस्य गुणवल्लरीं मौर्वीमञ्जरीं कर्णान्तिकम् आकृष्य उपनयति आकर्णमाकर्षतीत्यर्थः, सति त्रिपुरावरोधसुदृशां त्रिपुरासुरान्तःपुरिकाणां कर्णोत्पलग्रन्थयः कर्णोत्पलरचनाः भ्रश्यन्ति स्खलन्ति, ततः इमां गुणवल्लरीम् उन्मुच्य स्वं निजं प्रकोष्ठकं मणिबन्धोपरिभागम् आस्फालयति ताड़यति सति तासां त्रिपुरावरोधसुदृशां वलयानि कङ्कणानि भिद्यन्ते स्वयमेव भेदं गच्छन्तीत्यर्थः, कर्म्मकर्त्तरि लट् । येन धनुषा त्रिपुरासुरजेता शम्भुरिति भावः, अहो आश्चर्य्यं दाशरथिना रामेण तत् ऐशम् ऐश्वरं धनुः भग्नं खण्डितम् । शार्दूलविक्रीड़ितं वृत्तम् ॥५० ॥

तद्ब्रह्ममातृवधपातकिमन्मथारि-
क्षत्रान्तकारि-करसङ्गमपापभीत्या।
ऐशं धनुर्निजपुरश्चरणाय नूनं,
देहं मुमोच रघुनन्दनपाणितीर्थे ॥ ५१ ॥

कोदण्डभङ्गान्मुखरीकृताशं वरं वरेण्यं जनकात्मजायाः।
अनन्यसामान्यधनुर्विलासं नमामि तं लोकविसर्पिकीर्त्तिम् ॥५२॥

---

तदिति। तत् ऐशं धनुः, ब्रह्मा च माता च ब्रह्ममातरौ तयोर्वधेन ब्रह्मवधेन मातृवधेन चेत्यर्थः, यथाक्रमं पातकिनौ पातित्यवन्तौ मन्मथारिः हरः क्षत्रान्तकारी परशुरामः तौ तयोः करसङ्गमेन हस्तसंसर्गेण यत् पापं संसर्गजनितपातित्यमित्यर्थः, तस्मात् भीतिः भयं तया हेतुना निजपुरश्चरणाय तत्तत्संसर्गजनितदुरितक्षयाय रघुनन्दनस्य रामस्य पाणिरेव तीर्थं पुण्यक्षेत्रं तस्मिन् देहं स्वरूपं मुमोच तत्याज। नूनमित्युत्प्रेक्षा —"भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति लक्षणात्। पुरा किल कस्मिंश्चिदपराधे रुद्रः क्रोधपरीतः पञ्चमुखस्य ब्रह्मणः शिरः एकं चिच्छेद ततश्च ब्रह्महत्या तमाचक्राम। तेनासौ ब्रह्मवधपातकीति पुराणवार्त्ता। भगवान् भार्गवश्च पितुरादेशात् मातरं जघान तेनासौ मातृवधपातकीति भारतीया कथात्रानुसन्धेया। धनुषश्चास्य शम्भुकरसंसर्गः प्रोक्त एव, भार्गवकरसंसर्गस्तु शम्भुशिष्यत्वात्तस्य कदाचित् धनुर्विद्याभ्यासे तद्धनुषा अस्त्रयोजनादिकरणादिति बोध्यम्। यथा कश्चित् पापी कृतपापशोधनाय गङ्गादितीर्थेषु देहं त्यजति तद्वदिति भावः। वसन्ततिलकं वृत्तम् ॥ ५१ ॥

कोदण्डेति। कोदण्डस्य धनुषः भङ्गात् मुखरीकृता

अथ शतानन्देनानीते दशरथे मिथिलां प्रविशति
वैतालिकैः पठितम्।

जनकनृपतिवाक्यं पुत्रसम्बन्धहृद्यं,
सरभसमुपगृह्य श्रीशतानन्दवक्त्रात्।
अपरमपि तनूजद्वन्द्वमादाय हृष्टः,
श्रुतरघुपतिशौर्य्यः कोशलेन्द्रोऽयमेति॥ ५२॥
आतिथ्यमानसहितं मिथिलाधिनाथः,
कृत्वाऽतिथिं दशरथं स्वयमातिथेयः।

---

ध्वनिता आशा दिशो येन तं वरेण्यं गुणश्रेष्ठं जनकात्मजायाः सीतायाः वरं परिणेतारम् अनन्यसामान्यः अलोकसाधारणः धनुषो विलासः व्यापारः यस्य तं लोकेषु जगत्सु विसर्पिणी विस्तारिणी कीर्त्तिर्यस्य तथोक्तं तं प्रसिद्धं रामं नमामि। ग्रन्थ-कर्त्तुरुक्तिरियम्। उपजाति वृत्तम्॥ ५२॥

जनकेति। अयं कोशलेन्द्रः दशरथः श्रीशतानन्दस्य स्वान-यनार्थमागतस्येति भावः, वक्त्रात् वदनात् सरभसं सहर्षं, "रभसो वेगहर्षयोः" इत्यमरः, पुत्रस्य रामस्य सम्बन्धेन हृद्यं मनोरमं जनकनृपतेः वाक्यम् उपगृह्य श्रुत्वेति यावत्, श्रुतं रघुपतेः रामस्य शौर्य्यं विक्रमो येन तथाभूतः अत एव हृष्टः प्रफुल्लः सन् अपरमपि तनूजद्वन्द्वं भरतशत्रुघ्नावित्यर्थः, आदाय गृहीत्वा एति आगच्छति। मालिनीवृत्तं—"ननमयययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात्॥ ५२॥

आतिथ्येति। अतिथिषु साधुः आतिथेयः मिथिलाधिनाथो जनकः स्वयम् अतिथिम् अभ्यागतम्, "अतिथिर्ना गृहागते" इत्यमरः, दशरथम् आतिथ्येन अतिथिसमुचितेन मानेन

स्वीये सुतेऽप्यथ कुशध्वजकन्यके च,
प्रीत्या ददौ विधिवदेव तदात्मजेभ्यः ॥ ५४ ॥
निस्वानमर्दलरसालगभीरभेरी-
टङ्कारतालवरकाहलनादजालैः ।
पूर्णं बभूव धरणीगगनान्तरालं,
पाणिग्रहे रघुपतेर्जनकात्मजायाः ॥ ५५ ॥
वैवाहिकं कुशिकनन्दनजामदग्न्य-
वाल्मीकिगौतमवशिष्ठपुरोहिताद्यैः ।

---

सम्मानेन सहितं कृत्वा, आतिथ्येन सत्कृत्येत्यर्थः, प्रीत्या आनन्देन तदात्मजेभ्यः तस्य दशरथस्य आत्मजेभ्यः पुत्रेभ्यः, रामादिभ्यः चतुर्भ्यः इति शेषः, स्वीये सुते निजकन्ये सीतोर्म्मिले इत्यर्थः, अपि अथानन्तरं कुशध्वजस्य स्वभ्रातुः कन्यके माण्डवीश्रुत-कीर्त्ती च विधिवदेव यथाविधानमेव ददौ, रामाय सीतां लक्ष्मणाय ऊर्म्मिलां भरताय माण्डवीं शत्रुघ्नाय श्रुतकीर्त्तिं दत्त-वानित्यर्थः । वसन्ततिलकं वृत्तम् ॥ ५४ ॥

निस्वानेति । रघुपतेः रामस्य कर्त्तुः जनकात्मजाया जानक्याः कर्म्मभूताया पाणिग्रहे विवाहे धरणी-गगनान्तरालं पृथिवीवियदन्तरं नितरां स्वानो येषां ते निस्वनाः महास्वना इत्यर्थः, तेषां मर्दलानां रसालानां वाद्यभेदानां गभीराणां गम्भीरं ध्वनन्तीनां भेरीणां तदाख्यवादित्राणां टङ्काराः, झङ्का-रेति पाठे झङ्काराः, तथा तालवराणां, तालरवेति पाठे तालानां वाद्यभेदानां रवाः, काहलानां वाद्यभेदानां नादाः शब्दाः तेषां जालैः समूहैः पूर्णं व्याप्तं बभूव । वसन्ततिलकं वृत्तम् ॥५५॥

रामो विधिं परिसमाप्य सहानुजैस्तु,
तेभ्यो ददौ बहुवसूनि तिलांश्च गाश्च ॥ ५६ ॥
रघुजनकमहीन्द्रयोस्तदानीम्,
अभवदपत्यविवाहमङ्गलश्रीः ।
त्रिभुवनजनता ननर्त्त यत्र,
प्रमदमवाप्य मनोरथव्यतीतम् ॥ ५७ ॥
सीतां श्रीरघुनन्दनोऽथ भरतः कौशध्वजीं माण्डवीं,
सौमित्रिः शतपत्रशत्रुवदनां सीतानुजामूर्मिलाम् ।

---

वैवाहिकमिति ।—रामस्तु अनुजैः सह कुशिकनन्दनः विश्वामित्रः जामदग्न्यः परशुरामः, अत्र जामदग्नेरति पाठश्चिन्त्यः, तेन सह अयोध्याप्रयाणकाले सङ्गतेर्वक्ष्यमाणत्वादिति, वामदेवेति पाठो युक्त इति सुधीभिर्विभाव्यम् । वाल्मीकिः गौतमः गोतमपुत्रः शतानन्दः तथा वशिष्ठ एव पुरोहितः आद्यो मुख्यः येषां तैः मुनिभिरिति शेषः, वैवाहिकं विधिं पाणिग्रहसंस्कारं परिसमाप्य निर्वाह्य तेभ्यः कुशिकनन्दनादिभ्यः बह्वनि वसूनि धनानि तिलांश्च गाश्च ददौ प्रदत्तवान् । रामो विधिं सह समाप्य सलक्ष्मणस्तैरानन्दयन् जनकजां स्वपुरं जगामेति पाठान्तरम् । वसन्ततिलकं वृत्तम् ॥ ५६ ॥

रघिति । तदानीं तस्मिन् काले रघुजनकमहीन्द्रयोः राघवजनकयोः, दशरथस्य जनकस्य चेत्यर्थः, अपत्यानां पुत्राणां पुत्रीणाञ्च विवाह एव मङ्गलं माङ्गलिकव्यापारः तस्य श्रीः शोभा अभवत् । यत्र श्रियां त्रिभुवनजनता त्रिलोकीलोकवर्गः मनोरथव्यतीतम् अभिलाषातीतं प्रमदम् आनन्दम् अवाप्य प्राप्य ननर्त्त नृत्यं चकार । पुष्पिताग्रा वृत्तम् ॥ ५७ ॥

सीतामिति । श्रीरघुनन्दनः रामः सीताम् अथानन्तरं

शत्रुघ्नः श्रुतकीर्त्तिमुत्तमगुणां कौशध्वजीमूढ़वान्,
तानादाय कृतोत्सवो दशरथः स्वीयां पुरीं प्रस्थितः ॥ ५८ ॥
एष श्रील-हनूमता विरचिते श्रीमन्महानाटके,
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्गते विक्रमैः ।
मिश्र-श्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते,
यातोऽङ्कः प्रथमो विदेहतनयालाभाभिधानो महान् ॥ ५९ ॥

इति प्रथमोऽङ्कः समाप्तः ॥ १ ॥

---

कुशध्वजस्यापत्यं स्त्री कौशध्वजी तां कुशध्वजपुत्रीमित्यर्थः, माण्डवीं, सौमित्रिः सुमित्रानन्दनो लक्ष्मणः शतपत्राणां पद्मानां शत्रुः चन्द्रः तद्वत् वदनं यस्याः तां, चन्द्रमुखीमित्यर्थः, सीताया अनुजा कनिष्ठा ताम् ऊर्मिलां, शत्रुघ्नः उत्तमगुणाम् उत्कृष्ट-गुणशालिनीं कौशध्वजीं कुशध्वजस्य कनिष्ठां कन्यां श्रुत-कीर्त्तिम् ऊढ़वान् परिणीतवान् । दशरथः कृतोत्सवः पुत्राणां विवाहमङ्गलाय सम्पादितप्रमोदव्यापारः सन् तान् पुत्रान् आदाय स्वीयां पुरीम् अयोध्यां प्रस्थितः प्रायात् । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ५८ ॥

एष इति । श्रीर्विद्यतेऽस्येति श्रीलः श्रीमान् स च असौ हनूमांश्चेति श्रील-हनूमान् तेन विरचिते प्रणीते विक्रमैः परा-क्रमैः प्रत्युद्गते उत्कटतामधिरूढ़े वीर-श्रीयुतरामचन्द्रस्य चरितं यस्मिन् तथोक्ते मिश्रः मिश्रोपाधिकः श्रीमधुसूदनः तेन कविना सन्दर्भ्य संग्रह्य सज्जीकृते अलङ्कृते श्रीमत् शोभायुक्तं महत् नाटकं रूपककाव्यविशेषः तस्मिन् श्रीमन्महानाटके विदेहतनया जानकी तस्या लाभः प्राप्तिः अभिधानम् आख्या यस्य तथोक्तः महान् प्रथमः आद्यः अङ्कः तदाख्यो विभाग-

विशेषः यातः समाप्तः । नाटकलक्षणमुक्तं दर्पणे—"नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् । विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः ॥ सुखदुःखसमुद्भूति नानारसनिरन्तरम् । पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः ॥ एक एव भवेदङ्गी शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे कार्य्यं निर्वहणेऽद्भुतम् ॥ चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः । गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितम् ॥" इति । अङ्कलक्षणञ्च तत्रैवोक्तम्—"प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः । भवेदगूढ़शब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ विच्छिन्नावान्तरैकार्थः, किञ्चित् संलग्नविन्दुकः । युक्तो न बहुभिः कार्य्यैर्वीजसंहृतिमान्न च ॥ नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् । आवश्यकानां कार्य्याणामविरोधात् विनिर्मितः ॥ नानेकदिननिर्वर्त्त्यकथया सम्प्रयोजितः । आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥ दूराह्वानं बधो युद्धं राज्यदेशादिविप्लवः । विवाहो भोजनं शापोत्सर्गौ मृत्युरतं तथा । दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीड़ाकरञ्च यत् । शयनाधरपानादि नगराद्युपरोधनम् ॥ स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । देवीपरिजनादीनाममात्यवणिजामपि ॥ प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः । अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः ॥" इति । महानाटकलक्षणं यथा—"एतदेव यदा सर्वैः पताकास्थानकैर्युतम् । अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥ शार्दूलविक्रीड़ितं वृत्तम् ॥ ५८ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
महानाटकप्रथमाङ्कव्याख्या समाप्ता ॥ १ ॥

---

# द्वितीयोऽङ्कः ।

जामदग्न्यः । त्रुट्यद्-भैरवधनुः-कोलाहलामर्षमूर्च्छितः
प्रलयमारुतोद्भूत-कल्पान्तानलवत्-प्रदीप्तरोषानलः । (क)

अथ पथि परशुरामेण सह संसर्गः ।

यत् बभञ्ज जनकात्मजाकृते राघवः पशुपतेर्महद्धनुः ।
तद्ध्वनिश्रवणरोषितस्त्वरन्नाजगाम जमदग्निजो मुनिः ॥ १ ॥

लक्ष्मणः श्रीरामं प्रति परशुरामं स्मारयति ।

कुर्वन् कोपादुदञ्चद्द्रविकिरणसटापाटलैर्दृष्टिपातैः,
अद्यापि क्षत्रकण्ठच्युतरुधिरसरित्सिक्तधारं कुठारम् ।
तीव्रैर्निश्वासवातैः पुनरपि भुवनोत्पातमासूचयन् द्राक्,
गर्जन्मौर्वीक-चापस्त्रिभुवनविजयी जामदग्न्योऽयमेति ॥ २ ॥

---

(क) त्रुट्यदिति । त्रुट्यतो भज्यमानस्य भैरवस्य भीषणस्य धनुषः कोलाहलेन भङ्गस्वनेन यः अमर्षः क्रोधः तेन मूर्च्छितः अन्ध इति यावत्, प्रलयमारुतेन युगान्तवातेन उद्भूत उत्थितः यः कल्पान्तानलः प्रलयाग्निः तद्वत् प्रदीप्तः रोषानलः क्रोधाग्नि-र्यस्य तथाभूतः, जामदग्न्यः परशुरामः प्रविशति इति यावत् ।

यदिति । राघवो रामः जनकात्मजाकृते सीतालाभार्थं पशु-पतेः हरस्य यत् महत् धनुः कार्मुकं बभञ्ज बिभेद, तस्य धनुषः ध्वनेः भङ्गरवस्य श्रवणेन रोषितः कोपितः जमदग्निजः जम-दग्नेर्मुनेर्जातः मुनिर्भार्गवः त्वरन् त्वरावान् सन् आजगाम । तद्धनुर्गुणरवेण रोषितस्त्वाजगामेति पाठे तस्य धनुषः गुणरवेण मौर्वीघोषेण रोषितस्तु कोपित एवेत्यर्थः, तुशब्दोऽवधारणार्थः । रथोद्धता वृत्तं "रात्परैर्नरलगैरथोद्धता" इति तल्लक्षणात् ॥ १ ॥

अपि च ।

चूड़ाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो-
भस्मस्निग्धपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।

---

कुर्वन्निति । अयं त्रिभुवनविजयी जामदग्न्यः गर्जन्ती मौर्वी ज्या यस्य तादृशं चापं यस्य तथोक्तः, "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । कोपात् उदञ्चन्तः निर्गच्छन्तः रविकिरण-सटावत् सूर्य्यरश्मिपरम्परावत् पाटला रक्ताः तैः दृष्टिपातैः अद्यापि कुठारं परशुं क्षत्राणां कण्ठेभ्यः च्युतानि निर्गलितानि रुधिराणि रक्तान्येव सरितः नद्यः ताभिः सिक्ता क्षालिता धारा यस्य तथाभूतं कुर्वन् तथा तीव्रैः उग्रैः निश्वासवातैः पुनरपि भुवनानाम् उत्पातम् उपप्लवम् आसूचयन् व्यञ्जयन् सन् द्राक् झटिति एति आगच्छति । स्रग्धरा वृत्तम् ॥ २ ॥

तमेव विशिनष्टि चूड़ेति । पृष्ठतः अभितः पृष्ठस्य उभयोः पार्श्वयोरित्यर्थः, चूड़या शिखया चुम्बितः स्पृष्टः कङ्कपत्रः शरो यस्य तथोक्तं तूणीद्वयं भस्मना स्निग्धं पवित्रं यज्ञोपवीतं लाञ्छनं चिह्नं यस्य तथोक्तं, भस्मस्तोमपवित्रलाञ्छनमिति पाठे भस्मनां स्तोमेन निचयेन पवित्रं यज्ञोपवीतं विशुद्धं वा लाञ्छनं चिह्नं यस्य तथोक्तमित्यर्थः । भस्मस्निग्धपवित्रलाञ्छितमिति पाठान्तरे भस्मना स्निग्धं यत् पवित्रं यज्ञोपवीतं तेन लाञ्छितम् अलङ्कृतमित्यर्थः, उरः वक्षःस्थलं, रुरुर्मृगविशेषः तत्सम्बन्धिनी रौरवी तां त्वचं चर्म्म, "कार्ष्णरौरवव्याघ्राणि चर्म्माणि ब्रह्म-चारिणः । वसीरन्नानुपूर्व्वेण शाणक्षौमाविकानि च ॥" इति मनुना क्षत्रियब्रह्मचारिणां रौरवचर्माच्छादनस्य अस्य च क्षत्रिया-गर्भजत्वेन ब्रह्मौरसत्वेन च क्षत्रियब्रह्मोभयधर्मित्वस्योक्तत्वा-

मौञ्ज्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठिकं,
पाणौ कार्मुकमक्षसूत्रवलयं दण्डं परं पैप्पलम् ॥ २ ॥
आजन्मब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमान-
ज्याघातश्रेणिसंज्ञान्तरितवसुमतीचक्रजैत्रप्रशस्तिः ।

---

दिति बोध्यम् । मौञ्ज्या मुञ्जमय्या मेखलया विप्रब्रह्मचारि-धार्य्यत्वेनोक्तया, उक्तञ्च मनुना—"मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला" इति । नियन्त्रितं निबद्धं माञ्जिष्ठिकं मञ्जिष्ठारागेण रक्तम् अधोवासः परिधेयं वसनं, "ब्रह्मव्रतधरो वासो वसानो रक्तमुत्तमम्" इति पराशरवचनात् । पाणौ करे, वामे दक्षिणे च इति शेषः, कार्मुकं धनुः, अक्षसूत्रवलयं जप-मालिकां परमन्यं पैप्पलम् आश्वत्थं दण्डम्, "बिभृयात् पैप्पलं दण्डं ब्रह्मव्रतधरः सदा" इति वचनात्, धत्ते धारयति । 'दण्डोऽपरः पैप्पलः' इति पाठे पिप्पलो ब्रह्मसूत्रमस्यास्तीति पैप्पलः ब्रह्मसूत्रवानित्यर्थः, अर्शआदित्वादच्प्रत्ययः, ततः स्वार्थे तद्धितः । "अश्वत्थे ब्रह्मसूत्रे च पिप्पलोऽस्त्री गुणिष्वपि" इति धरणिः । अपरः नास्ति परं प्रधानं यस्मात् सोऽपरः अद्वितीय इत्यर्थः, यद्वा अपरः अन्यः यमाद्भिन्न इत्यर्थः, दण्डयतीति दण्डः दण्डयिता दण्डधरः अन्तक इति यावत्, मुनिविशेषणम् । यद्वा अपरोऽन्यः पैप्पलः दण्डः वर्त्तते अस्येत्यध्याहृत्य व्याख्येयः । अत्रातिसमुच्चयाख्योऽयमलङ्कारः । "पदार्थानामनेकेषां यत्रैकस्मिन् निबन्धनम् । एकया क्रियया विज्ञैः स प्रोक्तोऽति-समुच्चयः ॥" इत्युक्तेः । अत्र विरुद्धयोरपि वीरशान्तयोरेकत्र समावेशो न दोषाय, उक्तञ्च, "युक्त्या कृतोऽपि संयोगस्तयोर्वाढ़ं न दूष्यति" इति । शार्दूलविक्रीड़ितं वृत्तम् ॥ २ ॥

वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्ष्णुवानः पृषत्कान् ।
प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ॥ ४ ॥
सोऽयं सप्तसमुद्रमुद्रितमही येनार्जुनादुद्धृता,
छित्त्वा भैरवसङ्गरेऽतिजरठं कण्ठं कुठाराञ्चलैः ।
रेवानीरनिरोधहेतुगहनं बाह्वोः सहस्रं जवात्,
खण्डं खण्डमखण्डयत् पितृवधामर्षेण वर्षीयसा ॥ ५ ॥

---

आजन्मेति । आजन्मब्रह्मचारी यावज्जीवं ब्रह्मचर्य्यव्रतधरः, नैष्ठिकब्रह्मचारीत्यर्थः, पृथुलौ मांसलौ भुजौ एव शिलास्तम्भौ तयोर्विभ्राजमाना विराजमाना या ज्याघातश्रेणिः तस्याः संज्ञया सूचनया, "नाम-सूचनयोः संज्ञा" इति विश्वः, सङ्केतेनेत्यर्थः, तद्व्याजेनेति भावः, अन्तरिता व्यवहिता, ज्ञापितेति यावत्, वसुमतीचक्रस्य जैत्री जयसूचिका प्रशस्तिः प्रशंसालिपिर्येन तथोक्तः घनानि दृढ़ानि अस्त्राणि शत्रुप्रहितानीति भावः, तेषां व्रणैः क्षतैः ये किणाः मांसास्रग्विवर्त्तविशेषाः, "मांसास्रग्भरणं किणः" इति धरणिः । तैः कठिनं तस्मिन् वक्षःपीठे पृषत्कान् बाणान् संक्ष्णुवानः तीक्ष्णीकुर्वन् राजन्यगोष्ठ्यः क्षत्रियसमाजा एव वनगजाः तेषां मृगया हननव्यापार इत्यर्थः, तस्यां कौतुकी कौतूहलवान् जामदग्न्यः प्राप्तः उपस्थितः । अत्रापह्नुतिरूपकयोः संसृष्टिः । स्रग्धरा वृत्तम् ॥ ४ ॥

सोऽयमिति । येन जामदग्न्येन सप्तभिः समुद्रैः मुद्रिता परिवेष्टिता सप्तसमुद्रमुद्रिता सा चासौ मही चेति सा सप्तसागरसहिता पृथिवीत्यर्थः, उद्धृता आहृता । यस्येत्यध्याहृत्य व्याख्येयं, यश्च जामदग्न्यः वर्षीयसा अतिप्रवृद्धेन पितृवधामर्षेण पितृवधजनितक्रोधेन भैरवसङ्गरे अतिभीषणे रणे कुठाराञ्चलैः

येन त्रिःसप्तकृत्वो नृपवहलवसामांसमस्तिष्कपङ्क-
प्राग्भारेऽकारि भूरिच्युतरुधिरसरिद्वारिपूरेऽभिषेकः ।
यस्य स्त्रीबालवृद्धावधिनिधननिधौ निर्दयो विश्रुतोऽसौ,
राजन्योच्चांसकूटक्रथनपटुरटद्घोरधारः कुठारः ॥ ६ ॥

---

परशुधाराभिः अतिजरठम् अतिकठिनं काण्डं छित्त्वा रेवाया नर्मदाया नद्याः, "रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका" इत्यमरः । नीराणां जलानां निरोधस्य अवरोधस्य हेतुः कारणं गहनं निविड़ं बाहोः सहस्रं भुजसहस्रं, कार्त्तवीर्य्यस्येति शेषः, जवात् वेगात् खण्डं खण्डं यथा तथा अखण्डयत् चिच्छेद अयं सः जामदग्न्यः आगच्छतीत्यनेनान्वयः । पुरा कार्त्तवीर्य्यः रेवासरिति स्त्रीभिः सह क्रीड़न् तत्प्रवाहं भुजैरवरुरोधेति पुराणम् । सप्तसमुद्रमुद्रितमहीयस्यार्जुनस्योद्धतम् । कुठारेण यः । बाहुन् सहस्रम् । काण्डं काण्डमखण्डयदिति पाठे यः कुठारेण सप्तभिः समुद्रैः मुद्रिता वेष्टिता या मही तां याति गच्छति प्राप्नोति अधिकरोतीति यावत्, गत्यर्थानां प्राप्त्यर्थत्वस्योक्तत्वादिति भावः, सः तस्य, जनजनादिति डप्रत्ययः । अर्जुनस्य कार्त्तवीर्य्यस्य भैरवसङ्गरे दारुणे संग्रामे उद्धतम् अनम्रम् अतिजरठम् अतिकर्कशं, "समौ जरठकर्कशौ" इति विश्वः । काण्डं छित्त्वा सहस्रं बाहून् काण्डं काण्डं प्रतिपर्वेत्यर्थः, अखण्डयदित्यर्थः । अस्य पितृवधकथा महाभारतेऽनुसन्धेया । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५ ॥

येनेति । येन जामदग्न्येन त्रिःसप्तःकृत्वः एकविंशतिवारानित्यर्थः, नृपाणां क्षत्रियाणां वहलानि वसामेदांसि मांसानि मस्तिष्काणि शीर्षस्थघृताकाराः पदार्थाः तान्येव पङ्कानि

यत्राक्रामति सङ्गराङ्गनभुवं दुर्वारधारास्खलत्-
कुप्यत्क्षत्रकिशोरकण्ठरुधिरैर्नीरेणुका भूरभूत्।
तादृग्-वीरवरस्वयंवरपर-स्वर्लोककन्याकर-
क्रीड़ापुष्करदामरेणुभिरभूत् द्यौरेव रेणूत्कटा॥ ७॥

---

तेषां प्राग्भारः विस्तारः यस्मिन् तादृशे,"शीर्षण्यमांसं मस्तिष्कम्" इति "प्राग्भारव्रजसम्मर्दाः" इति च विश्वः। भूरीणि प्रभूतानि च्युतानि रुधिराण्येव सरितो वारीणि तेषां पूरे प्रवाहे अभिषेकः स्नानम् अकारि कृतः, यस्य असौ कुठारः परशुः स्त्रियो बालाः वृद्धाश्च अवधयो येषां तेषां, क्षत्रियजात्यानां यूनां का कथेति भावः, निधनविधौ संहारव्यापारे निर्दयः, राजन्यानाम् उच्चानि उन्नतानि यानि अंसकूटानि स्कन्धशिखराणि तेषां क्रथने दलने पटुः कुशलः अटन्ती स्फुरन्ती घोरा उग्रा धारा यस्य तथाभूतः, यद्वा पटुः समर्था रटन्ती स्वनन्ती घोरा धारा यस्य तादृशः, विश्रुतः प्रसिद्धः, सोऽयमिति पूर्वेणान्वयः। स्रग्धरा वृत्तम्॥ ६॥

यत्रेति। यत्र यस्मिन् जामदग्न्ये सङ्गराङ्गनभुवं रणक्षेत्रम् आक्रामति अभिगच्छति सति दुर्वारधारया अनिवार्य्यप्रवाहेण स्खलन्ति निःसरन्ति यानि कुप्यतां क्रुध्यतां क्षत्रकिशोरकाणां क्षत्रिययूनां क्षत्रियशिशूनां वा कण्ठरुधिराणि तैः भूः पृथिवी यादृक् नीरेणुका निर्धूलिरभूत्, तादृक् तथा द्यौरेव स्वर्गोऽपि गगनमार्गोऽपीति वा वीरवराणां वीरश्रेष्ठानां, रणनिहतानां क्षत्रियाणामिति भावः, स्वयंवरपराः स्वयंवरणकारिण्य इति यावत्, याः स्वर्लोककन्याः सुरसुन्दर्य्यः तासां करेषु यानि क्रीड़ापुष्करदामानि लीलाकमलमालिकाः तेषां

जामदग्न्यः क्रोधं नाटयित्वा केनेदं कालदण्डान्तरमिच्छता (क)
भग्नमजगवं नाम धनुः । साश्चङ्कं वारत्रयम् ।
पार्व्वत्या निजभर्त्तुरायुधमिति प्रेम्णा यदभ्यर्चितं,
निर्म्मोकेण च वासुकेर्निचुलितं यत् सादरं नन्दिना ।
भव्यं यत्त्रिपुरेन्धनं धनुरिदं तन्मन्मथोन्माथिनः ।
सत्येवं भुवि रामनामनि मयि द्वैधीकृतं दृश्यते ॥ ८ ॥

---

रेणवः परागाः तैः रेणूत्कटा रजःपूरिता अभूत् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७ ॥

( क ) कालदण्डान्तरमिति । कालस्य यमस्य दण्डः तस्य अन्तरम् मध्यम् इच्छता यमदण्डविशेषमभिलषतीत्यर्थः, अजगवं पिनाकः,"पिनाकोऽजगवं धनुः" इत्यमरः । कालदण्डान्तरमित्यत्र कुपितकालदण्डपत्रान्तरालमिति पाठे कुपितस्य कालस्य दण्डा एव पत्राणि क्रकचाः तेषाम् अन्तरालं मध्यावस्थानमित्यर्थः ।

पार्व्वत्येति । पार्व्वत्या गौर्य्या निजभर्त्तुः शङ्करस्य आयुधं युद्धसाधनमिति हेतोः प्रेम्णा स्नेहेन वात्सल्येनेति यत् अभ्यर्चितं सम्पूजितं, नन्दिना नन्दीश्वरेण प्रमथाधिपेन वासुकेः सर्पराजस्य निर्म्मोकेण कञ्चुकेन, "समौ निर्म्मोककञ्चुकौ" इत्यमरः, यत् सादरं यथा तथा निचुलितम् आवृतं, यत् भव्यम् अनुरूपं त्रिपुरम् इन्धनं दाह्यं यस्य तत् त्रिपुरेन्धनं त्रिपुरासुरदहनमित्यर्थः, मन्मथस्य कामस्य उन्माथिनः संहारिणः हरस्य तदिदं धनुः भुवि पृथिव्यां रामेति नाम यस्य तस्मिन् मयि सति विद्यमाने, एवम् इत्थं द्वैधीकृतं खण्डितं दृश्यते ।

जाम। फुत्कारप्रफुल्लनासापुटकुहरोद्गीर्णप्रभूतरोषानलोच्छलितकालकूटधूमाच्छादितदिङ्मण्डलम् (ख) अरे रे निजकुलकमलिनीप्रालेयवर्ष! दाशरथे! कथम् अकाण्डप्रचण्डकोदण्डखण्डनदोर्दण्डचण्डिमाडम्बरेणापूरितं जगत्त्रयम् सकलवसुमतीमण्डलाखण्डललक्ष्मीकुमुदिनीहरणकिरणमालिनं मां न वेत्सि?। येनोक्तः कार्त्तवीर्य्य इति। (ग)

---

प्रेम्णेत्यत्र म्लानमिति पाठे म्लानं मलिनं, अत्र णां हर्षवर्द्धनमिति भावः, सत् दृश्यते इत्यन्वयः। शार्दूलविक्रीड़ितं वृत्तम्॥ ८॥

(ख) फुत्कारेति। फुत्कारेण खेदजनितेनेति भावः, प्रफुल्लं स्फीतं यत् नासापुटं तस्य कुहरात् विवरात् उद्गीर्ण उद्भूतः प्रभूतः प्रवृद्धः यः रोषानलः क्रोधाग्निः तस्मात् उच्छलता कालकूटेनेव धूमेन आच्छादितं दिशां मण्डलं यस्मिन् तत् यथा तथा आहेति अध्याहृतायाः क्रियाया विशेषणम्। स्फीतफुत्कार-प्रफुल्लनासापुट-कोटरोद्गीर्णप्रभूत- गर्वानलोच्छलितकालकूटधूमस्तोमाच्छादितदिङ्मण्डल इति पाठे जामदग्न्य इत्यस्य विशेषणम्। स्फीतेन प्रवृद्धेन फुत्कारेण प्रफुल्लं यत् नासापुटं तस्य कोटरात् उद्गीर्णः प्रभूतो यो गर्वानलः दर्पाग्निः तस्मात् उच्छलितेन उद्गतेन कालकूटेनेवं धूमस्तोमेन आच्छादितं दिङ्मण्डलं येन तथाभूतः सन्, आहेत्यध्याहार्य्यम्।

(ग) अरे रे। इत्याक्षेपे। निजकुलमेव कमलिनी पद्मिनी तस्याः प्रालेयवर्ष! शिशिरपात! प्रालेयवर्षे यथा कमलिनीनां ध्वंसः स्यात् तथा त्वयि जाते मत्कोपेन त्वद्वंशध्वंसः जात इति भावः। अकाण्डेति। अकाण्डे अनवसरे सहसेत्यर्थः, "काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः। प्रचण्डं यत् कोदण्डः

सहस्रबाहुस्त्वमहं द्विबाहु, -स्त्वं चक्रवर्त्ती, मुनिनन्दनोऽहम्।
त्वं सैन्ययुक्तोऽस्यहमेकवीरस्तथापि नौ पश्यतु तर्कमर्कः ॥८॥
उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसन्तानरोषात्
उद्दामानेकविंशत्यवधि विशसतः सर्वतो राजवंश्यान्।

---

धनुरैश्वरमिति भावः, तस्य खण्डनः भञ्जनः यो दोर्दण्डः बाहुदण्डः तस्य चण्डिमा प्रचण्डत्वं तस्य आड़म्बरेण अतिरेकेण जगत्त्रयं त्रिभुवनम् आपूरितं, त्वयेति शेषः। सकलेति। सकलाः सर्वे वसुमतीमण्डलानाम् आखण्डलाः इन्द्राः, राजान इत्यर्थः, तेषां लक्ष्मीरेव कुमुदिनी तस्या हरणे किरणमाली सूर्य्यः तं मां न वेत्सि ? न जानासि ? अकाण्डमदान्धप्रचण्डदोर्दण्डकोदण्डखण्डचण्डिमाड़म्बरेणेति पाठे अकाण्डे मदान्धाभ्यां दर्पान्धाभ्याम् अतएव प्रचण्डाभ्यां दोर्दण्डाभ्यां कोदण्डस्य धनुषः खण्डः खण्डनं तस्य चण्डिमा चण्डत्वं तस्य आड़म्बरेणेत्यर्थः।

सहस्रबाहुरिति। त्वं सहस्रं बाहवो यस्य सः, अहं द्वौ बाहू यस्य सः, त्वं चक्रवर्त्ती राजराजः अहं मुनिनन्दनः, त्वं सैन्यैः युक्तः असि, अहम् एकः एकाकीत्यर्थः, वीरः। तथापि इत्थं सबलदुर्बलयोरपीति भावः, नौ आवयोः तर्कं वादम् अर्कः सूर्य्यः पश्यतु अवलोकयतु। उपजाति वृत्तम् ॥ ८ ॥

उत्कृत्येति। क्षत्रसन्तानरोषात् क्षत्रियसन्ताना एते इति क्रोधात् गर्भानपि कुक्षिस्थान् जीवानपि, "कुक्षौ कुक्षिस्थजन्तौ च गर्भः" इत्यमरः, उत्कृत्य उत्कृत्य गर्भात् निःसार्य्य निःसार्य्येत्यर्थः, शकलयतः खण्डयतः एकविंशत्यवधि एकविंशतिवारमितत्यर्थः, उद्दामान् समुद्धतान् सर्वतः सर्वान्, द्वितीयाया-

म—५

पित्र्यं तद्रक्तपूर्णं ह्रदमवनिमहानन्दमन्दायमान-
क्रोधाग्नेः कुर्वतो मे न खलु न विदितः सर्वभूतैः प्रभावः"?॥१०॥
कुप्यत्क्षत्रकिशोरकण्ठविगलद्रक्तौघधारासरि-
न्निर्वृत्ताभिषवस्य कृत्तशिरसः केशान् कुशान् कुर्वतः ।
तावद्रक्तजलाञ्जलिः पितृगणैर्यस्य क्षणं स्वीकृतः
सन्तोषेण जुगुप्सया करुणया हासेन शोकेन वा ॥ ११ ॥

---

स्तत्प्रत्ययः । राजवंश्यान् क्षत्रवंशोद्भवान् विशसतः विनाशयतः पित्र्यं पितृणामिदं पित्र्यं पितृतर्पणार्थमित्यर्थः, तत् प्रसिद्धं रक्तपूर्णं, यद्वा तेषां रक्तैः पूर्णं ह्रदं कुर्वतः तद्रक्तपूर्णे ह्रदे पितॄन् तर्पयत इति भावः, अतएव अवनौ पृथिव्यां महता आनन्देन मन्दायमानः उपशमं गच्छन्नित्यर्थः, क्रोधाग्निर्यस्य तथाभूतस्य मे मम प्रभावः सर्वभूतैः सर्वैरेव प्राणिभिः न विदितः ? न खलु नैव, विदित एवेत्यर्थः । शकलयतः इत्यत्र शकलयितुमिति, उद्दामानित्यत्र उद्दामस्येति, न खलु न विदितः सर्वभूतैः प्रभाव इत्यत्र स खलु न विदितः सर्वभूतैः स्वभाव इति च पाठेषु शकलयितुं खण्डयितुम् उद्दामस्य गतदयस्येत्यर्थः, सर्वभूतैः सः प्रसिद्धः स्वभावः न खलु विदितः ? नैव ज्ञातः ? अपि तु ज्ञात एवेत्यर्थः । स्रग्धरा वृत्तम् ॥ १० ॥

कुप्यदिति । कुप्यतां क्षत्रकिशोराणां क्षत्रियकुमाराणां कण्ठेभ्यः विगलन्तः ये रक्तौघाः रक्तसमूहाः तेषां धाराः प्रवाहा एव सरितः तासु निर्वृत्तः सम्पन्नः अभिषवः स्नानं यस्य तस्य कृत्तस्य छिन्नस्य शिरसः मुण्डस्य केशान् कुशान् दर्भान्, तर्पणाङ्गभूतानिति भावः, कुर्वतः यस्य, मे इति शेषः, तावान् प्रभूत इति भावः, रक्तजलाञ्जलिः पितृगणैः जमदग्नि-

आश्चर्यं कार्त्तवीर्य्यार्जुनभुजविपिनच्छेदलीलास्वभिज्ञः,
केयूरग्रन्थिरत्नोत्करकषणरणत्कारघोरः कुठारः ।
तेजोभिः चत्रगोत्रप्रलयसमुदितद्वादशार्कानुकारः,
किं न प्राप्तः श्रुतिं ते पुरमथनधनुर्भङ्गपर्य्युत्सुकस्य ? ॥ १२ ॥

---

प्रभृतिभिः क्षणं सन्तोषेण प्रीतया, शत्रुजातिनिधनजेनेति भावः, क्षणं जुगुप्सया घृणया, रक्तानामपवित्रत्वादिति भावः, क्षणं करुणया कृपया, सर्व्व एव क्षत्रिया निहता एकस्यापराधेनेति भावः, क्षणं हासेन, बालचापल्यमेतदिति धियेति भावः, क्षणं शोकेन पृथिवी निःक्षत्रिया जातेति धियेति भावः स्वीकृतः गृहीतः तं मां न वेत्सीति पूर्व्वेणान्वयः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ११ ॥

आश्चर्य्यमिति । हे राम ! पुरमथनस्य त्रिपुरारेः धनुषः भङ्गे पर्य्युत्सुकस्य व्यग्रस्य ते तव, पुरमथनेत्यत्र स्मरदहनेति पाठे स्मरदहनः मन्मथारिः तस्येत्यर्थः, कृतवीर्य्यस्यापत्यं पुमान् कार्त्तवीर्य्यः स चासौ अर्जुनश्चेति कार्त्तवीर्य्यार्जुनः तस्य भुजा एव विपिनं वनं तस्य छेदलीलासु कर्त्तनव्यापारेषु अभिज्ञः ज्ञातसार इति भावः, स्वभिज्ञः सुष्ठु अभिज्ञो वा, लीलाविदग्ध इति पाठे विदग्धः चतुरः दक्ष इत्यर्थः केयूराणाम् अङ्गदानां कार्त्तवीर्य्यभुजालङ्कारविशेषाणामिति यावत्, ग्रन्थिषु ये रत्नोत्कराः मणिसङ्घाः तेषु कषणेन यो रणत्कारः रणनं तेन घोरः तीव्रः तेजोभिः प्रभाभिः क्षत्रगोत्राणां क्षत्रियवंशानां प्रलयाय संहाराय समुदिता ये द्वादश अर्काः आदित्याः तेषाम् अनुकारः अनुकरणं यस्य तथाभूतः कुठारः श्रुतिं श्रोत्रेन्द्रियं न प्राप्तः किम् ? अपि तु प्राप्त एवेत्यर्थः

अभ्यग्निं जमदग्निराश्रमपरो यैः श्रूयते श्रोत्रियैः
श्रूये चाहमहंयुभिर्नृपतिभिस्तत्रोभये साक्षिणः ।
इक्ष्वाकोरथवा भृगोर्भगवतो भावी स्वधाविप्लवः
स्वाध्यायेन अपि अपि परशुना पत्या पशूनां अपि ॥ १३ ॥

श्रीरामः सानुनयम् ।

बाह्वोर्बलं न विदितं न च कार्मुकस्य
त्रैयम्बकस्य सुतरामयमेव दोषः ।
तच्चापलं परशुराम ! मम क्षमस्व
डिम्भस्य दु(दो)र्विलसितानि मुदे गुरूणाम् ॥ १४ ॥

---

तथापि इदं चापल्यमित्याश्चर्य्यमित्यन्वयः । स्रग्धरा वृत्तम् ॥ २॥

अभ्यग्निमिति । यैः श्रोत्रियैः वेदविद्भिः, "श्रोत्रियच्छान्दसौ समौ" इत्यमरः । आश्रमपरः वानप्रस्थधर्म्मतत्परः जमदग्निः अग्निम् अभि अग्निसन्निधावित्यर्थः, श्रूयते केवलमग्निहोत्र-परायणः श्रुत इत्यर्थः, अहञ्च अहंयुभिः अहङ्कारशालिभिः नृपतिभिः क्षत्रियैः तत्र आश्रमे श्रूये, ते उभये श्रोत्रिया नृपतयश्च साक्षिणः, सन्त्विति शेषः, इक्ष्वाकोः अथवा भगवतो भृगोः स्वधाविप्लवः श्राद्धतर्पणाभावः भावी भविष्यति, वंश-ध्वंसादिति भावः, स्वाध्यायेन वेदाध्ययनेन अपि, परशुना अपि पशूनां पत्या हरेण, गुरुणेति भावः, अपि, अहं स्वाध्यायादिना शपथं कृत्वा ब्रवीमि यत् रघुवंशध्वंसो भृगुवंशध्वंसो वा अवश्यं भविष्यतीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १३ ॥

बाह्वोरिति । हे परशुराम ! बाह्वोर्भुजयोः, तवेति शेषः, बलं न विदितं न ज्ञातं त्र्यम्बको रुद्रस्तस्येदं त्रैयम्बकं तस्य कार्मुकस्य धनुषश्च बलं न विदितमित्यर्थः, सुतराम् अतएव

परशुरामः। क्व स दाशरथी रामो मद्यशश्चन्द्रवारितः।
पुरारेः कार्मुकं येन भग्नं तिष्ठति भार्गवे ॥ १५ ॥

श्रीरामः सविनयम्।

स्पृष्टं वापि न वा स्पृष्टं कार्मुकं पुरवैरिणः।
भगवन्! आत्मनैवेदमभजत्रत करोमि किम्? ॥ १६ ॥
हारः कण्ठे प्रभवतुतरामत्र किं वा कुठारः,
स्त्रीणां नेत्राण्यधिवसतु नः कज्जलं वा जलं वा।

---

तत् चापलं धार्ष्ट्यम् अयं दोष एव, सुतरामयमिवेत्यत्र मह्मा न तवापीति पाठे त्रैयम्बकस्य धनुषः तव वा मह्मा माहात्म्यं न च विदित इति लिङ्गव्यत्ययेनान्वयः, तत् चापलं धार्ष्ट्यं दोषः, जात इति शेषः, गुरूणां विश्वामित्रादीनां मुदे प्रीतये डिम्भस्य शिशोः मम दुर्विलसितानि दुश्चेटितानि क्षमस्व। दोर्विलसितानीति पाठे दोर्विलसितानि भुजचेष्टितानीत्यर्थः। वसन्ततिलकं वृत्तम्॥ १४ ॥

क्वेति। मम यश एव चन्द्रः वारितः तिरोहित इति यावत् येन तथाभूतः स दशरथस्यापत्यं दाशरथिः रामः क्व? कुत्र वर्त्तते? येन रामेण भार्गवे परशुरामे तिष्ठति विद्यमाने पुरारेः ईश्वरस्य कार्मुकं धनुः भग्नं खण्डितम्। अनुष्टुप् वृत्तम्॥ १५ ॥

स्पृष्टमिति। हे भगवन्! पुरवैरिणः हरस्य इदं कार्मुकं स्पृष्टं वापि न वा स्पृष्टम् आत्मनैव स्वयमेव अभजत्रत भग्नं कर्म्मकर्त्तरि लङ्। प्रायेण सुजीर्णमेतदासीत् मया स्पृष्टमात्रमेव भग्नं जातमित्यर्थः, किं करोमि? अनुष्टुप् वृत्तम्॥ १६ ॥

सम्पश्यामो निजजनमुखं प्रेतभर्त्तुर्मुखं वा,
यद्वा तद्वा भवतु, न वयं ब्राह्मणेषु प्रवीराः ॥ १७ ॥

अपिच । निहन्तुं हन्त ! गा विप्रान् न शूरा रघुवंशजाः ।
अयं कण्ठे कुठारस्ते, कुरु राम ! यथोचितम् ॥ १८ ॥

अथ युद्धोद्यते परशुरामे दाशरथिः । मुने ! क्षमस्व ।
भो ब्रह्मन् ! भवता समं न घटते संग्रामवार्त्तापि नः,
सर्वे हीनबला वयं, बलवतां यूयं स्थिता मूर्द्धनि ।

---

हार इति । अत्र कण्ठे हारः किंवा कुठारः प्रभवतुतराम् अतिशयेन विराजतु, हारः कण्ठे विशतु यदि वा तीक्ष्णधारः कुठार इति पाठान्तरम् । कज्जलं वा जलं वा नः अस्माकं स्त्रीणां नेत्राणि अधिवसतु आश्रयतु, निजजनानां बान्धवानां मुखं, ध्रुवमपि सुखमिति पाठान्तरं, प्रेतभर्त्तुः यमस्य मुखं वा सम्पश्यामः, यद् वा तद् वा भवतु, तथापि वयं ब्राह्मणेषु प्रवीराः प्रकृष्टा वीर्य्यवन्तः न, ब्राह्मणेषु वयं वीर्य्यं न प्रकाशयाम इति भावः । मन्दाक्रान्ता वृत्तं, "मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति तल्लक्षणात् ॥ १७ ॥

निहन्तुमिति । हे राम ! परशुराम ! रघुवंशजाः रघुवंश्याः गाः विप्रान् निहन्तुं न शूराः हन्त खेदे, राघवा गोविप्रान् न घ्नन्तीति भावः । ते तव अयं कुठारः कण्ठे, ममेति शेषः, प्रक्षिप्यतामिति शेषः, यथोचितं यथायुक्तं दण्डमिति शेषः, कुरु ॥ १८ ॥

भो इति । भो ब्रह्मन् ! भवता समं सह नः अस्माकं संग्रामवार्त्तापि संग्रामो दूरे तिष्ठतु तद्वार्त्तापि न घटते न युज्यते । सर्वे वयं हीनबलाः दुर्बलाः, यूयं बलवतां मूर्द्धनि

यस्मादेकगुणं शरासनमिदं राजन्यकानां बलं,
युष्माकं द्विजजन्मनां नवगुणं यज्ञोपवीतं बलम् ॥१९॥

परशुरामः साभ्यसूयम्।

येन स्वां विनिहत्य मातरमपि क्षत्रास्रमध्वासव-
स्वादाभिज्ञपरश्वधेन विदधे निःक्षत्रिया मेदिनी।
यद्बाणव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
दद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ॥२०॥

---

शिरसि स्थिताः। यस्मात् एकः गुणः मौर्वी यत्र तादृशम् इदं शरासनं धनुः राजन्यकानां क्षत्रियाणां बलं, द्विजजन्मनां युष्माकं नव गुणाः तन्तवः यत्र तथाभूतं यज्ञोपवीतं यज्ञसूत्रं बलम्। वयमेकगुणा यूयं नवगुणास्तत् कथं भवद्भिः सह अस्माकं प्रतिस्पर्द्धितेति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥१९॥

येनेति। येन स्वां निजां मातरमपि जननीमपि क्षत्राणाम् अस्राण्येव रक्तान्येव मध्वासवाः मधुमदाः तेषां स्वादस्य अभिज्ञः स चासौ परश्वधश्चेति तेन। यद्वा स्वादस्य अभिज्ञः परश्वधो यस्य तेन, येनेत्यस्य विशेषणम्; विनिहत्य विनाश्य पितुरादेशादिति भावः, मेदिनी पृथिवी निःक्षत्रिया क्षत्रियशून्या विदधे सर्व एव क्षत्रिया निहता इत्यर्थः, तथा यस्य बाणानां शराणां व्रणाः क्षतानि तेषां वर्त्म पद्धतिः तेन हंसच्छलात् हंसानां निर्गमनव्याजात् क्रौञ्चस्य शिखरिणः पर्वतस्य अस्थिकणाः कङ्कालखण्डाः अद्यापि पतन्ति, "भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम्" इति मेघदूते कालिदासः, स मुनिर्भार्गवः क्रुद्धः, त्वामनिपात्य नाहं विनिवर्त्ते इति भावः। पुरा कार्त्तिकेयस्य क्रौञ्चदारणस्य प्रतिस्पर्द्धया भार्गवः क्रौञ्चाद्रिं शरवर्षेण

राम: । सविनयम् ।

स्त्रीषु प्रवीरजननी जननी तवैव,
देवी स्वयं भगवती गिरिजापि यस्त्रै ।
त्वद्दोर्वशीकृतविशाखमुखावलोक-
व्रीड़ाविदीर्णहृदया स्पृहयाम्बभूव ॥ २१ ॥

अथ परशुरामं प्रति लक्ष्मण: सकोपम् ।

पुरोजन्मा नाद्य प्रभृति मम राम:, स्वयमहं,
न पुत्र: पौत्रो वा रघुकुलभुवाञ्च क्षितिभुजाम् ।
अधीरं धीरं वा कलयतु जनो माम्, अयमयं
मया बद्धो दुष्टद्विजदमनदीक्षापरिकर: ॥ २२ ॥

---

छिद्रितमकरोत्, तेनैव विवरेण मानसयायिनो हंसा: सञ्चरन्तीति प्रसिद्धि: । शार्दूलविक्रीड़ितं वृत्तम् ॥ २० ॥

स्त्रीष्विति । हे भार्गव ! तवैव जननी माता स्त्रीषु मध्ये प्रवीरजननी प्रकृष्टवीरप्रसविनी, एवशब्द इतरव्यवच्छेदक:, नापरेति भाव:, भगवती देवी गिरिजा गौरी अपि स्वयं तव दोर्भ्यां भुजाभ्यां वशीकृतस्य निर्जितस्य विशाखस्य कार्त्तिकेयस्य मुखावलोकात् या व्रीड़ा लज्जा तया विदीर्णं हृदयं यस्या: तथाभूता सती यस्त्रै तव जनन्यै स्पृहयाम्बभूव अहञ्चेदीदृक् पुत्रमाता स्यामिति स्पृहां कृतवतीत्यर्थ: । वसन्ततिलकं वृत्तम् ॥२१॥

पुरोजन्मेति । अद्यप्रभृति अद्यारभ्य राम: मम पुरोजन्मा अग्रज: न, अहञ्च स्वयं रघुकुलभुवां क्षितिभुजां राज्ञां पुत्त्र: पौत्त्रो वा न, अयं जन: साधुजन इत्यर्थ:, माम् अधीरम् अविनीतं धीरं विनीतं वा कलयतु विवेचयतु, मया अयं दुष्टस्य समुद्धतस्य द्विजस्य ब्राह्मणस्य दमनं शासनमेव दीक्षा व्रतं

भूमात्रं कियदेतदर्णवमितं तन्निर्जितं हार्य्यते
यद्वीरेण भवादृशेन ददता त्रिःसप्तकृत्वो जयम् ।
डिम्भोऽहं नवबाहुरीदृशमिदं घोरञ्च वीरव्रतं
तत्क्रोधाद् विरम प्रसीद भगवन् ! जात्यैव पूज्योऽसि नः ॥२२॥

---

तत्र परिकरः कटिबन्धः बद्धः रचितः । शिखरिणी वृत्तं, "रसै-रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति तल्लक्षणात् । एष श्लोकः पाश्चात्त्यपुस्तके क्रोधमूर्च्छितस्य रामस्यात्रैवावसरे उक्तिः । तथाचायमर्थः,—अद्य प्रभृति रामः परशुरामः मम सम्बन्धे पुरोजन्मा अग्रजन्मा ब्राह्मणो न ब्राह्मणत्वेन न गण्यः, पराजेयत्वादिति भावः । स्वयमहमपि रघुकुलभुवां क्षितिभुजां पुत्त्रः पौत्त्रो वा न, ब्राह्मणावमाननकारित्वात्तेषाञ्च तदकरणादिति भावः । अयं भूलोकस्थो जनः अयं कौतुकदर्शनार्थमागतो देवादिगणोऽपि मां वीरम् अवीरं वा कलयतु अवगच्छतु, अधीरं धीरं वेति पाठान्तरम् । अन्यदुक्तमेव ॥ २२ ॥

विजये लाभत्रयमस्ति तदैश्वर्य्यग्रहणम् आत्मजयघोषणं शत्रुदमनञ्चेति, तव तु पराजये तन्त्रितयस्य किमपि नास्तीत्याह भूमात्रमिति । यत् भूमात्रं पृथिवीमात्रं, न तु अन्ये लोका इति भावः, एतत् कियत् ? अतिक्षुद्रमिति भावः, यतः अर्णवमितं समुद्रेण परिच्छिन्नं भवादृशेन वीरेण त्रिःसप्तकृत्वः एकविंशतिवारं जयं, कृत्वेत्यध्याहार्य्यं, ददता विप्राय प्रतिपादयता हार्य्यते त्याज्यते, स्मेतिपदं भूतार्थतया अध्याहार्य्यम् । तथाच निर्जितमपि भूमात्रं तव नास्तीत्यतस्त्वद्विजये त्वदैश्वर्य्यग्रहणसम्भावना नास्तीति भावः, जयघोषणापि नास्तीत्याह डिम्भः वृद्धः त्वमिति शेषः, वृद्धजये का जयप्रशस्तिः इति भावः "डिम्भोऽस्त्री

द्विःशरं नाभिसन्धत्ते द्विःस्थापयति नाश्रितान् ।
द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते ॥ २४ ॥

अथ रामवाक्यम् ।

जातः सोऽहं दिनकरकुले क्षत्रियश्रोत्रियेभ्यो,
विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः ।

---

बालवृद्धयोः" इति विश्वः । अहं नवबाहुः अभिनवो युवेत्यर्थः, ईदृशं घोरं दारुणं वीरव्रतं वीराचारः, "बालवृद्धौ परित्यज्य सास्त्रं हन्याद्रिपुं सदा" इति नीतिशास्त्रमप्यतिक्रम्य कदाचित् प्रवर्त्तनादिति भावः । ननु "यथाकथञ्चिदत्युग्रं रिपुं हन्याद् विचक्षणः" इत्युक्तेर्वृद्धोऽपि हन्तव्य एवेत्यत आह तदिति । हे भगवन् ! त्वं जात्या ब्राह्मणजातत्वेन न अस्माकं पूज्य एवासि न शत्रुः, तस्मात् त्वत्पराजयो न शत्रुपराजय इति भावः, तत् तस्मात् त्वं क्रोधात् विरम निवर्त्तस्व, प्रसीद प्रसन्नो भव ॥ २३ ॥

द्विरिति । रामः शरं द्विः द्विवारं न अभिसन्धत्ते न सन्दधाति, एकेनैव शरसन्धानेन लक्ष्येषु कृतकार्य्यत्वादिति भावः, आश्रितान् जनान् द्विः द्विवारं न स्थापयति, सकृत् स्थापनेनैव तेषां चिरस्थितिलाभादिति भावः, अर्थिभ्यः याचकेभ्यः द्विः द्विवारं न ददाति, एकेनैव दानेन तेषां यावज्जीवनिर्वाहादिति भावः, तथा द्विः द्विवारं द्विविधमिति वा न भाषते न ब्रवीति, एकयैव वाचा व्यवहरतीति भावः ॥ २४ ॥

जात इति । स रामोऽहं दिनकरकुले सूर्य्यवंशे क्षत्रियश्रोत्रियेभ्यः क्षत्रियाः श्रोत्रियाः वेदविदः तेभ्यः, राजर्षिभ्यः इति यावत्; जातः, भगवतः विश्वामित्रात् दृष्टः दिव्यास्त्राणां

अस्मिन् वंशे कथयतु जनो दुर्यशो वा यशो वा,
विप्रे शस्त्रग्रहणगुरुणः साहसिक्याद् बिभेमि ॥ २५ ॥

तथापि श्रीरामं प्रति परशुरामः।

तच्चापमीशभुजपीड़नपीतसारं
प्रागप्यभज्यत, भवांस्तु निमित्तमात्रम्।
राजन्यकप्रधनसाधनमस्मदीयम्,
आकर्ष कार्मुकमिदं गरुड़ध्वजस्य ॥ २६ ॥

---

पारः अन्तः येन तथाभूतोऽपि, प्राप्तदिव्यास्त्रपार इति पाठे प्राप्तः अधिगतः दिव्यास्त्राणां जृम्भकादीनां पारः परा काष्ठा येन तथोक्तः। अस्मिन् वंशे सूर्य्यवंशे जनः लोकः दुर्यशो वा यशो वा कथयतु कलयतु, कलयत्विति पाठे कलयतु कीर्त्तयत्वित्यर्थः, विप्रे विषये विप्रं प्रतीत्यर्थः, शस्त्रग्रहणेन गुरु महत् तस्मात् साहसिक्यात् साहसात् बिभेमि शङ्के। मन्दाक्रान्ता वृत्तम् ॥ २५ ॥

तदिति। ईशस्य शम्भोः भुजेन यत् पीड़नं तेन पीतः गृहीतः क्षयित इति यावत्, सारः उत्कर्षः दार्ढ्यं वा यस्य तत् तच्चापं तद्धनुः प्राक् अपि अभज्यत स्वयं भग्नमासीदित्यर्थः, यच्चापमिति पाठे तदित्यध्याहार्य्यम्; भवांस्तु निमित्तमात्रं सामान्यमेव निमित्तमित्यर्थः, केवलस्पर्शमात्रकारीति भावः। राजन्यकैः क्षत्रियैः सह यत् प्रधनं सम्प्रहारः तस्य साधनम् उपकरणभूतम् अस्मदीयं मयि स्थितमित्यर्थः, गरुड़ध्वजस्य नारायणस्य इदं कार्मुकम् आकर्ष मौर्व्या सङ्गमय। वसन्ततिलकं वृत्तम् ॥ २६ ॥

रामस्तदादाय धनुः सहेलं बाणञ्च संयोज्य तदाचकर्ष ।
भाति स्म साक्षान्मकरध्वजोऽयं, गतिं प्रचिच्छेद च भार्गवस्य ॥२७॥
तच्चापमाकर्षति ताड़कारा-वाकारगुप्तापि विशालनेत्रा ।
सासूयमैक्षिष्ट विदेहकन्या, कन्यां किमन्यां परिणेष्यतीति ॥२८॥

भार्गवः । सानुनयम् ।

यः कार्त्तवीर्य्यस्य भुजा(न्)सहस्रं चिच्छेद वीरो युधि जामदग्न्यः
स सायके रामकराधिरूढ़े ब्राह्मण्य एव प्रणयी बभूव ॥२९॥

---

राम इति । रामः तत् गरुड़ध्वजस्य धनुः इति भावः, आदाय बाणञ्च संयोज्य तत् सहेलं सलीलम् आचकर्ष आकृष्टवान्, बाणं गुणे योज्य यदाचकर्षेति पाठे बाणं शरं गुणे योज्य सङ्गमय्य, योजेरति असंस्कृतः पाठश्चिन्त्यः, यदा आचकर्ष, तदा साक्षात् स्वयं मकरध्वजः कामरूपः सन् भाति स्म शुशुभे, अतीव शोभनाकृतिरभूदिति भावः। भार्गवस्य परशुरामस्य गतिं स्वर्गपद्धतिमिति यावत्, प्रचिच्छेद च, तेन शरेणेति शेषः। उपजाति वृत्तम् ॥२७॥

तच्चापमिति । ताड़कारौ रामे तत् चापं धनुः आकर्षति सति विशालनेत्रा आयताक्षी विदेहकन्या सीता आकारगुप्तापि संवृताकारापि, गुप्ताभिप्रायापीति भावः, अन्याम् अपरां कन्यां परिणेष्यति एकस्य धनुषः आकर्षणेनाहं परिणीता, पुनरेतत् धनुराकर्षणं दृश्यते तत् किमयमपरां कन्यां पुनरुद्वक्ष्यति ? इति सासूयं सेर्ष्यम् ऐक्षिष्ट ददर्श ॥२८॥

य इति। यो वीरो जामदग्न्यः युधि युद्धे कार्त्तवीर्य्यस्य भुजासहस्रं भुजानां सहस्रमित्यर्थः, भुजान् सहस्रमिति पाठे सहस्रं भुजान्, चिच्छेद, स सायके शरे रामस्य कराधिरूढ़े

यावद्धूर्जटिधर्म्मपुत्रपरशुक्षुण्णाखिलक्षत्रिय-
श्रेणीशोणितपिच्छिला वसुमती, कोऽस्यामधास्यत्पदम्।
त्रैलोक्याभयदानदक्षिणभुजावष्टम्भदिव्योदयो,
देवोऽयं दिनकृत्कुलैकतिलको न प्राभविष्यद् यदि॥ ३०॥

कुशिकसुतसपर्य्यादृष्टदिव्यास्त्रपारो,
भृगुपतिसहयुध्वा वीरभोगीणबाहुः।
दिनकरकुलकेतुः कौतुकोद्दामबाहुः
बहुमतरिपुकर्म्मा कार्मुको रामभद्रः॥ ३१॥

---

भार्गवस्य स्वर्गमार्गं निरुध्य पुनः रामस्य करं प्राप्ते सति ब्राह्मणे ब्रह्मव्रत एव प्रणयो तत्परः। ब्राह्मणदैन्यप्रणयीति पाठे ब्राह्मणेन यत् दैन्यं दुर्बलत्वं तस्य प्रणयी बभूव। उपजाति वृत्तम्॥ २९॥

यावदिति। त्रैलोक्यस्य अभयदानेन दक्षिणयोः प्रवीणयोः विज्ञयोः निपुणयोरित्यर्थः, "प्रवीणदक्षिणौ विज्ञे" इति विश्वः, भुजावष्टम्भयोः भुजस्तम्भयोरित्यर्थः, दिव्यः उदयः यस्य तथोक्तः, दिनकृतः सूर्य्यस्य कुलं वंशः तस्य एकः अद्वितीयः मुख्यो वा तिलकः अलङ्कारविशेषः अयं देवः रामः न प्राभविष्यद् यदि न आविरभविष्यत् चेत् तदा अस्यां वसुमत्यां कः पदम् अध्यास्यत् प्राक्षेप्स्यत्? न कोऽपीत्यर्थः। यावत् यतः इयं वसुमती धूर्जटेः हरस्य धर्म्मपुत्रः शिष्यः परशुरामः तस्य परशुना कुठारेण क्षुण्णानां निकृत्तानाम् अखिलानां समस्तानां क्षत्रिय-श्रेणीनां शोणितैः रक्तैः पिच्छिला पङ्किलेति यावत् चिरं तिष्ठतीति शेषः। शार्दूलविक्रीड़ितं वृत्तम्॥ ३०॥

कुशिकेति। कुशिकसुतस्य विश्वामित्रस्य सपर्य्यया सेवया गुरुत्वेनेति भावः, दृष्टः दिव्यास्त्राणां जृम्भकादीनां पारः अन्तः

जामदग्न्यचरणे निपतितो रामः ।

"उत्पत्तिर्जमदग्नितः, स भगवान् देवः पिनाकी गुरुः,
वीर्य्यं यत्तु, न तद्गिरां पथि, ननु व्यक्तं हि तत्कर्म्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः,
सत्यब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम्" ॥ १ ॥ ३२ ॥

---

येन तथोक्तः अधिगतसर्वदिव्यास्त्रसम्प्रदाय इत्यर्थः, भृगुपतिः परशुरामः तेन सह युध्यते इति तथाभूतः वीरः वीर्य्ययुक्तः भोगीनः भोगिनां भुजङ्गानामिनः पतिः वासुकिरित्यर्थः तद्वत् बाहू यस्य तथाविधः महाबाहुरिति भावः, "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । दिनकरकुलस्य सूर्य्यवंशस्य केतुः ध्वजभूतः कौतुकाय उद्दामौ उद्भटौ बाहू यस्य तथाभूतः उद्दामबाहुत्वात् लोकानां कौतुकमाहन्नित्यर्थः, बहुमतं बहु यथा तथा आहतं रिपुभिः शत्रुभिः कर्म्म रणव्यापार इति यावत् यस्य सः कार्मुकी धन्वी रामभद्रः जयतीति शेषः । मालिनी वृत्तम् ॥ ३१ ॥

उत्पत्तिरिति । सत्यं ब्रह्म वेदः तपः चान्द्रायणादि, तेषां निधिः आश्रयः तस्य भगवतः सर्वशक्तिमतः तवेति शेषः, सत्यब्रह्मतपोनिधे इति सम्बोधनपदं वा । जमदग्नितः महर्षेः जमदग्नेः उत्पत्तिः जन्म, सः प्रसिद्धो भगवान् देवः पिनाकी हरः गुरुः आचार्य्यः । यत्तु वीर्य्यं शौर्य्यं तत् गिरां वाचां पथि मार्गे न, अनिर्वचनीयमित्यर्थः । ननु भोः ! तत् वीर्य्यं कर्म्मभिः कार्य्यैः व्यक्तं हि प्रकाशमेव । पथि नन्वित्यत्र अनुपथमिति पाठे पथि इत्यनुपथं विभक्त्यर्थेऽव्ययीभावः । त्यागः वदान्यता सप्तभिः समुद्रैः मुद्रिता वेष्टिता या मही पृथ्वी तस्या निर्व्याजम्

ज्ञात्वा प्रभावं रघुनन्दनस्य, तदङ्गमालिङ्ग्य ततोऽपि गाढ़म्।
विन्यस्य तस्मिन् जमदग्निसूनुस्तेजो, महाचत्रवधान्निवृत्तः ॥२३॥
ययौ रामं परिष्व(त्य)ज्य भार्गवः स्वीयमाश्रमम्।
राजापि सह रामाद्यैः पुत्रैरुत्तरकोशलाम् ॥ २४ ॥
दृष्ट्वा गतिं परशुराम-मुनेः स नाकीम्
आमन्त्र्य सर्वसुजनान् पितृमातृवंश्यान्।

---

अकपटं निरुपधीत्यर्थः, दानम् अवधि यस्य तथाभूतः। अन्ये भूमिदातारः भूमिरुपस्वत्वमेव त्यजन्ति न तु तदधिकारं, भार्गवस्तु सर्वां पृथिवीं विप्राय प्रतिपाद्य समुद्रमपसार्य्य तदेकदेशमधितिष्ठतीत्यस्य दानस्य निर्व्याजत्वमिति भावः, अतः लोकान्तरम् अलौकिकं किं किं न? सर्वमेव भवतः अलोकसामान्यमित्यर्थः। जन्मगुरुवीर्य्यत्यागैर्भवादृशः कोऽपि नास्तीति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ३२ ॥

ज्ञात्वेति। ततोऽनन्तरं जमदग्निसूनुः रघुनन्दनस्य रामस्य प्रभावं सामर्थ्यं ज्ञात्वा विदित्वा, ज्ञात्वावतारमिति पाठान्तरं, तदङ्गं रामाङ्गम् अतिगाढ़ं यथा तथा आलिङ्ग्य तस्मिन् रामाङ्गे तेजः प्रतापं विन्यस्य समर्प्य निधायेत्यर्थः, महतां क्षत्राणां बधात् महत्चत्रबधादिति पाठे महदिति तेजोविशेषणम्। निवृत्तः विरतः। उपजाति वृत्तम् ॥ २३ ॥

ययाविति। भार्गवः रामं परिष्वज्य आलिङ्ग्य परित्यज्येति पाठान्तरं स्वीयमाश्रमं, राजापि दशरथोऽपि रामाद्यैः पुत्रैः सह उत्तरकोशलाम् अयोध्यां ययौ गतवान्। अनुष्टुप् वृत्तम् ॥ २४ ॥

दृष्ट्वेति। स रामः परशुराम एव मुनिस्तस्य नाकीं नाक-

सम्मान्य मान्यतमविप्रगुरुस्वजातीन्,
पित्रा समं निजपुरीं प्रजगाम रामः ॥ ३५ ॥
अत्रान्तरे जनकजारघुनन्दनौ च
दृष्ट्वा चिरान्मदनबाणनिपीड़िताङ्गौ ।
गत्वास्तशैलशिखरं खररश्मिमाली
हर्षात्पपात सलिले चरमस्य सिन्धोः ॥ ३६ ॥
प्राप्यायोध्यां स्वजनपरमोत्साहसम्भावनाभिः
नत्वा मूर्ध्नाखिलगुरुजनान् सीतया लक्ष्मणेन ।

---

सम्बन्धिनीं स्वर्गीयामित्यर्थः गतिं रुद्ध्वा निरुध्य बाणेनेति शेषः, सर्वान् सुजनान् साधून् पितृमातृवंश्यान् पितृवंशीयान् मातामहकुलजांश्च आमन्त्र्य आपृच्छ्य, मान्यतमा अतिशयेन माननीयाः ये विप्राः गुरवः स्वजातयः क्षत्रियाः तान् सम्मान्य सत्कृत्य पित्रा समं सह निजपुरीम् अयोध्यां प्रजगाम प्राप । वसन्ततिलकं वृत्तम् ॥ ३५ ॥

अत्रेति । अत्रान्तरे अस्मिन्नवसरे खररश्मिमाली सूर्य्यः जनकजारघुनन्दनौ सीतारामौ चिरात् मदनबाणेन कामशरेण निपीड़िताङ्गौ व्यथिताङ्गौ दृष्ट्वा अस्तशैलशिखरं गत्वा अस्ताचलचूड़ां प्राप्य हर्षात् आनन्दात् चरमस्य पश्चिमस्य सिन्धोः समुद्रस्य सलिले पपात । सूर्य्योऽस्तमगमदिति निष्कर्षः । वसन्ततिलकं वृत्तम् ॥ ३६ ॥

प्राप्येति । रामः स्वजनानां परमा महत्यः या उत्साहसम्भावनाः उल्लासव्यापाराः ताभिः अयोध्यां प्राप्य महत्या समृद्ध्या अयोध्यां प्रविश्येत्यर्थः, सीतया लक्ष्मणेन च अखिलान्

रामो यामत्रयमपि कथं मारनाराचभिन्नो
नीत्वा सद्यः स्वरथ-तुरगान् ताड़यामास दण्डैः ॥ २७ ॥
अस्तं याति सपदि नलिनीबान्धवे, सिन्धुपुत्रे
प्राचीभागे सरसमुदिते पक्वनारङ्गकल्पे।
रामः कामं गुरुजनगिरा मन्दिरे सङ्गतोऽभूत्,
वामोरूस्तं जनकतनया नन्दयन्ती जगाम ॥ २८ ॥

---

सर्वान् गुरुजनान् मूर्द्ना नत्वा यामत्रयं प्रहरत्रयं कथमपि कृच्छ्रेण नीत्वा अतिवाह्य मारस्य कामस्य नाराचेन अस्त्रेण भिन्नः विद्धः अतीव कामशरार्त्त इत्यर्थः, सद्यः दण्डैः स्वरथस्य तुरगान् अश्वान् ताड़यामास आजघान। कथं सूर्य्याश्वाः शीघ्रं भगवन्तं सूर्य्यं न नयन्तीति क्रोधेन तज्जातीयानितान् ताड़ितान् दृष्ट्वा सूर्य्याश्वाः स्वयमेव बुद्ध्वा द्रुतगामिनो भविष्यन्ति इति भावः। (एषः श्लोको न समीचीनः परं पाश्चात्त्य-पुस्तके दृष्ट इत्युद्धृतः) ॥ २७ ॥

अस्तमिति। नलिनीबान्धवे पद्मिनीकान्ते सूर्य्ये सपदि शीघ्रं, मुकुलनलिनीबान्धवे इति पाठे मुकुलितानां नलिनीनां बान्धवे विकासहेताविल्यर्थः, अस्तं याते तथा पक्वनारङ्गकल्पे परिणतनारङ्गफलसदृशे सिन्धुपुत्रे चन्द्रे प्राचीभागे पूर्वदिग्-भागे सरसं सविलासं यथा तथा उदिते सति प्रमदमुदिते, पक्वनारङ्गपिङ्गे इति पाठे प्रमदं प्रोल्लासं यथा तथा, पक्व-नारङ्गवत्पिङ्गः पिङ्गलः तस्मिन्। रामः गुरुजनानां पित्रा-दीनां गिरा वचसा मन्दिरे शयनागारे इत्यर्थः कामं स्वच्छन्दं सङ्गतः उपस्थितः अभूत्। वामौ सुन्दरौ ऊरू यस्याः सा जनकतनया सीता तं रामं नन्दयन्ती तोषयन्ती जगाम तदैव

प्राचीभागे सरागे, धरणिविरहिणीक्लान्तवक्त्रे समुद्रे,
निद्राली नीरजाली, विकसति कुमुदे, निर्विकारे चकोरे ।
आकाशे सावकाशे, तमसि शममिते, कोकलोके सशोके,
कन्दर्पे मन्ददर्पे, वितरति किरणान् शर्वरीसार्वभौमः ॥ ३९ ॥

---

मन्दिरमिति शेषः । 'रामं कामं गुरुजनगिरा मन्दिरं सुन्दरं स्वं रम्भोरुस्तं जनकतनया नन्दयन्ती जगाम ॥' इति पाठे रम्भे इव ऊरू यस्याः सा जनकतनया गुरुजनगिरा श्वश्रूवचनेनेत्यर्थः तं रामं कामम् अत्यर्थं नन्दयन्ती सती स्वं सुन्दरं मनोहरं मन्दिरं, यद्वा सुन्दरमिति राममित्यस्य विशेषणम् । जगामेत्यन्वयः । मन्दाक्रान्ता वृत्तम् ॥ ३८ ॥

प्राचीभागे इति । रागो लौहित्यम् अनुरागश्च तेन सह वर्त्तमानः सरागः तस्मिन् धरणिः पृथिवी एव विरहिणी रविरूपपतिविरहादिति भावः, तस्याः क्लान्तं मलिनं विरहदुःखात् तिमिरोद्गमाच्चेति भावः, वक्त्रं वदनं प्रारम्भश्च यस्मिन् तथाभूते अतएव समुद्रे अप्रकाशे प्राचीभागे पूर्वदिग्भागे तरणिविरहिणि क्रान्तमुद्रे समुद्रे इति पाठे तरणिः सूर्य्यः तद्विरहिणि तद्वियोगिनि किन्तु सरागे सानुरागे परपुरुषरूपचन्द्रानुरागिणि सति एतेन प्राच्याः साधारणनायिकात्वं गम्यते । समुद्रे जलधौ क्रान्ता प्राप्ता मुद्रा चन्द्रदर्शनजनित उल्लासः येन तथोक्ते इत्यर्थः । नीरजानां कमलानाम् आली पङ्क्तौ निद्राली निद्राविधेये निमीलितायामित्यर्थः, कुमुदे विकसति विकासं गच्छति, विकसितकुमुदे इति पाठे विकसितं कुमुदं विकसितकुमुदं तस्मिन् । चकोरे चन्द्रामृतपानलुब्धे इति भावः, निर्विकारे विषादशून्ये उल्लसतीति भावः, आकाशे सावकाशे सर्वतश्चन्द्रा-

स्वैरं कैरवकोरकान् विदलयन्, यूनां मनः खेलयन्,
अम्भोजानि निमीलयन्, मृगदृशां मानं समुन्मूलयन्।
ज्योत्स्नाः कन्दलयन्, तमः कवलयन्, अम्भोधिमुद्वेलयन्,
कोकान् आकुलयन्, दिशो धवलयन्, इन्दुः समुज्जृम्भते॥ ४०॥

---

लोकसञ्चारात् दर्शनविषयतां गते इति भावः तमसि अन्धकारे शमं शान्तिम् इति प्राप्ते तिरोहिते इति यावत् कोकलोके चक्रवाकसमूहे "कोकश्चक्रश्चक्रवाक" इत्यमरः, सशोके अन्योऽन्य-विरहादिति भावः, कन्दर्पे कामे अमन्दः प्रभूतः दर्पः यस्य तादृशे अतिप्रवृद्धे इत्यर्थः, कन्दर्पेऽनल्पदर्पे इति पाठेऽपि स एवार्थः, सति शर्वरीसार्वभौमः निशानाथः किरणान् वितरति वर्षति। ननु भविष्ये रामशापेऽत्यन्तनिकटवर्त्तिनि कोकाना-मकस्मात् महोत्पातनिमित्तभूतं पार्श्ववर्त्तिनामपि प्रियजनाना-मनवलोकनात्तयोक्तमिति बोध्यम्। स्रग्धरा वृत्तम्॥ ३९॥

स्वैरमिति। इन्दुश्चन्द्रः कैरवकोरकान् कुमुदकलिकाः "कलिकाकोरकः पुमान्" इत्यमरः। स्वैरं शनैः शनैः विदलयन् विकासयन्, यूनां तरुणानां मनः खेलयन् उल्लासयन् उद्दीपक-त्वादिति भावः, खेदयन्निति पाठे विषादयन् विरहित्वादिति भावः। अम्भोजानि पद्मानि निमीलयन् सङ्कोचयन्, मृगदृशां कामिनीनां मानं समुन्मूलयन् समुन्मोचयन् निराकुर्वन्नित्यर्थः, ज्योत्स्नाः चन्द्रिकाः ज्योत्स्नामिति पाठान्तरं कन्दलयन् समु-त्तेजयन्, तमः अन्धकारं कवलयन् ग्रसन्, अम्भोधिं समुद्रम् उद्वेलयन् वेलामतिक्रामयन्, कोकान् चक्रवाकान् आकुलयन् व्यथयन् अन्योऽन्यविरहजनकत्वादिति भावः, दिशः धवलयन् शुभ्रीकुर्वन् समुज्जृम्भते समुदेति। शार्दूलविक्रीड़ितं वृत्तम्॥४०॥

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष, धिगिति क्रोधादिवालोहितः।
प्रोद्यन् दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥ ४१ ॥

---

अद्यापीति। स्तन एव शैलदुर्गं गिरिरूपदुर्लङ्घ्यदेशविशेषः तेन विषमे दुरासदे सीमन्तिनीनां महिलानां हृदि एष मानः प्रियेषु कोपः अद्यापि अभ्युदितेऽपीत्यर्थः, स्थातुं वाञ्छति, धिक् इत्थं तिरोधाय स्थितं रिपुमिति शेषः, इति क्रोधात् आलोहित इव आरक्त इव असौ शशी चन्द्रः तत्क्षणात् प्रोद्यन् प्रकर्षेण उदयं गच्छन् उत्तिष्ठन्निति यावत्, दूरतरं यथा तथा प्रसारिताः विस्तारिताः कराः किरणाः प्रसारितौ करौ हस्तौ च येन तथोक्तः "बलिहस्तांशवः कराः" इत्यमरः, सन् फुल्लतः विकसतः कैरवकोषात् निमीलितकुमुदादित्यर्थः, निःसरन्ती निर्गच्छन्ती या अलिश्रेणी भृङ्गपङ्क्ती सा एव कृपाणम् असिं कर्षति आकर्षति प्रसह्य गृह्णातीत्यर्थः, कृपाणस्य मालिन्यं प्रसिद्धम् उक्तञ्च दृढ़तरनिबद्धमुष्टेः कोपनिषण्णस्य सहजमलिनस्य। कृपणस्य कृपाणस्य केवलमाकारतो भेद इति। स्तनशैलदुर्गविषमे इत्यत्र स्तनशैलशिखरे इति, उद्यन् दूरतरप्रसारितकर इत्यत्र उद्यद्दूरतरप्रसारितकर इति च पाठे स्तनाविव तुङ्गे उन्नते शैलशिखरे पर्वतशृङ्गे यत्र तथोक्ते। स्तनशैलशृङ्गस्य दुरारोहत्वात् तदन्तर्वर्त्तिनि हृदये स्थितस्य मानस्य सुतरां दुरासदत्वमिति भावः। उद्यन्तः स्फुरन्तः उद्यन्तौ च दूरतरं प्रसारिताः प्रसारितौ च कराः करौ च येन तथोक्तः। अत्र स्तनशैलेति अलिश्रेणी-

यातस्यास्तमनन्तरं दिनकृतो वेशेन रागान्वितः
स्वैरं शीतकरः करं कमलिनीमालिङ्गितुं योजयन्।
शीतस्पर्शमवाप्य सम्प्रति तया गुप्ते मुखाम्भोरुहे,
हासेनेव कुमुद्वतीवनितया वैलक्ष्यपाण्डूकृतः ॥ ४२ ॥

---

कृपाणमिति च रूपकद्वयं क्रोधादिवेत्युत्प्रेक्षा। प्रसारितकर इति श्लेषः तदेतेषामङ्गाङ्गिभावेन सङ्करः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४१ ॥

यातस्येति। अस्तं यातस्य अस्तं गतस्य दिनकृतः सूर्य्यस्य अनन्तरं परतः वेशेन आकृत्या रागान्वितः रक्तवर्णः अनुरागवांश्च रविर्य्यथारुणस्तथा प्रतीयमानः चन्द्रोऽपीति भावः। शीतकरः चन्द्रः स्वैरं यथाकामं कमलिनीं सूर्य्यप्रियामित्यर्थः, आलिङ्गितुं करं किरणं हस्तञ्च योजयन् सन् सम्प्रति तदैव तया कमलिन्या सत्येति भावः, शीतस्पर्शमवाप्य पत्युः सूर्य्यस्य उष्णस्पर्शादिति भावः, मुखाम्भोरुहे मुखम् अम्भोरुहमिव तस्मिन् गुप्ते सङ्कोचिते, युक्ते इति पाठेऽपि तथैवार्थः। रुद्धे इति पाठान्तरम्। कुमुद्वती एव वनिता निजपत्नी तया हासेनेव परनारीधर्षणादर्शनजनितसक्रोधपरिहासेनेवेत्यर्थः, वैलक्ष्यं विलज्जत्वम् अप्रतिभत्वं वा तेन पाण्डूकृतः नीरक्तीकृतः। यथा कश्चित् प्रेषितभर्त्तृकां सतीं परनारीं धर्षयितुं गतस्तया चावमानितः स्वपत्न्यादिना दृष्टो लज्जातिरेकात् पाण्डुवर्णो भवति तद्वदिति भावः। अत्र प्रस्तुते चन्द्रे परनारीकामुक-व्यवहारसमारोपात् समासोक्तिरलङ्कारः "समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥" इति। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४२ ॥

श्रीरामः सखीं प्रति ।

कर्पूरैः किमपूरि, किं मलयजैरालेपि, किं पारदैः
अक्षालि, स्फटिकान्तरैः किमघटि द्यावापृथिव्योर्वपुः ।
एतत्तर्कय कैरवक्लमहरे शृङ्गारदीक्षागुरौ
दिक्कान्तामुकुरे चकोरसुहृदि प्रौढे तुषारत्विषि ॥ ४२ ॥

पञ्जरस्था सारिका सखीनां स्वमन्दिरगमनाशिषं पठति ।

चक्रक्रीडाकृतान्तस्तिमिरचयचमूस्फारसंहारचक्रं
कान्तासम्भो( यो )गसाक्षी गगनसरसिजो राजते राजहंसः ।

---

कर्पूरैरिति । कैरवाणां कुमुदानां क्लमं क्लान्तिं मालिन्यमित्यर्थः, हरतीति तथोक्ते कैरवविकासिनीत्यर्थः, शृङ्गारस्य आदिरसस्य दीक्षा उपदेशः नियमो वा तस्या गुरुराचार्यः तस्मिन् दिगेव कान्ता तस्या मुकुरः दर्पणः तस्मिन् चकोराणां सुहृद् बान्धवः तस्मिन् तुषारत्विषि शीतरश्मौ प्रौढे प्रकटतां गते सति द्यावापृथिव्योः वपुः शरीरं विभाग इति यावत् कर्पूरैः अपूरि किम् ? पूरितं किम् ? मलयजैः चन्दनैः आलेपि किम् ? आलिप्तं किम् ? पारदैः तदाख्यैर्धातुभिः अक्षालि किम् ? क्षालितं किम् ? स्फटिकान्तरैः स्फटिकमणिविशेषैः अघटि किम् ? रचितं किम् ? एतत् तर्कय । अत्र प्रकृते चन्द्रकिरणव्याप्तजगति कर्पूरादिपूरिततया संशय इति सन्देहालङ्कारः, तदुक्तं दर्पणे—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ४२ ॥

चक्रेति । चक्राणां चक्रवाकाणां क्रीडायाः कृतान्तः यमः तेषां रात्रिविरहेण विच्छेदकत्वादिति भावः । तिमिरचयानाम् अन्धकारचयानां या चमूः सेना तस्याः स्फारस्य विस्तारस्य

सम्भोगारम्भकुम्भः कुमुदवनवधूरोधनिद्रादरिद्रो
एनः चीरोदजन्मा जयति रतिपतेर्बाणनिर्माणशाणः ॥ ४४ ॥

सखीषु गतासु ।

अङ्केकृत्वा जनकतनयां, हारकोटेस्तटान्तात्
पर्य्यङ्काङ्कं विपुलपुलकां राघवो नम्रवक्त्राम् ।
बाणान् पञ्च प्रवदति जनः पञ्चबाणोऽप्रमाणै-
र्बाणैः किं मां प्रहरति, शनैर्व्याहरन्नानिनाय ॥ ४५ ॥

---

संहारे चक्रं चक्राकारास्त्रविशेषः, कान्तानां सम्भोगस्य साक्षी साक्षाद्द्रष्टा । कान्तासंयोगसाक्षीति पाठान्तरम् । गगनमेव सरः सरोवरः तस्मिन् जायते इति तथोक्तः राजहंसः हंसविशेषः, यद्वा राजा चन्द्रः हंसः इव राजहंसः । सम्भोगस्य शृङ्गारस्य आरम्भे कर्म्मणि कुम्भः पूर्णकलसः कुमुदवनान्येव वध्वः नार्य्यः तासां रोधो निमीलनमेव निद्रा तां दरिद्राति अपनयतीति तथोक्तः रतिपतेः कामस्य बाणानां शराणां निर्माणे शाणः तीक्ष्णीकरणपाषाणः क्षीरोदजन्मा क्षीरसागरजः देवः चन्द्रः जयति विराजते । स्रग्धरा वृत्तम् ॥ ४४ ॥

अङ्केकृत्वेति । हारकोटेः हारप्रान्तस्य तटान्तम् अग्रभावात्, तलान्तादिति पाठेऽपि तथैवार्थः, विपुलपुलकां कान्तस्पर्शेन सञ्जातबहुलोमाञ्चामित्यर्थः, नम्रवक्त्रां लज्जया अवनतवदनां जनकतनयां सीताम् अङ्केकृत्वा राघवः, जनो लोकः पञ्चबाणान् कामस्येति शेषः प्रवदति कथयति, किन्तु पञ्चबाणः कामः अप्रमाणैः असंख्यैः बाणैः मां किं कथं प्रहरति इति शनैर्मन्दं मन्दं व्याहरन् सन् पर्य्यङ्काङ्कं शय्योत्सङ्गम् आनियाय नीतवान्, व्याहरन्नानिनायेत्यत्र व्याहरन्तीं जगा-

अन्योऽन्यं बाहुपाशग्रहणरसभराशीलिनोस्तत्र यूनो-
र्भूयोभूयः प्रभूताभिमतफलभुजोर्नन्दतोर्जात एषः ।
संसारो गर्भसारो नव इव मधुरालापिनोः कामिनोर्मां
गाढ़ञ्चालिङ्ग्य गाढ़ं स्वपिहि न हि न होति च्युतो बाहुबन्धः ॥४६॥

वक्त्रे ततः फणिलतादलवीटिकां स्वे
विन्यस्य चन्दनघनावृतपूगगर्भाम् ।

---

मेति पाठे इति व्याहरन्तीं कथयन्तीं जनकतनयामित्यस्य विशेषणम् पर्य्यङ्कं जगामित्यन्वयः । मन्दाक्रान्ता वृत्तम् ॥ ४५ ॥

अन्योऽन्यमिति । तत्र सम्भगसमये अन्योऽन्यं परस्परं बाहुपाशाविव तयोर्ग्रहणे धारणे यो रसभरः रागातिशयः औत्सुक्यातिरेक इत्यर्थः, तम् आशीलतयः सम्यक् प्रकटयत इत्यर्थः तयोः भूयो भूयः पुनः पुनः पभूतं प्रचुरम् अभिमतम् इष्टं फलं सुरतसुखं भुञ्जाते इति तयोः अतएव नन्दतोः आनन्दातिशयमनुभवतोः यूनोः तरुणयोः गाढ़ं गाढ़म् अति मात्रमित्यर्थः, माम् आलिङ्ग्य स्वपिहि निद्राहि, नहि नहोति च मधुरालापिनोः मनोहरं जल्पतोः कामिनोः सीतारामयोः गर्भे अन्तःसारः उत्कर्षः, सुखातिशय इति भावः, यस्य तथाभूतः अतएव नव इव संसार एषः जातः बाहुबन्धः परस्परं बाहु-संश्लेषः च्युतः शिथिलतां गतः निद्रावेशादिति भावः । मन्दा-क्रान्ता वृत्तम् ॥ ४५ ॥

वक्त्रे इति । ततः किञ्चिन्निद्रावेशानन्तरं रामः स्वे वक्त्रे वदने चन्दनेन घनेन कर्पूरेण च आवृतः संयुक्तः पूगः गुवाकः गर्भे अन्तर्यस्याः तां फणिलतादलवीटिकां ताम्बूलीदलवीटिकां

रामोऽब्रवीदयि गृहाण सुखेन बाले !
तच्छद्मना तदधरं मधुरं प्रपातुम् ॥ ४७ ॥

मन्दं मन्दं जनकतनया तां चतुर्धा विधाय
स्वैरं जज्ञे तदधरमधु प्रेमतो मीलिताक्षी ।
मेने तस्यास्तदनु कवलात् धर्मकामार्थमोक्षान्
रामः कामं मधुरमधरं ब्रह्म पीत्वापि तस्याः ॥ ४८ ॥

सुप्तायां सीतायां रामः ।

भाति स्म चित्तस्थितरामचन्द्रं संरुन्धतो निर्गमशङ्कयेव ।
स्तनोपरि स्थापितपाणिपद्मा, छद्मात्मनिद्रा हरिणायताक्षी ॥ ४९ ॥

---

विन्यस्य निधाय तच्छद्मना तस्य ताम्बूलवीटिकाप्रदानच्छलेन मधुरं तस्याः अधरम् अधरामृतं प्रपातुं प्रकर्षेण आस्वादयितुम् अयि बाले ! मुग्धे सीते ! सुखेन गृहाण इति अब्रवीत् । वसन्ततिलकं वृत्तम् ॥ ४७ ॥

मन्दमिति । जनकतनया सीता तां वीटिकां चतुर्धा विधाय विभज्य तस्य रामस्य अधरमधुनि यत् प्रेम अनुरागः तस्मात् मन्दं मन्दं शनैः शनैः स्वैरं स्वाभिमतं यथा तथा जज्ञे हृतवती, जग्राहेत्यर्थः । एकदैव ग्रहणे तदधरमधुनः सम्यगलाभ इति मन्दं मन्दमित्युक्तम् । तदनु तदनन्तरं तद्ग्रहणात् परं मीलिताक्षी तदधरस्पर्शरसात् आमीलितलोचना सती तस्या वीटिकायाः कवलान् ग्रासान्, चतुर इति भावः, धर्मकामार्थ-मोक्षान् चतुर्वर्गान्, तत्प्राप्तिसमानिति भावः, रामोऽपि तस्याः मधुरम् अधरं पीत्वा तमेवाक्षरं ब्रह्म ब्रह्मानन्दसममिति भावः, मेने एतदधिकं ब्रह्मसुखं नास्तीत्यमन्यत । मन्दाक्रान्ता वृत्तम् ॥ ४८ ॥

भातीति । हरिणायताक्षी मृगाक्षी सीता स्तनयोरुपरि

तत्र सीतावक्षःस्थलस्थं भ्रमरमवलोक्य। (क)

मदनदहनशुष्यत्क्लान्तकान्ताकुचान्त-
र्हृदि मलयजपङ्के गाढ़बद्धाखिलाङ्घ्रिः।
उपरि विततपक्षो लक्ष्यतेऽलिर्निमग्नः
शर इव कुसुमेषोरेष पुङ्खावशेषः॥ ५० ॥

---

स्थापितं पाणिपद्मं करकमलं यया तथाभूता छद्मना छलेन आप्ता गृहीता निद्रा यया तादृशी अत एव निर्गमशङ्कया चित्तस्थितो यो रामचन्द्रः तं संरुन्धतीव वहिर्गन्तुमददतीवेति भावः, भाति स्म रराज। छद्माप्तनिद्रा हरिणायताक्षीत्यत्र सञ्जातनिद्रा सरसीरुहाक्षीति पाठान्तरं सुगमम्। उत्प्रेक्षालङ्कारः। उपजाति वृत्तम्॥ ४९ ॥

(क) तत्र सीतावक्षःस्थलस्थं भ्रमरमवलोक्येत्यत्र तत्र मैथिलसुतोरःस्थलनिक्षिप्तयक्षकर्दमे सानन्दपतितं भ्रमरमालोक्येति पाठे मैथिलसुता सीता तस्याः उरःस्थले वक्षसि निक्षिप्तः निहितः यः यक्षकर्दमः यक्षाणां प्रियः कर्दमः "कुङ्कुमागुरुकस्तूरी कर्पूरं चन्दनं तथा। महासुगन्धमित्युक्तं नामतो यक्षकर्दमः॥" इत्युक्तो गन्धचूर्णविशेषः तत्र।

मदनेति। मदनदहनेन कामाग्निना शुष्यन्तौ अत एव क्लान्तौ यौ कान्तायाः सीतायाः कुचौ स्तनौ तयोरन्तर्हृदि मध्यहृदये मलयजपङ्के चन्दनपङ्के गाढ़ं यथा तथा बद्धा लग्नाः अखिलाः समग्रा अङ्घ्रयः चरणा यस्य तथोक्तः, उपरि वितती विस्तृतौ पक्षौ येन यस्य वा सः अलिः भ्रमरः एषः पुङ्खावशेषः,

अत्रावसरे। पृथुलजघनभारं मन्दमान्दोलयन्ती
मृदुचलदलकान्ता प्रस्फुरत्कर्णपूरा।
प्रकटितभुजमूलादर्शितस्तन्यलीला
प्रमदयति पतिं द्राक् जानकी व्याजनिद्रा॥ ५१॥

श्रीरामपादाः।

निद्राणस्त्रीनितम्बाम्बरहरणरणन्मेखलारावधावत्-
कन्दर्पाविद्धबाणव्यतिकरतरलाः कामिनो यामिनीषु।

---

वृन्तमात्रावशिष्टः कुसुमेषोः कामस्य शर इव निमग्नः लक्ष्यते दृश्यते। उत्प्रेक्षालङ्कारः। मालिनी वृत्तम्॥ ५०॥

पृथुलेति। पृथुलः विशालः जघनभारः, कटिपुरोभागः तं मन्दं यथा तथा आन्दोलयन्ती सञ्चालयन्ती मृदु मन्दं यथा तथा चलन् स्पन्दमानः अलकानां चूर्णकुन्तलानाम्, "अलकाश्चूर्णकुन्तलाः" इत्यमरः. अन्तः प्रान्तदेशः यस्याः तथोक्ता प्रस्फुरन् प्रकर्षेण उल्लसन् कर्णपूरः कर्णभूषणं यस्याः सा प्रकटितया अनावृतयेत्यर्थः, भुजमूलया दर्शिता स्तनयोरियं स्तन्या स्तनसम्बन्धिनी लीला विलासः यया तथाभूता व्याजेन कपटेन निद्रा यस्याः सा छद्मनिमीलितेति भावः, जानकी द्राक् झटिति पतिं रामं प्रमदयति प्रकर्षेण उल्लासयतीत्यर्थः। मृदु चलदलकान्तेत्यत्र पृथुचलदलकाग्रेति पाठान्तरम्। मालिनी वृत्तम्॥ ५१॥

निद्राणेति। यामिनीषु रात्रिषु ते प्रसिद्धाः कामिनः सकामाः श्रीरामपादाः श्रीराम इति भावः, निद्राणा निद्रावती या स्त्री पत्नी, सीतेत्यर्थः, तस्या नितम्बात् अम्बरहरणेन वसनहरणेन रणन्ती स्वनन्ती या मेखला काञ्ची तस्या रावेण रणनेन धावन्

ताड़ङ्कोपान्तकान्तग्रथितमणिगणोद्गच्छदच्छच्छटाभिः
व्यक्ताङ्गास्तुङ्गकम्पा जघनगिरिदरीमाश्रयन्ते श्रयन्ते ॥ ५२ ॥

जानकी प्रबुद्धा।

स्पृहयति च बिभेति प्रेमतो बालभावा-
न्मिलति सुरतसङ्गेऽप्यङ्गमाकुञ्चयन्ती।

---

स्फुरन्नित्यर्थः, यः कन्दर्पः कामः तेन आबद्धाः संहिताः ये बाणाः शराः तेभ्यः व्यतिकरः भयं तेन तरलाः चपलाः, कामातिशयात् त्वरावन्त इत्यर्थः ; यद्वा तरलाः आत्मानं गोपायितुं व्यग्रा इत्यर्थः, अन्योऽपि चौर्य्यं कुर्वन् केनापि ज्ञातः पश्चात् धारणार्थमनुसृतः आत्मानं गोपायितुं व्यग्रो भवतीति भावः। निद्राणेत्यत्र निद्रालिविति, कन्दर्पाबद्धेत्यत्र कन्दर्पारब्धेति च पाठान्तरे स एवार्थः, ताड़ङ्कयोः हस्ताभरणविशेषयोरुपान्तेषु कान्ताः रमणीयाः ग्रथिताः व्यतिविद्धाः ये मणिगणाः तेभ्यः उद्गच्छन्त्यः निर्गच्छन्त्यः या अच्छा निर्म्मलाः छटाः दीप्तयः, प्रभा इत्यर्थः, ताभिः व्यक्तानि प्रकाशितानि अङ्गानि येषां तथोक्ताः ; तथाच चौर्य्येऽपि आत्मानं गोपायितुमशक्ता इति भावः, अत एव तुङ्गो महान् कम्पः भयजनित इति भावः, सात्त्विकश्च येषां तथाभूताः सन्तः जघन एव गिरिदरी पर्वतगुहा ताम् आश्रयं निर्भयस्थानं श्रयन्ते, गुहासु प्रविष्टाश्चौरा न ज्ञायन्ते इति भावः। एतत्पद्यं साधारणमपि अत्र विशेषेण व्याख्यातम्। अत्र प्रकृते रासे कामिनि अप्रकृतचौरव्यवहारसमारोपात् समासोक्तिरलङ्कारः,— "समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥" इति लक्षणात्। स्रग्धरा वृत्तम् ॥ ५२ ॥

स्पृहयतीति। प्रेमतः प्रेमवशात् स्पृहयति तादृशं सुरत-

अहह ! न हि न हीति व्याजमप्यालपन्ती
स्मितमधुरकटाक्षैर्भावमाविष्करोति ॥ ५३ ॥

श्रीरामः सानन्दं जानकीवाग्विलासमुल्लासयति ।

वाचां गुम्फेन रम्भाकरकमलदलोदारसञ्चारचञ्च-
त्तन्त्रीसञ्जातमञ्जुस्वररणनशतोद्गारताराक्षरेण ।
प्रत्यग्रोन्निद्रनाकद्रुमकुसुमनवामोदसंमो(वा)दमैत्री-
पात्रीभूतेन धात्रीं युवतयति चिरस्थाविरां रामराज्ञी ॥ ५४ ॥

---

माकाङ्क्षतीत्यर्थः, बालभावात् मौग्ध्यात् बिभेति च त्रस्यति च । अङ्गमाकुञ्चयन्ती संवृण्वन्ती अपि सुरतसङ्गे मिलति सजति, अहह ! न हि न हि इति व्याजं कपटनिषेधमिति भावः, आलपन्ती जल्पन्ती अपि स्मितेन मन्दहासेन मधुराः मनोहारिणः कटाक्षाः अपाङ्गविलोकितानि तैः भावं मानसं रागम् आविष्करोति प्रकटयति । मालिनी वृत्तम् ॥ ५३ ॥

वाचामिति । रामस्य राज्ञी सीता रम्भायाः तदाख्याया अप्सरसः कराविव कमले तयोर्दलाः अङ्गुलय इत्यर्थः, तेषाम् उदारेण महता, मनोज्ञेनेति भावः, सञ्चारेण चञ्चन्ती स्वनन्ती या तन्त्री वीणा तस्याः सञ्जातः मञ्जुर्मनोहरः यः स्वरः तस्य रणनशतं स्फुरणातिशयः यस्मिन् तथाभूतः य उद्गारः गीतिकाविशेषः, तदुक्तं सङ्गीतशास्त्रे—"सात्वती पञ्चमश्लोकप्रीतिकण्ठविराजितम् । त्रिपदं सध्रुवं गीतमुद्गाराख्यं मतं बुधैः ॥" इति ; तत्र ताराणि स्फुटानि अक्षराणि वर्णाः यत्र तादृशेन प्रत्यग्रोन्निद्रम् अभिनवोद्भिन्नं यत् नाकद्रुमकुसुमं पारिजातपुष्पं तस्य नवः आमोदः सौरभं, मुखसौरभमिति भावः, तेन सम्मोदः संहर्षः, संवाद इति पाठान्तरं, तस्य मैत्री सङ्गः तस्य पात्रीभूतः

अपि च । अरण्यं सारङ्गैर्गिरिकुहरगर्भाश्च हरिभि-
र्दिशो दिङ्मातङ्गैः श्रितमपि वनं पङ्कजवनैः ।
प्रियाचक्षुर्मध्यस्तनवदनसौन्दर्य्यविजितैः
सतां मानि म्लाने मरणमथवारण्यशरण(गमन)म् ॥५५॥

---

आश्रय इत्यर्थः तेन वाचां गुम्फेन रचनया "सन्दर्भो रचना गुम्फः" इत्यमरः, चिरस्थाविरां स्थविरा एव स्थाविरा चिरं स्थाविरां चिरस्थाविरां अतिवृद्धामिति यावत्, धात्रीं पृथिवीं युवतयति युवतिं करोति, रसवतीं करोतीति यावत् । एते-नास्याः मधुरस्वरः वृद्धामपि रसयतीति भावः । रणनशतोद्गारे-त्यत्र सरसतरेति, युवतयति चिरस्थाविरामित्यत्र सुरभयति चरस्थावरामिति पाठे सरसतरः अतिशयेन रसवान्, उद्गार इत्यस्य विशेषणम् । चरस्थावरां चरिष्णुस्थास्नुरूपां, सुरभयति आमोदयति, उल्लासयतीत्यर्थः । स्रग्धरा वृत्तम् ॥ ५४ ॥

अरण्यमिति । प्रियायाः सीतायाः चक्षुषी नेत्रे मध्यं कटिदेशः स्तनौ पयोधरौ वदनं मुखं तेषां सौन्दर्य्येण विजिताः विशेषेण जिताः यथाक्रमं परिभूताः तैः सारङ्गैः मृगैः, चक्षुर्विजितै-रिति भावः, अरण्यं वनं, हरिभिः सिंहैः, मध्यविजितैरिति भावः, "सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिः" इत्यमरः, गिरेः पर्वतस्य कुहराणि गह्वराणि तेषां गर्भाः अभ्यन्तराणि, दिङ्मातङ्गैः दिग्गजैः, स्तनविजितैरिति भावः, दिशः, पङ्कजवनैः कमलसङ्घैः, मुखविजितैरिति भावः, वनं जलम् अपि श्रितम् आश्रितम् । तथाहि सतां साधूनां, सम्भावितानामिति भावः, मानि म्लाने क्षीणे सति मरणम्; अथवा अरण्यशरणं अरण्याश्रयणम्, अरण्य-गमनं, दूरसरणमिति च पाठान्तरं, शुभमिति शेषः । अत्र

अयि प्रिये ! पश्य ।

दृष्ट्वा मुखं ते सरसीरुहाणि भृङ्गाक्षमालां जगृहुर्जपाय ।
एणीदृशस्तेऽप्यवलोक्य वेणीं भोगं भुजङ्गाधिपतिर्जुगोप ॥ ५६ ॥
दृष्ट्वा सुवर्णं दहति स्वदेहं चिक्षेप वर्णं, तव दन्तपङ्क्तिम् ।
विलोक्य तूर्णं मणिवीजपूर्णं फलं विदीर्णं किल दाड़िमस्य ॥५८॥

---

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शिखरिणी वृत्तम् ॥ ५५ ॥

दृष्टेति । हे प्रिये ! सरसीरुहाणि पद्मानि ते तव मुखं दृष्ट्वा जपाय मन्त्रजपेन देवान् आराधयितुमिति भावः, भृङ्गा एव अक्षमाला जपमाला तां जगृहुः गृहीतवन्ति, पराजिताः पुनरुत्कर्षलाभाय तपस्यन्तीति भावः । भुजङ्गाना-मधिपतिः नागराजः एणीदृशः मृगाक्ष्याः ते तव वेणीं केश-पाशम् अवलोक्य भोगं स्वदेहं जुगोप विवरे संवृतवान्, लज्ज-येति भावः । दृष्ट्वा मुखं ते इत्यत्र वक्त्रं वनान्ते इति, वेणीं भोगमित्यत्र वेणीसङ्गमिति च पाठे वनान्ते जलमध्ये वक्त्रं वदनम् अवलोक्येति क्रिययान्वेति । इन्द्रवज्रा वृत्तं "स्यादिन्द्र-वज्रा यदि तौ जगौ गः" इति लक्षणात् ॥ ५६ ॥

दृष्टेति । सुवर्णं काञ्चनं तव वर्णं दृष्ट्वा स्वदेहं दहने अग्नौ चिक्षेप, तव दन्तपङ्क्तिं विलोक्य मणिवत् वीजानां पूराः सङ्घा यस्य यत्र वा तत् दाड़िमस्य फलं तूर्णं शीघ्रं विदीर्णं किलेत्युत्प्रेक्षा । दृष्टेत्यत्र स्वर्णमिति, वर्णमित्यत्र कान्तिमिति, मणिवीजपूरमित्यत्र मणिवीजपूर्णमितिपाठे सुवर्णमिति स्वर्ण-मित्यस्य विशेषणं, कान्तिं विलोक्येति क्रियायाः कर्म्म । मणय इव वीजानि तैः पूर्णं मणिवीजपूर्णमिति । उपजाति वृत्तम् ॥५८॥

वदनममृतरश्मिं पश्य कान्ते ! तवोर्व्याम्
अनिलतुलनदण्डेनास्य वार्धौ विधाता ।
स्थितमतुलयदिन्दुः खेचरोऽभूल्लघुत्वात्
क्षिपति च परिपूर्त्यै तस्य ताराः किमेताः ? ॥ ५८ ॥

( सीता सपरिहासम् ) ।

रमण ! चरणयुग्मं तावकं भावयित्वा
मधुरगिरमुदारं रामदासी ब्रवीमि ।
कृतमपि गुरु धात्रास्वाद्य निर्णीयतां मे
वदनममृतरश्मेर्मण्डलं वा प्रियेण ॥ ५९ ॥

---

वदनमिति । हे कान्ते ! पश्य अवलोकय । उर्व्यां पृथिव्यां, स्थितमिति उभयत्रान्वेति, तव वदनं वार्धौ वारिधौ स्थितम् अमृतरश्मिं चन्द्रम् अनिलः वायुरेव तुलनदण्डः तेन अस्य उभयकोट्योः समावेश्येति भावः, अतुलयत् तोलयामास किन्तु इन्दुः अमृतरश्मिः लघुत्वात् खेचरोऽभूत् ऊर्द्ध्वं गत इति यावत्, गुणगौरवात्तु तव वदनमत्र स्थितमिति भावः, इदानीमपि तस्य चन्द्रस्य पूर्त्त्यै पूरणाय तव मुखलावण्यस्य सम्यक् प्राप्तये इति भावः, एताः ताराः नक्षत्राणि क्षिपति च समन्तात् योजयति च, विधातेति कर्त्तृपदम् । मालिनी वृत्तम् ॥ ५८ ॥

ननु सिताखण्डश्चेदल्पतरः गुड़स्तु बहुतरः, तत् किम् आकारगौरवात् गुणाधिक्यमित्यत आह, रमणेति । हे रमण ! प्रिय ! रामदासी अहं तव इदं तावकं त्वत्सम्बन्धि चरणयुग्मं भावयित्वा चिन्तयित्वा मधुरगिरं मधुरभाषिणम् उदारं महान्तं त्वां ब्रवीमि पृच्छामीत्यर्थः, प्रियेण कान्तेन त्वया

सीतां मनोहरतरां गिरमुद्गिरन्ती-
मालिङ्ग्य तत्र बुभुजे परिपूर्णकामः ।
रामस्तथा, त्रिभुवनेऽपि यथा न कोऽपि
रामां भुनक्ति बुभुजे न च भोक्ष्यतीशः ॥ ६० ॥
मृदुसुरभिसुवर्णस्फीतकक्षापुटोद्य-
ल्ललितभुजलतायाः सम्पुटालिङ्गितायाः ।

---

धात्रा विधात्रा गुरु कृतमपि मे मम वदनम् अमृतरश्मि-मण्डलं वा आस्वाद्य पानेन दर्शनेन चानुभूय निर्णीयतां कतरदनयोर्गुरु इत्यवधार्य्यताम्; गुणातिरेक एव गौरव-हेतुरिति भावः । मालिनी वृत्तम् ॥ ५९ ॥

सीतामिति । रामः तत्र शयनमन्दिरे मनोहरतराम् अति-मनोहरां, वाचमित्यस्य सीतामित्यस्य च विशेषणं, गिरं वाचम् उद्गिरन्तीम् आलपन्तीं सीताम् आलिङ्ग्य परिपूर्ण-कामः परितृप्तमनोरथः सन् तथा बुभुजे भुक्तवान्, यथा त्रिभुवने त्रिलोक्यां कोऽपीशः प्रभुः रामां कान्तां न भुनक्ति, न बुभुजे न च भोक्ष्यति, कालत्रयातीतं रामस्य सीतासम्भोग-सुखमिति भावः । वसन्ततिलकं वृत्तम् ॥ ६० ॥

मृद्विति । मृदुः कोमलः सुरभिः सुगन्धः सुवर्णः काञ्चन-वत् शोभनवर्णः स्फीतः मांसलः यः कक्षापुटः बाहुमूल-मित्यर्थः, तस्मात् उद्यन्ती उदयमाना ललिता मनोहारिणी, "ललितं त्रिषु सुन्दरम्" इत्यमरः, भुजलता यस्याः तथाविधायाः सम्पुटेन सम्पुटाख्येन रमणव्यापारविशेषेण आलिङ्गिता तस्याः; उक्तञ्च—"उत्तानसुप्तप्रमदोपरिस्थः कक्षां समावर्त्य यदूरु-युग्मम् । सम्मर्दयानः स्तनमण्डलं यद्रमेत स स्यात् किल

सुरत-रसवशाया राघवस्य प्रियाया
हरति हृदयतापं कापि दिव्या स्तनश्रीः ॥ ६१ ॥
आगामिदीर्घविरहं चिरमाविरासीत्
ज्ञात्वेव रङ्गभवनेऽद्भुतकामकेलिः।
श्रुत्वा तथा गिरमपूरयदुल्लसन्तीम्
उन्नीर्णकर्णरमणां चरणायुधानाम् ॥ ६२ ॥

---

सम्पुटाख्यः ॥" इति। अत एव सुरतरसेन वशा वशङ्गता तस्याः प्रियायाः सीतायाः दिव्या कापि अनिर्वचनीया स्तनश्रीः कुचशोभा राघवस्य रामस्य हृदयतापं हरति नाशयति, सुखमतिमात्रं जनयतीत्यर्थः। एतच्च दुःखाभाव एव सुखमिति मतानुसारादुक्तम्। मालिनी वृत्तम् ॥ ६१ ॥

आगामीति। रङ्गभवने सुरतागारे अद्भुतकामकेलिः अद्भुतसुरतोत्सवः, तयोरिति शेषः, आगामिदीर्घविरहं दण्डकारण्यप्रवेशात् रावणहरणेनेति भावः, ज्ञात्वेव चिरं दीर्घकालं व्याप्य आविरासीत् समपद्यतेत्यर्थः, तथा उल्लसन्ती विवर्द्धमाना सती चरणायुधानां कुक्कुटानाम् उन्नीर्णं कर्णाभ्यां रमणं सुरतोत्सवमनोहरवचनसुखं यया तथाभूतां सुरतसुखविबोधिनीमिति भावः, गिरं वाचं, प्रभातसूचिकामिति भावः, श्रुत्वा अपूरयत् पूर्णतामगमत्, सुरतव्यापारो निवृत्त इति भावः। श्रुत्वा तथा गिरमपूरयदुल्लसन्तीमुन्नीर्णकर्णरमणामित्यत्र श्रुत्वा तयोर्गिरमपूजयदीतुपत्नीमुन्नीर्णकर्णसरणामिति पाठे तथा तयोः सीतारामयोः गिरम् अन्योऽन्यानुरागवतीमिति भावः, श्रुत्वा आकर्ण्येवेत्युत्प्रेक्षा, चरणायुधानां कुक्कुटानाम् उन्नीर्णम् उदीरितं वचनं, प्रभातसूचकमिति भावः, तस्य कर्णयोः सरणं

एष श्रील-हनूमता विरचिते श्रीमन्महानाटके,
वीर-श्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः।
मिश्र-श्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते,
वैदेहीसुरताभिधोऽत्र गतवानङ्को द्वितीयो महान्॥ ६६॥

---

# तृतीयोऽङ्कः।

भुक्त्वा भोगान् सुरम्यान् कतिपयदिवसान् राघवो धर्म्मपत्न्या
सार्द्धं वर्द्धिष्णुकामः श्रवणमुनिपितुः प्राप हा! शापकालम्।

---

प्रविष्टो यस्याः तां कुक्कुटशब्दान् शृण्वतीमिति भावः, श्रोतु-पत्नीम् अपूजयत् अर्चयामास, प्रशशंसेत्यर्थः, विड़ालाश्च कुक्कुटानां शब्दं श्रुत्वैव तान् घ्नन्ति ततश्च तदभावात् प्रभातज्ञान-विरहेण अजस्रमहं प्रवर्त्ते इति कामकेलिराशय इति बोध्यम्। वसन्ततिलकं वृत्तम्॥ ६२॥

एष इति। वैदेही सीता तस्याः सुरतं सम्भोगः अभिधा यस्य तथाभूतः। अन्यत् सुगमम्॥ ६३॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
महानाटकद्वितीयाङ्कव्याख्या समाप्ता॥ २॥

---

भुक्त्वेति। राघवो रामः धर्म्मपत्न्या सीतया सार्द्धं वर्द्धिष्णु-कामः प्रवृद्धतृष्णः सन्नित्यर्थः, कतिपयदिवसान्, अत्यन्तसंयोगे

धत्तेऽकस्माद्विवस्वान् मलिनकिरणतां हा ! महोत्पातहेतो:
उल्कादण्ड: प्रचण्ड: प्रपतति नभस:, कम्पते भूतधात्री ॥ १ ॥
दिग्भागो धूसरोऽभूत्, अहनि बहुतरा: स्फारतारा: स्फुरन्ति,
स्वर्भानोर्भानवीयं ग्रहणमसमये, रौधिरो शक्रवृष्टि: ।

---

द्वितीया । कतिपयसमयमिति पाठान्तरं, सुरम्यान् भुज्यन्ते इति भोगा: सुखानीत्यर्थ: तान्, सुरम्यानित्यत्र सुरङ्गानिति पाठे स एवार्थ:, भुक्त्वा सम्भुज्य, भोगानाञ्चाष्टविधत्वमुक्तं यथा —"सुगन्धि वनिता वस्त्रं गीतं ताम्बूलभाजनम् । वाहनं भूषण-ञ्चेति भोगाष्टकमुदीरितम् ॥"इति । केचित्तु राघवो दशरथ: धर्म्म-पत्न्या सार्द्धं वर्द्धिष्णुकाम: अपूर्णविषयाभिलाष इति व्याचक्षते । श्रवणमुनिपितु: यज्ञदत्तनाम्नो वैश्यतपस्विन: शापकालं प्राप, हा इति खेदे । एकदा मृगयां गतो राजा दशरथ: वनगज-भ्रमेण निशि शब्दवेधिना शरेण जलकलसं पूरयन्तं यज्ञसुतं श्रवणाख्यमुनिम् अदृष्ट्वैव जघान । अथास्य पिता यज्ञदत्तेन शप्त:—'त्वमपि अस्यामिव अवस्थायामहमिव पुत्रशोकात् परलोकं गमिष्यसि' इति रामायणकथा । अत्रान्तरे दुर्निमित्ता न्यासन् इत्याह, धत्ते इति ।—विवस्वान् सूर्य्य: अकस्मात् सहसा मलिनकिरणतां मलिनप्रभतां धत्ते दधारित्यर्थ:, भूतार्थे वर्त्तमानप्रयोगश्चिन्त्य: । हा विषादे । धत्तेऽकस्मादित्यत्र धत्ते तस्मिन् इति पाठे तस्मिन् तत्र समये इत्यर्थ:, महान् उत्पात: अमङ्गलं तस्य हेतो: प्रचण्ड: भीषण: उल्कादण्ड: दण्डाकृति: अग्निशिखाविशेष:, नभस: आकाशात् प्रपतति, भूतधात्री पृथ्वी कम्पते । स्रग्धरा वृत्तम् ॥ १ ॥

दिग्भाग इति । दिशां भाग: दिग्भाग: धूसर: रजस्वल:

मध्याह्ने ध्वाङ्क्षघोषः, श्वगणरुतमतिस्फीतफेरुप्रचारो
वारं वारं गभीरः प्रलय इव महाकालचोत्कारघोषः ॥ २ ॥

अत्रान्तरे दशरथस्य चेष्टा।

रामे नयचयं दृष्ट्वा लोकधर्म्मसहञ्च यत्
यौवराज्याभिषेकाय नृपे मतिरभूत्ततः ॥ ३ ॥

---

अभूत्, अहनि दिवसे बहुतराः बहुसंख्याः स्फारताराः प्रवृद्धानि नक्षत्राणि स्फुरन्ति प्रकटतां गच्छन्ति, असमये अमावस्यादि-व्यतिरिक्तकाले इति यावत्, स्वर्भानोः राहोः भानवीयं सौरं ग्रहणं ग्रासः, रौधिरी रुधिरमयो शक्रस्य वृष्टिः, विन्दुवृष्टिरिति पाठान्तरम्। मध्याह्ने ध्वाङ्क्षाणां काकानां घोषः शब्दः, श्वगणानां सारमेयाणां रुतं रवः, मध्याह्ने ध्वाङ्क्षघोषः श्वगणरुतमित्यत्र मध्याह्नोर्द्ध्वास्यकोशश्वगणरुतमिति पाठे मध्याह्ने ऊर्द्ध्व ऊर्द्ध्वगतः आस्यकोशः मुखसम्पुटः यस्य तथाभूतः श्वगणः सारमेयकुलं तस्य रुतं रव इत्यर्थः, अतिस्फीतानाम् अतिप्रवृद्धानां फेरूणां शृगालानां प्रचारः सर्वतः सञ्चारः, वारं वारं पुनः पुनः गभीरः भीषणः प्रलय इव कल्पान्तकाल इव महाकालस्य संहारिणो रुद्रस्य चोत्कारघोषः हुङ्कारध्वनिः, अभूदिति सर्वत्र योज्यम्। स्रग्धरा वृत्तम् ॥ २ ॥

रामे इति। ततः उत्पातदर्शनानन्तरं रामे नयचयं राज-नीतिसामग्र्यं लोकधर्म्मसहं लोकाचारानुमतं धर्म्मसंहितञ्च यत्, वृत्तं तदिति शेषः, दृष्ट्वा स्थिते नृपे राजनि दशरथे यौवराज्ये अभिषेकः तस्मै, रामस्येति शेषः, मतिः बुद्धिः, अभूत् आसीत्। अनुष्टुप् वृत्तम् ॥ ३ ॥

म—८

सुमन्त्रो वहिर्निःसृत्य नागरान् प्रति ।

क्षीयां जरामुपगतामवलोक्य राजा
रामञ्च राज्यवहनक्षममाकलय्य ।
राज्याभिषेकपरमोत्सवमस्य कर्त्तुं
व्यादिष्टवान्, पुरजनाः ! कुरुत प्रमोदम् ॥ ४ ॥

रामाभिषेके मदविह्वलायाः कक्षाच्युतो हेमघटस्तरुण्याः ।
सोपानमारुह्य चकार शब्दं ठठं ठठं ठं ठठठं ठठं ठः ॥ ५ ॥

अथ कैकेयी [ स्वगतम् ] । पतितमिदमनर्थान्तरम् । (क) [ राजानमुपसृत्य प्रकाशम् ] । जयति जयति महाराजः ।

दशरथः । कैकेयि ! इत आगम्यताम् । प्रविश्य कैकेयी एवमेवं कथयति राजानम् । किन्तत् ? असङ्गलेयं बधूः ।

---

क्षीयामिति । राजा क्षीयां जरां वार्द्धकम् उपगताम् उपस्थिताम् अवलोक्य रामं राज्यवहनक्षमञ्च आकलय्य विविच्य अस्य रामस्य राज्याभिषेक एव परमः महान् उत्सवः तं कर्त्तुं व्यादिष्टवान् आज्ञापयामास, अस्मानिति शेषः, हे पुरजनाः ! नगरवासिनः ! प्रमोदम् आनन्दं कुरुत अनुभवत । वसन्ततिलकं वृत्तम् ॥ ४ ॥

रामाभिषेके इति । रामस्य अभिषेके अभिषेकसमये मदेन उल्लासेन विह्वला परवशा तस्याः तरुण्या युवत्याः कक्षात् भुजमूलात् च्युतो निपतितः हेमघटः सौवर्णजलकलसः सोपानम् अधिरोहणीम् आरुह्य प्राप्य ठठं ठठं ठं ठठठं ठठं ठः इत्येवं शब्दं चकार । अभिषेकस्य प्रजानामतीवानन्दहेतुत्वमुक्तं भवतीति भावः । उपजाति वृत्तम् ॥ ५ ॥

(क) अथ कैकेयीति । अनर्थान्तरम् अपरोऽनर्थ इत्यर्थः, अन्यदमङ्गलमिति यावत् ।

यतोऽस्या आगमनानुपदमेव महोत्पाता दृश्यन्ते, तदेनां दूरतो निःसारय, मह्यञ्च प्राक् स्वीकृतं वरद्वयं प्रदीयताम्। तदेव सीतालक्ष्मणसहितस्य रामस्य वनप्रयाणं भरतस्य चक्रवर्त्तित्वेऽभिषेकः।

ततो दशरथः। हा रामचन्द्र! प्राणाधिकप्राण! त्वयि किमेतदापतितम् [इति मूर्च्छति। समाश्वस्य। आकाशे] भूपुत्री (ख) तव पत्नी, तथापि तस्या भुवः परिग्रहणमनुचितमिदमिति कृत्वा कैकेयी त्वां निवारयति।

ततः सुमन्त्रः। [स्वगतम्।] राज्ञ एषोऽभिप्रायस्तत् स्वयमेव गत्वा रामचन्द्राय निवेदयामि [इति निष्क्रान्तः।] [उपसृत्य च] जयति जयति श्रीरामचन्द्रः। भृत्यस्ते सुमन्त्रोऽस्मि निवेदयामि आत्मानमिदमन्यच्च।

श्रुत्वैव केकयसुता नगरीजनानां
माङ्गल्यमुन्मदकलाकुलवारयोषम्।
तुभ्यं श्रियं न्यसति शक्रसखे नरेन्द्रे,
प्राक् स्वीकृतं वरयुगं समयाचतैनम्॥ ६॥

---

(ख) भूपुत्रीति। तव पत्नी सीता भूपुत्री पृथिव्या दुहिता, तथापि तथाच तस्याः भुवः श्वश्रू इति भावः।

श्रुत्वेति। शक्रसखे इन्द्रमित्रे नरेन्द्रे राजनि दशरथे तुभ्यं श्रियं राजलक्ष्मीं न्यसति अर्पयति सति, अर्पयितुमुद्यते सतीति यावत्, केकयसुता कैकेयी नगरीजनानां पुरवासिनाम् उन्मदा उल्लासपूर्णेत्यर्थः, कलाकुला कला नृत्यगीतादिः तया आकुला आसक्ता वारयोषा वेश्या यस्मिन् तथाभूतं माङ्गल्यं मङ्गलोत्सवं

तदेव वरयुगम् ।

रामो यातु वनं चतुर्दश समा मूर्द्ध्नां जटां धारयन्
वन्यां वृत्तिमुपागतो विरचितां सीतासखः सानुजः ।
राज्यं सानुचरं समुन्नतमिदं संन्यस्यतां मत्सुते,
श्रुत्वैवं स तु निर्दयावच इदं भूमिं गतो विह्वलः ॥ ७ ॥

( अत्र दाक्षिणात्यपुस्तकपाठः कैकेयी आत्मगतम् । प्राप्तः किल मद्वाग्बन्धकालः तर्हि द्रुतं राजानं भरतराज्यं प्रार्थये न खलु कालक्षेपः श्रेयसे । [ रहसि उपगम्य प्रकाशम् । ] राजन् ! अमङ्गलीयेयं वधूः, यतोऽस्या आगमनमात्रेण महोत्पाताः सम्भवन्तीति ।

तानुत्पातानवेक्ष्य क्षितिपमथ दशस्यन्दनं क्रन्दयन्ती
लोकान् शोकानलौघैः शिव शिव तरसा भस्मसात् कुर्वतीव ।

---

श्रुत्वैव आकर्ण्यैव एनं राजानं प्राक् पूर्वं स्वीकृतम् अङ्गीकृतं वर-युगं वरद्वयं समयाचत प्रार्थितवती । वसन्ततिलकं वृत्तम् ॥६॥

राम इति । रामः सीतासखः सानुजः सलक्ष्मणः सीता-लक्ष्मणसहित इत्यर्थः, चतुर्दश समाः वत्सरान्, अत्यन्तसंयोगे द्वितीया, व्याप्येत्यर्थः, मूर्द्ध्ना शिरसा विरचितां जटां धारयन् वन्यां वृत्तिम् आरण्यजीविकाम् उपागतः आश्रितः सन् वनं यातु गच्छतु । इदं समुन्नतं समृद्धं सानुचरं स्वगणसहितं राज्यं मम सुते भरते सन्न्यस्यतां संन्यस्तं भवतु । स तु राजा एवम् इत्थम् इदं निर्दयायाः कैकेय्याः वचः श्रुत्वा आकर्ण्य विह्वलः विमुग्धः सन् भूमिं गतः भुवि पपात । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

कैकेयी वाचमूचे निखिलनिजकुलाङ्गारमूर्त्तिः ससीतः
शान्त्यै पुत्रस्य राज्यं भवतु वनमभिप्रेष्यतामेष रामः ॥ ८ ॥

दशरथः। सकरुणं स्त्रीवचनस्वीकरणं मरणोत्साहञ्च नाटयन् महतीं मूर्च्छामासाद्य धरणितलमुपगतः कथमपि चेतनामुपलभ्य।

रामं कामाग्रजमिव वनं प्रस्थितं वीक्ष्य शक्तो
धर्त्तुं प्राणान् शिव शिव कथं तान् विहायाथवाहम्।
निर्मुक्तः स्यां वचनमनृतं तत् पुनर्नान्यथा मे
भूयात् भूयस्तदनु वचनं हा बभाषे तथेति ॥ ९ ॥

---

तानिति। अथानन्तरं निखिलं समस्तं निजकुलं निजवंशः, केकयराजवंश इत्यर्थः, तस्य अङ्गारा मालिन्यकरी मूर्त्तिर्यस्याः सा कैकेयी तान् उत्पातान् पूर्वोक्तान् अमङ्गलसूचकान् धूसरदिग्भागान् अवेक्ष्य दृष्ट्वा दशस्यन्दनं दशरथं क्षितिपं राजानं क्रन्दयन्ती रोदयन्ती शिव शिवेति खेदे लोकान् जनान् शोकानलौघैः रामदशरथवियोगजनितदुःखाग्निसञ्चयैः भस्मसात् कुर्वतीव दहन्तीव वाचम् उवाच शान्त्यै पूर्वोक्तामङ्गलशान्त्यर्थं ससीत एष रामः वनम् अभिप्रेष्यतां पुत्रस्य, भरतस्येति शेषः, राज्यं भवतु। स्रग्धरा वृत्तम् ॥ ८ ॥

राममिति। कामाग्रजमिव मदनाग्रजन्मानमिव, कामादपि श्रेष्ठं सुन्दरमिति भावः, रामं वनं प्रस्थितं वीक्ष्य प्राणान् धर्त्तुं कथम् अहं शक्तः? नैव शक्ष्यामीत्यर्थः, शिव शिवेति खेदे, अथवा तान् प्राणान् विहाय निर्मुक्तः अनृतात् परित्रातः स्याम् अतः तत् मे वचनम् अनृतम् असत्यम् अत एव अन्यथा अन्यप्रकारं न भूयात् न भवतु, तदनु इत्थं विवेचनानन्तरं हा

श्रुत्वा श्रीमच्चरणाः प्रमाणमिति निष्क्रान्तः ।

श्रीरामो लक्ष्मणं प्रति । वत्स लक्ष्मण ! निजां प्रजावतीम् (ग) आदाय अग्रे भव, अहं सुस्थं तातं नत्वा यावदागच्छामीति ।

तातं दशरथं नत्वा मातरौ जननीं ततः ।
मैथिल्या सहितो रामो लक्ष्मणेन वनं ययौ ॥ १० ॥

गुर्वाज्ञाप्रतिपालनात् प्रति वनं सम्प्रस्थितं राघवं,
दृष्ट्वासौ त्वरिता विदेहतनया श्वश्रू( स्वं स्वं )जनं पृच्छती ।
नत्वा कौशलकन्यकाङ्घ्रियुगलं, पश्चात् सुमित्रां पुनः,
पृष्ट्वा स्वं शुकसारिकापिककुलं, रामानुगा प्रस्थिता ॥ ११ ॥

---

इति खेदे तथा, अस्त्विति शेषः, इति वचनं बभाषे उक्तवान्, कैकेयीमिति शेषः ॥ ८ ॥

(ग) प्रजावतीं भ्रातृजायां, "प्रजावती भ्रातृजाया" इत्यमरः ।

तातमिति । रामः तातं पितरं दशरथं ततः अनन्तरं मातरौ कैकयीसुमित्रे जननीं कौशल्यां नत्वा मैथिल्या सीतया लक्ष्मणेन च सहितः सन् वनं ययौ प्रतस्थे । अनुष्टुप् वृत्तम् ॥ १० ॥

दृष्ट्वेति । असौ विदेहतनया जानकी त्वरिता सत्वरा श्वश्रूजनं, स्वं स्वं जनमिति वा पाठः, दृष्ट्वा पृच्छती आमन्त्रयन्ती कौशलकन्यकायाः कौशल्यायाः अङ्घ्रियुगलं चरणयुग्मं पश्चात् सुमित्रां पुनः नत्वा स्वं शुकसारिकापिककुलं पृष्ट्वा आमन्त्र्य रामानुगा राममनुगच्छन्ती प्रस्थिता । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

अथ सीतां प्रति कौशल्यावाक्यम्।

अयि जानकि पुत्त्रि! शैशवे प्रतिपन्नासि वधूजनक्रियाम्।
अथ गच्छसि यौवने वनं परिणामे भवितासि कीदृशी?॥ १२॥

लक्ष्मणं प्रति सुमित्रावचनम्।

रामं दशरथं विद्धि, विद्धि मां जनकात्मजाम्।
अयोध्यामटवीं विद्धि, गच्छ पुत्र! यथासुखम्॥ १३॥

रामं प्रति।

बाला विदेहतनया ललितौ भवन्तौ,
दिग्दक्षिणा च रजनीचरचक्रजुष्टा।
तद्वत्स! वत्सलतयेदमुदाहरामो,
मा राम! गच्छ नयदक्षिण! दक्षिणाशाम्॥ १४॥

---

अयीति। अयि पुत्रि जानकि! शैशवे बाल्ये वधूजनक्रियां स्नुषाजनोचितमाचारं प्रतिपन्नासि प्राप्तासि, अथानन्तरं, शैशवात् परमित्यर्थः, यौवने तारुण्ये वनं गच्छसि, ततः परिणामे चरमे वयसि कीदृशी भवितासि? करुणोक्तिरियम्। सुन्दरीवृत्तम् "अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा"इति लक्षणात्॥ १२॥

राममिति। हे पुत्र! लक्ष्मण! रामं दशरथं विद्धि जानीहि, मां जनकात्मजां सीतां विद्धि, अटवीं वनम् अयोध्यां विद्धि, यथासुखं गच्छ। अनुष्टुप् वृत्तम्॥ १३॥

बालेति। विदेहतनया सीता बाला शिशुः, भवन्तौ युवां ललितौ सुकुमारौ, दक्षिणा दिक् च रजनीचराणां राक्षसानां चक्रैः वृन्दैः जुष्टा सेविता, तत्तस्मात् हे वत्स! वत्सलतया वात्सल्येन, स्नेहेनेत्यर्थः, इदम् उदाहरामः ब्रूमः हे नयदक्षिण

मद्गृहे विरम राम ! मुहूर्त्तं पृच्छति पुनरसौ क्षितिपालः ।
आश्रयन्ति परिवृत्तिमकस्माद्दुर्मदस्य जरतश्च वचांसि १५ ॥

अत्रावसरे पौराः प्राहुः ।

अभिनवगुणग्रामे रामे विमुञ्चति पत्तनं,
तरुणकरुणापारावारे निमज्जति सज्जने ।
अचलदचलैरुर्वी, परं न तु केकयो,
कुलिशवड़िशप्रायं प्रायो मनो वत ! योषिताम् ॥ १६ ॥

---

नीतिकुशल ! राम ! दक्षिणाशां याम्यां दिशं मा गच्छ न याहीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १४ ॥

मद्गृहे इति । हे राम ! मद्गृहे मदालये मुहूर्त्तं कियन्तं कालमित्यर्थः, विरम विलम्बं कुरु इत्यर्थः । असौ क्षितिपालः राजा पुनः पृच्छति, अस्माभिः रामो वनं गच्छतु न वा इति शेषः । किं तेनेत्याह आश्रयन्तीति । दुर्मदस्य मदमत्तस्य जरतः स्थविरस्य च वचांसि अकस्मात् सहसा परिवृत्तिम् अन्यथात्वमित्यर्थः, आश्रयन्ति परिणमन्ति । यदि पुनः राजा रामं वनवासात् निवर्त्त्य राज्यमर्पयेदिति भावः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, प्रस्तुताप्रस्तुतयोर्जरद्दुर्मदयो-रेकधर्म्मसम्बन्धात् दीपकालङ्कारश्च, तदनयोः संसृष्टिः, "अप्रस्तुत-प्रस्तुतयोर्दीपकन्तु निगद्यते" इति लक्षणात् । स्वागता वृत्तं, "स्वागता रनभगैर्गुरुणा च" इति लक्षणात् ॥ १५ ॥

अभिनवेति । अभिनवः नूतनः गुणग्रामः गुणसमूहः यस्य तथोक्ते रामे पत्तनं नगरं विमुञ्चति अत एव सज्जने साधु-जनसमूहे तरुणा अभिनवा या करुणा शोकः तस्याः पारा-वारः समुद्रः तस्मिन् निमज्जति निपतति सति उर्व्वी पृथिवी

अथ वनप्रस्थाने पथि सीतावचसा रामखेदः ।

सद्यः पुरीपरिसरे च शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा ।
गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥ १७ ॥

धरणीं प्रति रामः ।

अरुणदल(लि)तनिम्ना स्निग्धपादारविन्दा
कठिनतरधरण्यां यात्यकस्मात् स्खलन्ती ।
अवनि ! तव सुतेयं, पादविन्यासदेशे
त्यज निजकठिनत्वं, जानकी यात्यरण्यम् ॥ १८ ॥

---

अचलैः पर्वतैः सहेत्यर्थः, अचलत् अकम्पत, परं किन्तु केकयी न तु नैव अचलदित्यन्वयः । वत खेदे, योषितां स्त्रीणां मनः प्रायः बाहुल्येन कुलिशं वज्रं वड़िशं मत्स्यवेधनार्थं लौहतार-निर्मितक्षुद्रावयवतीक्ष्णवस्तुविशेषः तत्प्रायं तत्सदृशम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १६ ॥

सद्य इति । शिरीषकुसुमसुकुमाराङ्गी सीता सद्यः सहसा पुरीपरिसरे नगरीविभागे जवात् वेगात् त्रिचतुराणि पदानि गत्वा कियत् गन्तव्यम् अस्ति इति असकृत् पुनः पुनः ब्रुवाणा कथयन्ती सती रामाश्रुणः रामस्य नयनबाष्पस्य प्रथमावतारं कृतवती । वसन्ततिलकं वृत्तम् ॥ १७ ॥

अरुणेति । हे अवनि ! पृथ्वि ! अरुणानां रक्तानां दला-नाम् अङ्गुलीनां छदानाञ्च तनिम्ना तनुत्वेन अल्पाकारत्वेन, अरुणदलितनिम्नेति पाठे अरुणा रक्ता दला यस्य सः स चासौ तनुश्चेति अरुणदलितनुः तस्य भावः अरुणदलितनिमा तेन

पथि पथिकवधूभिः सादरं पृच्छ्यमाना,
कुवलयदलनीलः कोऽयमार्य्ये ! तवेति ।
स्मितविकसितगण्डं व्रीड़विभ्रान्तनेत्रं,
मुखमवनमयन्ती स्पष्टमाचष्ट सीता ॥ १८ ॥
मसृणचरणपातं गम्यतां, भूः सदर्भा,
विरचय सिचयान्तं मूर्द्ध्नि, घर्म्मः कठोरः ।
तदिति जनकपुत्त्रीलोचनैरश्रुपूर्णैः,
पथि पथिकवधूभिः शिच्चिता वीच्चिता च ॥ २० ॥

---

हेतुना स्निग्धे पादारविन्दे चरणकमले यस्याः सा, अरुणदलनलिन्यास्निग्धपादारविन्देति पाठे अरुणदला रक्तच्छदा या नलिनी पद्मिनी तद्वत् आस्निग्धे सम्यक् स्निग्धे पादारविन्दे यस्याः तथाभूतेत्यर्थः, तव इयं सुता जानकी कठिनतरधरण्याम् अतिकठोरारण्यदेशे इत्यर्थः, कठिनतनुधरण्यामिति पाठे स एवार्थः, स्खलन्ती सती अकस्मात् याति पतति अतः पादविन्यासदेशे निजकाठिनत्वं स्वं कार्कश्यं त्यज मुञ्च, जानकी अरण्यं याति । मालिनी वृत्तम् । काव्यलिङ्गमलङ्कारः ॥ १८ ॥

पथीति । पथि मार्गे पथिकानां पान्थानां वधूभिः, यद्वा पथिकाः पान्था या वध्वः नार्य्यः ताभिः सादरं, हे आर्य्ये ! साध्वि ! कुवलयनीलः नीलोत्पलश्यामलः अयं तव कः इति पृच्छ्यमाना अनुयुज्यमाना सीता स्मितेन ईषद्धसितेन विकसितौ स्फुरितौ गण्डौ यस्य तथोक्तं व्रीड़ेन लज्जया विभ्रान्ते विभ्रमयुक्ते नेत्रे यस्य तथाविधं मुखम् अवनमयन्ती अवनतं कुर्वती सती स्पष्टं व्यक्तम् आचष्ट आर्य्यपुत्रोऽयं ममेति कथितवती । मालिनी वृत्तम् ॥ १९ ॥

मसृणेति । पथि मार्गे पथिकवधूभिः जनकपुत्री सीता

प्रथमपथिकमस्मिन् कानने रामभद्रं,
तदनुचरणचारिण्येवमेकाकिनी सा।
दुरितमगणयन्ती पर्य्यटन्ती दिगन्तान्,
कृशरुचिमचिरेन्दुं रोहिणीवान्वियाय॥ २१॥

तदानीं सीतां प्रति रामः।

ग्रावग्रन्थिं परिहर पुरः, कण्टकिन्यत्र वीरुत्,
विष्वग्बर्हिः, पदमवहिता किञ्चिदुच्चैः कुरुष्व।

---

मसृणः मन्दः चरणपातः पदविक्षेपः यस्मिन् तत् यथा तथा गम्यतां यतः भूः पृथिवी सदर्भा दर्भाः कुशाः तैः सहिता, कुशवनावृतायां भुवि सवेगपदनिक्षेपे चरणयोः कुशाङ्कुरवेधः स्यादिति भावः। मूर्द्धि शिरसि सिचयान्तं वसनाञ्चलं विरचय आच्छादय यतः घर्म्मः आतपसन्तापः कठोरः अतितीक्ष्णः तदिति इत्येतत् अश्रुपूर्णैः झरद्वाष्पैरिति भावः, लोचनैः शिक्षिता वीक्षिता दृष्टा च। लोचनैरिति विशेषणे करणे च तृतीया। मालिनी वृत्तम्॥ २०॥

प्रथमेति। एकाकिनी सा सीता अस्मिन् कानने अरण्ये एवम् इत्थं तदेव अनुचरणम् अनुगमनं चरति अनुतिष्ठतीति तथोक्ता दुरितं क्लेशम् अगणयन्ती अबुध्यमाना दिगन्तान् पर्य्यटन्ती परितो गच्छन्ती कृशा क्षीणा रुचिः कान्तिः यस्य तम् अचिरेन्दुं नवोदितं चन्द्रं रोहिणीव प्रथमपथिकं नूतनपान्थम्, अज्ञातारण्यचर्य्यमिति भावः, रामभद्रम् अन्वियाय अनुजगाम। मालिनी वृत्तम्। उपमालङ्कारः॥ २१॥

तिर्य्यग्ग्रीवं विनमय शिरः पश्य वल्लीं शिरःस्था-
मग्रस्थस्ते चरति च करी, तत् स्थिरा तावदेधि॥ २२॥

यच्चिन्तितं तदिह दूरतरं प्रयाति,
यच्चेतसा न गणितं तदिहाभ्युपैति।
प्रातर्भवामि वसुधाधिपचक्रवर्त्ती,
सोऽहं व्रजामि विपिनं जटिलस्तपस्वी॥ २३॥

---

ग्रावेति। हे प्रिये। पुरः अग्रतः ग्राव्णां प्रस्तराणां ग्रन्थिं पङ्क्तिमिति यावत्, परिहर परित्यज, अत्र न गच्छ पदस्खलने विशेषाघातसम्भवादिति भावः, अत्र वीरुत् लता, परिदृश्यमानेति शेषः, कण्टकिनी कण्टकचिता विश्वक् समन्तात् बर्हिः कुशवनम्, अतः अवहिता सती किञ्चिदुच्चैः ईषत् मन्दं मन्दम् इत्यर्थः, उच्चैः उपरि पदं कुरुष्व निधेहि, निर्भरन्यासं मा कुरु, तथात्वे पदतलस्फोटनसम्भवादिति भावः। तिरश्ची ग्रीवा यत्र तत् यथा तथा शिरः मस्तकं विनमय अवनतं कुरु, शिरःस्थां शिरस उपरि वर्त्तमानां वल्लीं लतां पश्य अवलोकय, शिरोनमनाकरणे अनया वल्ल्या शिरः संश्लिष्यति इति भावः, करी हस्ती च ते तव अग्रस्थः सम्मुखवर्त्ती चरति, तत्तस्मात् तावत् स्थिरा निश्चला एधि भव, न गन्तव्यमग्रतः साम्प्रतमिति भावः। मन्दाक्रान्ता वृत्तम्॥ २२॥

यदिति। यत् चिन्तितम् अहं यौवराज्यं प्राप्य एवमेवं करिष्यामीति मनोरथीकृतमित्यर्थः, इह संसारे तत् मनोरथीकृतं दूरतरम् अतिशयेन दूरं प्रयाति गच्छति, नश्यतीति भावः, चेतसा यत् न गणितं न चिन्तितम् इह संसारे तत् दुःखमिति भावः, अभ्युपैति उपतिष्ठते। यद्वा इह संसारे

अथ श्रीरामम् अनुव्रज्य आगतः ( घ ) सुमन्त्रो दशरथं प्रति।
भवद्गिरा राज्यमपास्य तूर्णं वनं जगामैव रघुप्रवीरः।
निषङ्गपृष्ठः शरचापहस्तस्तं लक्ष्मणोऽगादनु सीतया च ॥ २४ ॥

तदाकलय्य दशरथः।

आहूतस्याभिषेकाय विसृष्टस्य ( प्रस्थितस्य ) वनाय च।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥ २५ ॥

---

यत् चिन्तितं, लोकेनेति शेषः, तत् दूरतरं प्रयाति, यत् चेतसा न गणितं, लोकेनेति शेषः, इह तत् अभ्युपैति। वाञ्छितं न सिध्यति अनिष्टञ्च समुपैतीति भावः। तथाहि यः अहं प्रातः प्रभाते वसुधाधिपानां राज्ञां चक्रवर्त्ती सम्राट् भवामि, सोऽहं जटिलः तपस्वी सन् विपिनं वनं व्रजामि गच्छामि, अहो विधेर्विलसितमिति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। वसन्ततिलकं वृत्तम् ॥ २३ ॥

( घ ) अनुव्रज्य अनुगम्य।

भवदिति। रघुप्रवीरः रामः भवतः गिरा वचनेन, आदेशेनेत्यर्थः, भवद्गिरेत्यत्र गुरोर्गिरेति पाठश्च, राज्यम् अपास्य विहाय तूर्णं शीघ्रं वनं जगामैव। लक्ष्मणः निषङ्गः तूणीरं पृष्ठे यस्य सः तथा शराः चापं धनुश्च हस्ते यस्य तथाभूतः सन् सीतया सह तं रामम् अन्वगाच्च अनुजगाम च। उपजाति वृत्तम् ॥२३॥

आहूतस्येति। हे सुमन्त्र! मया अभिषेकाय आहूतस्य आमन्त्रितस्य वनाय विसृष्टस्य प्रेषितस्य, प्रस्थितस्येति पाठान्तरं, तस्य रामस्य स्वल्पोऽपि आकारविभ्रमः आकारवैलक्षण्यमिति यावत्, न लक्षितः न निरीक्षितः। अनुष्टुप् वृत्तम् ॥ २५ ॥

हृदयान्नापयातोऽसि दिक्षु सर्वासु वीक्ष्यसे।
वत्स! राम! गतोऽसीति सन्तापादनुमीयते॥ २६॥

श्रुत्वा सुमन्त्रवचनेन सुतप्रयाणं,
शापस्य तस्य च विचिन्त्य विपाकवेलाम्।
हा राघवेति सकृदुच्चरिते नृपेण
निश्वस्य दीर्घतरमुच्छ्वसितं न भूयः॥ २७॥

अथ पौरजनः।

जातः सूर्य्यकुले, पिता दशरथः क्षौणीभुजामग्रणीः,

---

हृदयादिति। हे वत्स राम! त्वं हृदयात् न अपयातः न निर्गतः असि, हृदये तिष्ठस्येवेत्यर्थः, सर्वासु दिक्षु वीक्ष्यसे दृश्यसे, सङ्कल्पातिशयमहिम्ना सर्वजगतामेव राममयदर्शनादिति भावः, किन्तु सन्तापात् दुःखात् गतोऽसि इति अनुमीयते, यत्र यत्र रामसद्भावः तत्र तत्रैव सन्तापाभावः, यतोऽयं मे सन्तापातिशयो वर्त्तते तस्मात् रामो मम दूरं गत इत्यनुमानमिति भावः। अनुष्टुप् वृत्तम्॥ २६॥

श्रुत्वेति। नृपेण राज्ञा दशरथेन सुमन्त्रस्य वचनेन सुतस्य रामस्य प्रयाणं वनप्रस्थानं श्रुत्वा तस्य च शापस्य यज्ञदत्तमुनिदत्तस्येति भावः, विपाकवेलां, "दिष्टान्तमाप्स्यसि भवानपि पुत्रशोकात्"इति पुत्रशोकरूपस्वमरणकालं विचिन्त्य, हा राघव! हा राम! इति सकृत् एकवारम् उच्चरिते सति दीर्घतरं निश्वस्य भूयः पुनः न उच्छ्वसितं न निश्वसितं, प्राणविगमो जात इति भावः। उच्चरितमिति पाठे दीर्घतरं निश्वस्य हा राघव! इति सकृत् उच्चरितं भूयः पुनः न उच्छ्वसितमित्यन्वयः। वसन्ततिलकं वृत्तम्॥ १७॥

सीता सत्यपरायणा प्रणयिनी, यस्यानुजो लक्ष्मणः ।
दोर्दण्डेन समो नचास्ति भुवने, प्रत्यक्षविष्णुः स्वयं
रामो येन विडम्बितोऽपि विधिनाऽन्यस्मिन् जने का कथा ? ॥२८॥
जामाता पुरुषोत्तमो, भगवती लक्ष्मीः स्वयं कन्यका,
दूतो यस्य बभूव कौशिकमुनिर्यज्वा वशिष्ठः स्वयम् ।
दाता श्रीजनकः, प्रदानसमये चैकादशस्था ग्रहाः,
किं ब्रूमो भवितव्यतां हतविधेः रामोऽपि यातो वनम् ॥ २९ ॥

---

जात इति । सूर्य्यकुले सूर्य्यवंशे जातः, महाकुलीन इति भावः, क्षौणीभुजां भूपतीनाम् अग्रणीः श्रेष्ठः, सार्वभौम इत्यर्थः, दशरथः पिता, महापुरुषस्य पुत्र इति भावः, सत्यपरायणा सत्यधर्म्मरता सीता प्रणयिनी प्रेयसी, लक्ष्मणः अनुजः, यस्ये-त्युभयत्रान्वेति, भुवने त्रिलोक्यामित्यर्थः, दोर्दण्डेन बाहुबलेन समः तुल्यः, यस्येति पूर्व्वेणान्वयः, न च अस्ति नैव विद्यते, स स्वयं प्रत्यक्षविष्णुः साक्षात् नारायणः रामः अपि येन विधिना विडम्बितः प्रवञ्चितः तस्य हतविधेः अन्यस्मिन् जने का कथा ? किं वक्तव्यम् ? विडम्बनस्येति भावः । अत्र अन्यस्य विडम्बनं दण्डापूपिकया आयातमित्यर्थापत्तिरलङ्कारः, "दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते" इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

जामातेति । पुरुषोत्तमः स्वयं विष्णुः जामाता वरः, भगवती स्वयं लक्ष्मीः सीतेत्यर्थः कन्यका, कौशिकमुनि-र्विश्वामित्रः दूतः वार्त्ताहरः, योजक इति भावः, बभूव, स्वयं वशिष्ठः यज्वा विवाहयज्ञकर्त्ता, यस्येति सर्व्वत्रान्वेति, स श्रीजनकः दाता सम्प्रदानकर्त्ता, प्रदानसमये च ग्रहाः रव्यादयः

अथ वनस्थे रामे काकचरितम् ।

रक्षोऽभिचारचरुभाण्डमिव स्तनं यो
देव्या विदेहदुहितुर्विददार काकः ।
ऐषीकमस्त्रमधिकृत्य तदा तमक्ष्णा
काणीचकार चरमो रघुराजपुत्त्रः ॥ ३० ॥

अथ मन्त्रिभिरानीतो भरतो मातरम् उक्तिप्रत्यु-
क्तिकया पृच्छति ।

मातस्तातः क्व यातः ? सुरपतिभवनं, हा ! कुतः ? पुत्त्रशोकात्,
कोऽसौ पुत्त्रश्चतुर्णां ? त्वमवरजतया यस्य जातः, किमस्य ? ।

---

एकादशस्थाः लग्नात् एकादशराशिस्थिताः, शुभा इति भावः, "सर्वेऽप्युपान्त्ये शुभाः" इति ज्योतिषवचनात्, आसन्निति शेषः, तस्य जामाता स रामोऽपि वनं यातः, अतः हतविधेः दुर्दैवस्य भवितव्यताम् अवश्यम्भाविताम् किं ब्रूमः ? किं कथयामः ? दुर्दैवस्य असाध्यं किमपि नास्तीति भावः । अत्र कारणेन कार्य्य-समर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २९ ॥

रक्ष इति । यः काकः रक्षसाम् अभिचारे मारणार्थयज्ञ-कर्म्मणि चरुभाण्डमिव पायसकलसमिव देव्या विदेहदुहितुः सीतायाः स्तनं विददार नखैर्विदीर्णवान्, यदेत्यध्याहार्य्यमन्यथा तदेत्यस्यासङ्गतिः स्यादिति बोध्यम् । तदा चरमः आद्यः रघुराजपुत्रः रामः ऐषीकम् ईषीका तृणविशेषः, तन्निर्मितम् अस्त्रम् अधिकृत्य गृहीत्वा तं काकम् अक्ष्णा नेत्रेण काणीचकार एकं चक्षुरैषीकेणास्त्रेण नाशितवानित्यर्थः । वसन्ततिलकं वृत्तम् ॥ ३० ॥

मातरिति । हे मातः ! कैकयि ! तातः पिता क्व यातः ?

प्राप्तोऽसौ काननान्तं, किमिति ? नृपगिरा, किन्तथासौ बभाषे ?
मद्वाग्बद्धः,फलं ते किमिह ? तव धराधीशता, हा ! हतोऽस्मि ॥२१॥
सैषा निकृष्टमतिरात्मकुलोचितेषु
वंशेषु सत्स्वपि खला पिशिताशिनीव ।

---

कुत्र गतः ? ( भरतोक्तिः ) सुरपतेरिन्द्रस्य भवनं स्वर्गमित्यर्थः, गत इति शेषः । ( कैकय्युक्तिः ) हा इति शोके, कुतः ? कस्मात् कारणात् ? ( भरतोक्तिः ) पुत्रशोकात् पुत्रस्य रामस्य शोकात् । ( कैकय्युक्तिः ) चतुर्णां पुत्राणां मध्ये असौ कः पुत्रः यस्य शोकादित्युक्तमिति भावः । ( भरतोक्तिः ) त्वं यस्य अवरजतया अनुजत्वेन जातः, तवाग्रज इत्यर्थः । ( कैकय्युक्तिः ) अस्य मदग्रजस्य किं, वृत्तमिति शेषः । (भरतोक्तिः ) असौ त्वदग्रजः, राम इत्यर्थः, काननान्तं वनसीमां प्राप्तः गतः । ( कैकय्युक्तिः ) किमिति ? कथम् ? ( भरतोक्तिः ) नृपगिरा राजवाक्येन, ( कैकय्युक्तिः ) असौ राजा तथा त्वं वनं याहीत्यर्थः, किं कथं बभाषे उक्तवान् ? ( भरतोक्तिः ) मम वाचा सत्याङ्गीकारेणेत्यर्थः, बद्धः, मत्सत्यप्रतिपालनार्थं तं रामं वनं गन्तुमादिदेशेति भावः । ( कैकय्युक्तिः ) इह रामस्य वनप्रेषणे इति भावः, ते तव फलं प्रयोजनं किम् ? ( भरतोक्तिः ) तव धराधीशता भूपतित्वं, तव राज्यप्राप्त्यर्थं मया एतत्कृतमिति भावः । ( कैकय्युक्तिः ) हा खेदे, हतोऽस्मि विनष्टोऽस्मि । ( भरतोक्तिः ) । स्रग्धरा वृत्तम् ॥ २१ ॥

सैषेति । सा एषा निकृष्टा क्षुद्रा, नीचेत्यर्थः, मतिर्यस्याः सा आत्मनः स्वस्य कुलोचितेषु वंशानुरूपेषु, रघुवंशयोग्येष्विति अत एव सत्स्वपि शोभनेषु अपि, निष्कलङ्केष्वपीत्यर्थः, वंशेषु,

माकन्दशालिनि वने विषवल्लिकेव
हा हन्त ! कैकयसुता कथमाविरासीत् ॥ ३२ ॥
आनम्रमौलिमतिरोहितराजवेश-
मानन्दयन्तमखिलानवलोकनेन ।
हा हन्त ! कैकयसुता नयनाभिरामं
रामं कथं नु मुनिवेशधरं चकार ॥ ३३ ॥

अथ रामं प्रति भरतप्रयाणम् ।

रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्यापि च लक्ष्मणेन सकलं मात्रा सहैवोज्झितम् ।

---

कैकयस्येति भावः, पिशिताशिनीव राक्षसीव, पिशिताशनेवेति वा पाठः, खला क्रूरा कैकयसुता कैकेयी माकन्दशालिनि रसालशोभिनि वने विषवल्लिकेव विषलतेव कथम् आविरासीत् उत्पन्ना ? हा हन्त शोकातिशयसूचनार्थं पदद्वयम् । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ३२ ॥

आनम्रेति । हा हन्त इति पूर्ववत् कैकयसुता आनम्रमौलिम् आनतमस्तकं, चरणे प्रणतमिति भावः, अतिरोहितराजवेशम् अतिशयेन रोहितः शोभित इत्यर्थः, राजवेशः यस्य तथोक्तम् अवलोकनेन दर्शनप्रदानेन अखिलान् सर्वान् जनान् आनन्दयन्तं नयनाभिरामं दृष्टिप्रियं रामं कथं नु केन प्रकारेण खलु मुनिवेशधरं तापसं चकार ? वसन्ततिलकं वृत्तम् ॥ ३३ ॥

राम इति । रामः गुरोः पितुराज्ञां मालामिव मूर्ध्नि शिरसि निधाय काननं वनम् अगात् गतवान्, तद्भक्त्या

श्रीमद्राम ! मया त्वया सह वने स्थेयं, यतस्तेऽनुजः,
सौमित्रिः स शिशुर्नृपोऽपि भवतस्तापादितः स्वःपथम् ॥ २४ ॥

अथ वनमायातं भरतं प्रति श्रीरामवाक्यम्।

परस्त्री मातेव, क्वचिदपि न लोभः परधने,
न मर्य्यादाभङ्गः, क्षणमपि न नीचेष्वभिरुचिः।
रिपौ शौर्य्यं, धैर्य्यं विपदि, विनयः सम्पदि सताम्
इदं वर्त्म भ्रातर्भरत ! नियतं यास्यसि सदा ॥ २५ ॥

---

तस्मिन् रामे भक्तिः तया हेतुना लक्ष्मणेनापि मात्रा जनन्या सुमित्रया सहैव सकलं भार्य्यादिकम् उज्झितं परित्यक्तं श्रीमद्राम ! श्रीमन् रामेति वा पाठः, मया त्वया सह वने स्थेयं स्थातव्यं, यतः तेऽनुजः,सौमित्रिः लक्ष्मणः, त्वदनुचर इति भावः, सः शिशुः बालकः, यतो बालकेन तेन भवतः परिचर्य्या न सम्भवति ततो मयैव तव सकाशे स्थातव्यमिति भावः, नृपोऽपि राजापि भवतः तापात् शोकात् इतः अस्मात् लोकात् स्वःपथं स्वर्गपथं, सुरलोकमित्यर्थः, इतः गतः, ममारेत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २४ ॥

परस्त्रीति। हे भ्रातः ! भरत! परस्त्री परपत्नी मातेव, दृश्येति शेषः, क्वचिदपि परधने लोभः न, कार्य्य इति शेषः, मर्य्यादाभङ्गः शिष्टाचारव्यतिक्रमः न, कार्य्य इति शेषः, क्षणमपि अल्पकालमपि नीचेषु असज्जनेषु अभिरुचिः मनोनिवेशः, आदर इति यावत्, न, कार्य्येति शेषः, रिपौ शत्रौ शौर्य्यं विक्रमः, विपदि धैर्य्यं सहिष्णुता, सम्पदि अभ्युन्नतौ विनयः अनौद्धत्यम् इदं सतां साधूनां वर्त्म पन्थानं सदा सर्वस्मिन् काले नियतम् अवश्यं यास्यसि गमिष्यसि, भरत इत्यत्र भवतीति पाठे इदं

वाञ्छा सज्जनसङ्गमे, परगुणे प्रीतिर्गुरौ नम्रता,
विद्यासु व्यसनं, स्वयोषिति रतिर्लोकापवादाद्भयम्।
भक्तिः शूलिनि, शक्तिरात्मदमने, संसर्गमुक्तिः खले
एते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः॥ ३६॥
सामान्योऽयं धर्म्मसेतुर्नराणां काले काले पालनीयो भवद्भिः।
नत्वा नत्वा भाविनः पार्थिवेन्द्रान् भूयोभूयो याचते रामचन्द्रः॥३७॥

---

वर्त्म भवति, त्वं सदा नियतं यास्यसि, एतत् वर्त्मेति शेषः। शिखरिणी वृत्तम्॥ ३५॥

वाञ्छेति। सज्जनैः साधुभिः सह सङ्गमः तस्मिन् वाञ्छा अभिलाषः, परगुणे परेषां गुणे विद्याविनयादौ प्रीतिः सन्तोषः, गुरौ गुरुजने, मात्रादिष्विति भावः, नम्रता अवनतिः, विद्यासु ज्ञानेषु व्यसनम् आसक्तिः, स्वयोषिति निजपत्न्यां रतिः अनुरागः, लोकापवादात् लोकेषु अपवादः निन्दा, दुष्कृतकार्य्यजनितेति भावः, तस्मात् भयं भीतिः, शूलिनि ईश्वरे भक्तिः, आत्मदमने इन्द्रियवशीकरणे शक्तिः सामर्थ्यं, खले दुर्जने संसर्गमुक्तिः सङ्गवर्जनम् एते निर्मलगुणाः येषु वसन्ति तिष्ठन्ति, तेभ्यो नरेभ्यो नमः तान् नरान् प्रणमामीत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्॥ ३६॥

सामान्य इति। अयं नराणां सामान्यः साधारणः धर्म्मसेतुः धर्म्मसंक्रमः, धर्म्मपथ इयि यावत्, परस्त्री मातेव इत्याद्युक्तरूपः भवद्भिः काले काले समये समये पालनीयः रक्षणीयः, इति रामचन्द्रः भाविनः भविष्यतः पार्थिवेन्द्रान् राज्ञः भूयोभूयः पुनः पुनः नत्वा नत्वा प्रणम्य प्रणम्य याचते। शालिनी वृत्तम्; "मात्तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात्॥ २७॥

भरतः । हा हन्त ! मातरहह ! ज्वलितानलो मां,
कामं दहत्वशनिशैलकृपाणबाणाः ।
मथ्नन्तु, तान् विषहते भरतः सलीलं,
श्रीरामचन्द्रपदयोस्तु न विप्रयोगम् ॥ ३८ ॥

रामः । मां बाधते नहि तथा विपिनेषु वासो
राज्येऽरुचिर्जनकबान्धववत्सलस्य ।
रामानुजस्य भरतस्य यथा, प्रियायाः
पादारविन्दयुगलक्षतिरुत्पलाक्ष्याः ॥ ३९ ॥

---

हा हन्तेति । हा हन्त इति खेदातिशयव्यञ्जकमव्ययद्वयम् । अहह मातः ! कैकयीमुद्दिश्य सम्बोधनमिदम् । ज्वलितानलः ज्वलदग्निः मां कामं यथेच्छं दहतु भस्मीकरोतु, अशनिर्वज्रं शैलः पर्वतः कृपाणः असिः बाणः शरः एते मां मथ्नन्तु हिंसन्तु, भरतः सलीलं सावहेलं यथा तथा तान् ज्वलितानलादीन् विषहते विशेषेण सोढुं शक्नोतीत्यर्थः, श्रीरामचन्द्रपदयोः विप्रयोगं विरहं न तु नैव, विषहते इत्यन्वयः । वसन्ततिलकं वृत्तम् ॥ ३८ ।

मामिति । विपिनेषु वनेषु वासः मां तथा नहि नैव बाधते पीड़यति, जनकस्य पितुः बान्धवानाञ्च वत्सलस्य प्रियस्य रामानुजस्य मदनुजस्येत्यर्थः, भरतस्य राज्ये राज्यं कर्त्तुमित्यर्थः, अरुचिरनिच्छा तथा उत्पलाक्ष्या नीलोत्पलनयनायाः प्रियायाः सीतायाः पादारविन्दयुगलक्षतिः चरणपद्मयुगलक्षतं, विपिनपर्य्यटनादिति भावः, यथा बाधते इत्यन्वयः । वसन्ततिलकं वृत्तम् ॥ ३९ ॥

ततः सीतां प्रणमति भरतः ।

मूर्द्धा बद्धजटेन वल्कलभृता देहेन पादानतिं,
कुर्वाणे भरते, तथा प्ररुदितं तारस्वरैः सीतया ।
येनोद्विग्नविहङ्गसङ्कुलतरुर्निःसम्मदश्वापदः,
शैलेन्द्रोऽपि किलैष भूरिभिरभूत् साश्रुः पयःप्रस्रवैः ॥ ४० ॥

ततो भरतः श्रीरामं प्रति ।

आर्य्यो राज्यमलङ्करोतु, विपिने वासो मया स्वीकृतः
ताताज्ञापरिपालनव्रतफलं गृह्णातु मत्तो भवान् ।
इत्युक्तोऽप्युपगम्य नाकृत मनो राज्ये यदा राघवः,
सम्प्राप्तो भरतस्तदा निजपुरीमादाय तत्पादुके ॥ ४१ ॥

---

मूर्द्धेति । भरते बद्धा जटा यस्मिन् तादृशेन मूर्द्धा शिरसा तथा वल्कलभृता वल्कलाच्छादितेन देहेन पादयोः आनतिं प्रणामं कुर्वाणे सति सीतया तारस्वरैः उच्चैःस्वरैः तथा प्ररुदितं प्रकर्षेण क्रन्दितं येन रोदनेन एषः तत्रस्थ इति भावः, शैलेन्द्रोऽपि पर्वतराजोऽपि उद्विग्नैः त्रस्तैः विहङ्गैः सङ्कुलाः व्याप्ताः तरवः यस्य यस्मिन् वा सः निर्नास्ति सम्मदो हर्षः येषां तादृशाः श्वापदाः जन्तवः यस्मिन् तथाभूतः तथा भूरिभिः बहुभिः पयसां प्रस्रवैः निर्झरैरित्यर्थः, साश्रुः सवाष्पः अभूत् किल, अतिकरुणतरं तदासीदिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४० ॥

आर्य्य इति । आर्य्यः भवानित्यर्थः, राज्यम् अलङ्करोतु शोभयतु, मया विपिने वने वासः स्वीकृतः अवलम्बितः, भवान् मत्तः मत्सकाशात् तातस्य पितुः आज्ञायाः आदेशस्य परि-

राज्ये ते चाभिषिच्याथ नन्दिग्रामं गतः स्वयम् ।
राघवागमनापेक्षी भरतोऽपालयत् महीम् ॥ ४२ ॥

रामे प्राप्ते वनान्तं कथमपि भरतश्चेतनां प्राप्य तातं
नीत्वा देवेन्द्रलोकं मुनिजनवचनादूर्द्ध्वदेहक्रियाभिः ।
भ्रातुः शोकाज्जटावानजिनवृततनुः पालयामास नन्दि-
ग्रामे तिष्ठन्नयोध्यां रघुपतिपुनरागामिभोगाय वीरः ॥ ४३ ॥

दृष्ट्वाश्रमानथ चिराय विहाय चित्र-
कूटस्थलीमिह विराधवधं विधाय ।

---

पालनमेव व्रतं तस्य फलं सुकृतरूपं गृह्णातु स्वीकरोतु इती-त्यम् उपगम्य भरतेन उक्तोऽपि अभिहितोऽपि राघवः रामः यदा राज्ये मनः न अकृत नाकरोत्, तदा भरतः तत्पादुके तस्य रामस्य पादुके आदाय गृहीत्वा निजपुरीमयोध्यां सम्प्राप्तः प्रत्याजगाम । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४१ ॥

राज्ये इति । अथ निजपुरीप्रत्यागमनानन्तरं भरतः ते पादुके राज्ये अभिषिच्य स्वयं नन्दिग्रामं गतः राघवस्य रामस्य आगमनम् अपेक्षते इति तथाभूतः सन् महीं पृथिवीम् अपालयत् शशास । अनुष्टुप् वृत्तम् ॥ ४२ ॥

रामे इति । वीरो भरतः रामे वनान्तं वनसीमां प्राप्ते सति कथमपि चेतनां प्राप्य मुनिजनानां वशिष्ठादीनां वचनात् ऊर्द्ध्वदेहक्रियाभिः अन्त्येष्टिक्रियादिभिः तातं पितरं देवेन्द्रलोकं स्वर्गं नीत्वा प्रापय्य भ्रातुः रामस्य शोकात् जटा-वान् जटाधारी अजिनेन चर्म्मणा आवृता तनुर्यस्य तथाभूतः नन्दिग्रामे तिष्ठन् रघुपतेः रामस्य पुनरागामिने भोगाय अयोध्यां पालयामास शशास । स्रग्धरा वृत्तम् ॥ ४३ ॥

कुम्भोद्भवेन मुनिना सह मन्त्रयित्वा
रामो निवासमकरोदथ पञ्चवट्याम् ॥ ४४ ॥

तं पयोदमिव वीक्ष्य सवाष्पं कम्पमानकमनीयकलापाः ।
ताण्डवानि विदधुस्तरुषण्डे दण्डकाननशिखण्डियुवानः ॥४५॥

राघवेण लघुना रघुनाथप्रेरितेन विपिनादुपनीतम् ।
स्वर्णवर्णमकरोदधिकर्णं कर्णिकारकुसुमं करभोरुः ॥४६॥

---

दृष्ट्वेति। अथ भरतप्रतिगमनानन्तरं रामः आश्रमान् तापसनिवासान् दृष्ट्वा चिराय चित्रकूटस्थलीं चित्रकूटपर्वतभूमिं विहाय परित्यज्य इह अरण्यभूमौ विराधस्य राक्षसस्य वधं विधाय कृत्वा अथानन्तरं कुम्भोद्भवेन मुनिना अगस्त्येन सह मन्त्रयित्वा पञ्चवट्यां निवासमकरोत्। वसन्ततिलकं वृत्तम् ॥ ४४ ॥

तमिति। दण्डकाननशिखण्डियुवानः दण्डकारण्यस्थिततरुणमयूराः सवाष्पम् अश्रुजलसहितं तं रामं पयोदं मेघमिव वीक्ष्य दृष्ट्वा कम्पमानः कमनीयः रमणीयः कलापः वर्हः येषां ते सन्तः, "कलापो भूषणे वर्हे" इत्यमरः. तरुषण्डे वृक्षस्कन्धे ताण्डवानि नृत्यानि विदधुः चक्रुः। स्वागता वृत्तं. "स्वागता रनभगैर्गुरुणा च" इति लक्षणात् ॥ ४५ ॥

राघवेणेति। करभोरुः सीता रघुनाथेन रामेण प्रेरितः आदिष्टः तेन लघुना कनिष्ठेन राघवेण लक्ष्मणेनेत्यर्थः, विपिनात् वनात् उपनीतम् आहृतं स्वर्णवर्णं काञ्चनप्रभं कर्णिकारकुसुमम् अधिकर्णं कर्णे इति अधिकर्णं, विभक्त्यर्थेऽव्ययीभावः, अकरोत् चकार। स्वागता वृत्तम् ॥४६ ॥

तत्र गमनसमये रामं प्रति सीता।

पदकमलरजोभिर्मुक्तपाषाणदेहाम्
अलभत यदहल्यां गोतमो धर्म्मपत्नीम्।
त्वयि विचरति शीर्णग्रावृणि विन्ध्याद्रिपादे
कति कति भवितारस्तापसा दारवन्तः॥ ४७॥

अथ लक्ष्मणो नदीं दृष्ट्वा नाविकमाह्वयति।

नाविकः प्रविश्य श्रीरामचन्द्रं प्रति।

मानुषीकरणरेणुरस्ति ते पादयोरिति कथा प्रथीयसी।
क्षालयामि तव पादपङ्कजे नाथ! दारुदृषदोस्तु का भिदा?॥४८॥

---

पदेति। हे नाथ! यत् यतः गोतमः पदकमलयोः चरणारविन्दयोः, तवेति भावः, रजोभिः धूलिभिः मुक्तः त्यक्तः पाषाणदेहः प्रस्तरावयवः यया तथाभूतां धर्म्मपत्नीम् अहल्याम् अलभत लब्धवान्, तस्मात् त्वयि शीर्णाः स्खलिता ग्रावाणः यस्मात् तादृशे विन्ध्याद्रिपादे, शीर्णग्रावविन्ध्याद्रिपादे इति पाठान्तरम्; विचरति पर्य्यटति सति कति कति बहव इति भावः, तापसाः दारवन्तः सस्त्रीका भवितारः भविष्यन्ति। मालिनी वृत्तम्॥ ४७॥

मानुषीति हे नाथ! ते तव पादयोः चरणयोः मानुषीकरणरेणुः मानुषीत्पादनकारणं रजः अस्ति इति कथा वार्त्ता प्रथीयसी प्रसिद्धिं गता, प्रचारितेत्यर्थः। अतः तव पादपङ्कजे चरणकमले क्षालयामि धावयामि, येन रेणवपगमः स्यादिति भावः। ननु पाषाणस्य मानुषत्वे काष्ठमय्यास्तव तरणेः किमिति भयमित्यत आह, दार्विति।—दारुदृषदोः काष्ठपाषाणयोः भिदा

म—१०

उपलतनुरहल्या गोतमस्येह शापात्
इयमपि मुनिपत्नी शापिता कापि वा स्यात् ।
चरणनलिनसङ्गानुग्रहं ते भजन्ती,
भवतु चिरमियं नः श्रीमती पोतपात्री ॥ ४९ ॥

श्रीरामः ।

दृष्ट्वातिदैन्यं जनकात्मजायास्तत्रैव रामः सह लक्ष्मणेन ।
गोदावरीतीरसमाश्रितेषु देशेषु चक्रे निजपर्णशालाम् ॥ ५० ॥

---

भेदः का तु ? कैव, न कापीत्यर्थः, येन पाषाणं मानवी क्रियते तेन काष्ठं तथा न क्रियते इति केन वक्तुं शक्यते इति भावः । रथोद्धता वृत्तं, "रात्परैर्नरलगै रथोद्धता" इति लक्षणात् ॥ ४८ ॥

ननु गोतमशापादहल्या पाषाणमयी आसीत् मम पदरजसा तस्याः शापमुक्तिर्जाता, तव कथं तस्मात् भीतिः ? इत्यत आह, उपलेति ।—अहल्या गोतमस्य शापात् इह अस्मिन्, गोतमाश्रमे इति भावः, उपलतनुः पाषाणशरीरा, आसीदिति शेषः, इयमपि नः अस्माकं पोतपात्री नौका, पोतपुत्रीति पाठे क्षुद्रा नौरित्यर्थः, शापिता शापमिता कापि मुनिपत्नी वा स्यात् भवितुमर्हतीत्यर्थः । तथापि रामस्य निर्बन्धे तत् का गतिः ? इत्याह, चरणेति ।—इयमपि ते तव चरणनलिनसङ्गानुग्रहं पादपद्मसंसर्गरूपमनुग्रहं भजन्ती लभमाना सती चिरं श्रीमती प्राप्तनिजसौन्दर्या भवतु, शापात् मुक्ता भवत्विति भावः । वसन्ततिलकं वृत्तम् ॥ ४९ ॥

दृष्ट्वेति । रामः जनकात्मजायाः सीतायाः अतिदैन्यम् अतिकातरत्वं, पुनः पुनः पर्य्यटनासामर्थ्यमिति यावत्, दृष्ट्वा तत्रैव पञ्चवट्यां गोदावरीतीरसमाश्रितेषु देशेषु स्थानेषु, वनेषु

लक्ष्मणस्तत्र पञ्चवटीरमणीयतामवलोक्य।

एषा पञ्चवटी रघूद्वहकुटी, यत्रास्ति पञ्चावटी
पान्थस्यैकघटी पुरस्कृततटी संश्लेषवृत्तौ वटी।
गोदा यत्र नटी तरङ्गिततटी कल्लोलचञ्चत्पुटी
दिव्यामोदकुटी भवाब्धिशकटी भूतक्रियादुष्कुटी॥ ५१॥

---

इति पाठान्तरम्; लक्ष्मणेन सह निजपर्णशालां पत्ररचित-कुटीरं चक्रे कृतवान्। इन्द्रवज्रा वृत्तम्॥ ५०॥

एषेति। एषा पञ्चानां वटानां समाहारः पञ्चवटी पञ्चभिर्वटैः परिशोभिता भूमिरिति यावत्, रघूद्वहस्य रामस्य कुटी निवासः। रघूद्वहेत्यत्र रघूत्तमेति पाठान्तरम्। यद्वा हे रघूद्वह! एषा पञ्चवटी तव कुटी निवासः, अस्त्विति शेषः, रामं प्रति लक्ष्मणस्योक्तिरियम्। यत्र पञ्चवट्यां पञ्चावटी पञ्चानामवटानां गर्त्तानां समाहारः पञ्चावटी, पञ्चसु वटवृक्ष-मूलेषु पञ्च सरस्वतीगर्त्ताः सन्तीति भावः, "गर्त्तावटौ भुवि श्वभ्रे" इत्यमरः। तां विशिनष्टि, पान्थस्येत्यादि।—पान्थस्य प्रवासिनो जनस्य एका अद्वितीया घटी जलपानपात्रं, तत्रैव पान्था जलं पिबन्तीति भावः। पुरस्कृततटी पुरस्कृताः शोभिताः तटाः प्रान्तदेशाः यस्याः तथोक्ता। संश्लेषवृत्तौ वटी संश्लेषः दारापत्यादिसङ्गः तस्य वृत्तौ प्रसङ्गे वटी औषध-वटिकेत्यर्थः, संसारनिवर्त्तिकेति भावः। संश्लेषभित्ताविति पाठे संश्लेषस्य भित्तौ भेदे, निवारणे इति यावत्। यत्र यस्याः समीपे तरङ्गितौ तरङ्गाविद्धौ तटौ यस्याः तथाभूता कल्लोलैः ऊर्मिभिः चञ्चन्तः वेगेन स्फुरन्त इति भावः, पुटाः जलनिर्गम-मार्गा यस्याः तथोक्ता दिव्यानाम् आमोदानां सौरभाणां, पद्मादिसमुत्पन्नानामिति भावः, कुटी कूपिका, भवः संसार

एव अब्धिः समुद्रः तस्य शकटी यानरूपा, तत्पारगमनार्थं पोतरूपेत्यर्थः, एतस्या दर्शने सेवने च लोकानां संसारचिन्तापगमेन परमार्थचिन्तायाः समुद्भवादिति भावः। भूतानां प्राणिनां क्रियासु व्यापारेषु अवगाहनादिषु उत्कटी औत्कव्यशालिनी, औद्धत्यवतीत्यर्थः, आन्दोलनवतीति भावः। भूतक्रियादुष्कुटीति पाठे भूतानां क्रियाभिः सामान्यधर्मैः दुष्कुटी दुर्लभा, बहुपुण्यलभ्येति भावः। यद्वा भूतानां पञ्चानां क्षित्यादीनां क्रिया सृष्टिरूपा, स्थूलशरीरमित्यर्थः, तस्या दुःखं कुटति पिनष्टीति तथाभूता, संसारध्वंसनेन मुक्तिदायिनीति भावः। अपरश्चार्थः—हे रघूद्वह! एषा कुटी आवासभूमिः पञ्चवटी पञ्चानां पृथिव्यादीनां भूतानां वटी निहन्त्री, वट विशातने इत्यस्मात् पचाद्यच्प्रत्ययः। यां प्राप्य न पुनर्जन्मबन्ध इति भावः, यत्र यस्यां पञ्चानां रूपरसगन्धस्पर्शशब्दानाम् अवटी अनिहन्त्री च, रूपादिविषयभोगास्पदञ्चेत्यर्थः, यथेयं मोक्षभूमिस्तथा भोगभूमिरपीत्यर्थः, पान्थस्य मोक्षमार्गकृतप्रयाणस्य एका अद्वितीया घटी विश्रामस्थानं, घट विश्रमणे इत्यस्मात् पचाद्यच्प्रत्ययः। यत्र यस्यां पुरस्कृता संगृहीता तटी समित्कुशादिदेवार्चनसमृद्धिः यया तथोक्ता, तट च समृद्धाविति धातोः पचाद्यच्। तथा संश्लेषस्य संसारासङ्गस्य भित्तौ भेदे, ध्वंसने इत्यर्थः, वटी वज्ररूपा, "वज्रं वटी पविः सारे" इति शाश्वतः। गोदा गावो वेदवाचः ददातीति गोदा मुनिमत्तेत्यर्थः, नटी नर्त्तकी, आनन्देन वेदगानपरा नृत्यतीति भावः। तरङ्गिताः उन्नतानताः तटाः प्रान्तभागा यस्याः तथोक्ता, कल्लोलैर्देवैः, "कल्लोलो देववारिणोः" इति धरणिः। करणभूतैरिति भावः, चञ्चन्तः राजन्तः पुटा निकुञ्जदेशा यस्याः

क्रीड़ाकल्पवटं विसर्पितजटं विश्वाम्बुजन्मावटं
पिष्टाण्डौघघटं धृताङ्घ्रिशकटं ध्वस्तक्षमासङ्कटम् ।
विद्युच्चारुरुचा विधूतकपटं सीताधरालम्पटं
भिन्नारीभघटं विरुग्णशकटं वन्दे गिरां दुर्घटम् ॥५२॥

---

सा,दिव्यः अतिप्रगाढ़ इति यावत्,य आमोदः संसारवासनेत्यर्थः, तस्य कुटो क्षयकरी, "निवासक्षययोः कुटी" इति चरकः । अत एव भवाब्धिशकटो संसारसागरतरणिः, भूतानां प्राणिनां, श्वापदानामित्यर्थः, क्रियाभिरितस्ततः सञ्चारैः दुष्कुटी दुःखेन वस्तुं शक्येत्यर्थः, मोक्षमार्गप्रवृत्तानाम् आपाततः प्रतिबन्धभूताः श्वापदा अत्र वसन्तीति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥५१॥

क्रीड़ेति । क्रीड़या लीलया कल्प्यते इति कल्पः, कर्म्मण्यणप्रत्ययः, वटः वटवृक्षपत्रमित्यर्थः येन तथोक्तं प्रलयाब्धिजले वटपत्रे भासमानमित्यर्थः, विसर्पिता विस्तारिता जटा येन तथोक्तं जटाधरमित्यर्थः, विश्वमेव अम्बुजन्म पद्मं तस्य आ समन्तात् वटः सूर्य्यः, तत्प्रकाशकत्वादिति भावः, तं पिष्टा चूर्णिता अण्डौघानां ब्रह्माण्डसङ्घानां घटा विस्तारः येन तथाभूतं धृतौ अङ्घ्री चरणौ यैः ते धृताङ्घ्रयः भक्ता इत्यर्थः, तेषां शकटं संसारमार्गश्रमनिवारकरथमित्यर्थः, ध्वस्तः नाशितः क्षमायाः पृथिव्याः सङ्कटः उपद्रवः येन तादृशं विद्युत इव चारुः उज्ज्वला रुक् दीप्तिः तया विधूतः नाशितः दूरीकृतः कपटः तमोरूपः, मायेत्यर्थः येन तथोक्तं, सीताया अधरस्य आलम्पटः सर्वथा लुब्धः तं भिन्ना अरयः शत्रवः इभघटा हस्तिसङ्घा इव येन तथाभूतं विरुग्णाः खण्डिताः शकटा राक्षसेश्वरा येन तथोक्तं, "शको यवनराक्षसाः" इति विश्वः, "टो

इतः पञ्चवटीवृत्तान्तः ।

स्त्रीमायया हरति शूर्पणखेति बुद्ध्वा
सौमित्रिणा सपदि खड्गनिकृत्तनासा ।
सा रावणस्य भगिनी कुपिताऽथ तत्र
प्रत्यानिनाय खरदूषणसैन्यमुग्रम् ॥ ५३ ॥

तत्र श्रीरामगाम्भीर्य्यम् ।

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोल्लसित(ड्डमर)पुलकं वक्त्रकमलम् ।
मुहुः पश्यन्, शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढ़यति रघूणां परिवृढ़ः ॥ ५४ ॥

---

महेश्वर आख्यातः" इत्येकाक्षरकोषः। गिरां वाचां दुर्घटम् अनिर्वचनीयमित्यर्थः, वन्दे प्रणमामि। शार्दूलविक्रीड़ितं वृत्तम् ॥ ५२ ॥

स्त्रीमाययेति। शूर्पा इव नखा यस्याः सा शूर्पणखा नाम राक्षसी स्त्रीमायया सुन्दरीनारीरूपकपटेन हरति नाशयति, अस्मानिति शेषः, इति बुद्ध्वा सौमित्रिणा लक्ष्मणेन सपदि झटिति खड्गेन निकृत्ता छिन्ना नासा यस्याः तथाभूता सा रावणस्य भगिनी, अथानन्तरं नासाकर्त्तनानन्तरं कुपिता सती तत्र पञ्चवट्याम् उग्रं दारुणं खरदूषणसैन्यं खरस्य दूषणस्य तयोः सैन्यं प्रत्यानिनाय उपस्थापितवतीत्यर्थः। वसन्ततिलकं वृत्तम् ॥ ५३ ॥

कपोले इति। रघूणां परिवृढ़ः स्वामी रामः करिकलभस्य हस्तिशावकस्य दन्तद्युतिं दशनकान्तिं मुष्णाति हरतीति तथोक्ते तन्निभे इत्यर्थः, जानक्याः सीतायाः कपोले

चतुर्दशसहस्रकं परमचण्डरक्षोगणं
निहत्य समराङ्गने सकलमेकबाणेन सः।
खरं त्रिशिरसान्वितं तदनु दुर्धरं दूषणं
जघान घनघोषणस्फुरितकार्मुको राघवः॥ ५५॥

---

आदर्शभूते इति भावः, स्मरस्मेरं कामावेशेन विकस्वरम् अत एव गण्डयोः उल्लसितम् उद्भासितं पुलकं लोमाञ्चः यस्य तथाभूतं वक्त्रकमलं मुखपद्मं, प्रतिफलितमिति भावः, मुहुः पुनः पुनः पश्यन् तथा रजनिचराणां राक्षसानां सेनायाः कलकलं कलरवं, सिंहनादमित्यर्थः, शृण्वन् जटाजूटस्य जटानिचयस्य ग्रन्थिं बन्धं द्रढ़यति दृढ़ीकरोति। न चात्र "आद्यः करुणबीभत्सरौद्रवीरभयानकैः" इत्युक्तनयेनापाततः विरोधिनोर्वीरशृङ्गारयोः समावेश इति दोषो वाच्यः तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोध एव दोषायेत्युक्तत्वात्, अत्र तु वीरस्यालम्बनं रजनिचरसेना, शृङ्गारस्यालम्बनं सीतेति न कश्चित् विरोध इति बोध्यम्। शिखरिणी वृत्तम्॥ ५४॥

चतुर्दशेति। स राघवः रामः घनेन सान्द्रेण घोषणेन टङ्काररवेण स्फुरितं राजितं कार्मुकं यस्य तथाभूतः सन् समराङ्गने संग्रामभूमौ एकबाणेन एकेन शरेण चतुर्दशसहस्रकं चतुर्दशसहस्रसंख्यकमित्यर्थः, परमचण्डम् अतिभीषणं रक्षोगणं सकलं समग्रं निहत्य विनाश्य तदनु तदनन्तरं त्रिशिरसा त्रिमूर्ध्ना नाम राक्षसेन अन्वितं सहितं खरं तथा दुर्धरं दुर्भेद्यं दूषणञ्च जघान हतवान्। शिखरिणी वृत्तम्॥ ५५॥

सीतारूपं सुधाहृद्यं श्रुत्वा शूर्पणखामुखात् ।
राममोहाय मारीचं प्रेषयामास रावणः ॥ ५६ ॥

मारीचः स्वगतम् । कृतान्तदण्डदोर्दण्डः सकलचण्डांशुवंशाखण्डलो रामचन्द्रः । अयमपि महेन्द्रावस्कन्दस्थानं लङ्केश्वरः । तदवश्यं शमनभवनातिथिना भवितव्यं जीवितेनाद्य । (ङ

राघवादपि मर्त्तव्यं, मर्त्तव्यं रावणादपि ।
उभाभ्यामपि मर्त्तव्ये वरं रामान्न रावणात् ॥ ५७ ॥

---

सीतेति । रावणः शूर्पणखाया मुखात् सुधावत् हृद्यं मनोज्ञं सीतायाः रूपं सौन्दर्य्यं श्रुत्वा रामस्य मोहाय मोहनाय, वञ्चनायेत्यर्थः, मारीचं नाम राक्षसं प्रेषयामास प्रेरितवान् । अनुष्टुप् वृत्तम् ॥ ५६ ॥

(ङ) कृतान्तेति । कृतान्तस्य यमस्य, "कृतान्तो यमदैवयोः" इति विश्वः, दण्ड इव दोर्दण्डः बाहुदण्डः यस्य तथोक्तः, सकलेषु सर्वेषु चण्डांशुवंश्येषु सूर्य्यवंशीयेषु आखण्डलः इन्द्रः । सकलेत्यत्र स किलेति पाठान्तरम् । महेन्द्रेति । महेन्द्रस्य देवेन्द्रस्य अवस्कन्दः पराजयः तस्य स्थानं क्षेत्रम्, इन्द्रजयीति यावत् । भवितव्यं भावि तव्यप्रत्ययः ।

राघवादिति । राघवात् रामात् अपि मर्त्तव्यं रावणाज्ञया तदभियोगे इति भावः, रावणादपि मर्त्तव्यम् अस्यादेशाकरणे इति भावः, उभाभ्यामपि मर्त्तव्ये मरणस्यावश्यम्भावित्वे रामात् वरं, मरणमिति शेषः, रामात् मरणस्य मोक्षोपायत्वादिति भावः, न रावणात्, रावणात् मरणे नरके गमनमिति भावः । राघवादपीत्यत्र रामादपि चेति, उभाभ्यामपीत्यत्र उभयोरिति,

सुललितफलमूलैस्तत्र कालं कियन्तं
दशरथकुलदीपे सीतया लक्ष्मणेन ।
गमयति, दशकण्ठोत्कण्ठया प्रेरितं द्राक्
कनकमयकुरङ्गं जानकी सन्ददर्श ॥ ५८ ॥

ततः सीता श्रीरामं प्रति ।

देहं हैममयं हरिन्मणिमयं शृङ्गद्वयं वैद्रुमा-
श्चत्वारोऽपि खुरा रदच्छदयुगं माणिक्यकान्तिद्युति ।
नेत्रे नीलसुतारके सुवितते तद्वच्चलं प्रेक्षितं
तत्तद्रत्नमयं किमत्र बहुना सर्वाङ्गरम्यो मृगः ॥ ५९ ॥

---

वरं रामान्न रावणादित्यत्र वरं रामो न रावण इति च पाठान्तरम् । अनुष्टुप् वृत्तम् ॥ ५७ ॥

सुललितेति । तत्र पञ्चवट्यां दशरथकुलदीपे रामे सीतया लक्ष्मणेन च सह सुललितैः शोभनैः, सुस्वादैरित्यर्थः, फलमूलैः कियन्तं कालं गमयति अतिवाहयति सति जानकी दशकण्ठस्य उत्कण्ठया औत्सुक्येन प्रेरितं कनकमयकुरङ्गं काञ्चनमयमृगं द्राक् झटिति, सहसेत्यर्थः, सन्ददर्श दृष्टवती । मालिनी वृत्तम् ॥ ५८ ॥

कुरङ्गं विशिनष्टि, देहमिति ।—हैममयं स्वर्णमयं देहं शरीरं, हरिन्मणिमयं मरकतमयं शृङ्गद्वयं, वैद्रुमाः प्रबालमयाः चत्वारोऽपि खुराः, रदच्छदयुगम् ओष्ठाधरद्वयमित्यर्थः, माणिक्यस्य कान्तिवद्द्युतिः कान्तिर्यस्य तादृशं, नीला सुतारका शोभना तारका कनीनिका ययोः तथाभूते सुविस्तृते नेत्रे, प्रेक्षितं दर्शनं तद्वत् तथैव चलं चञ्चलं तत्तदङ्गम्, अवशिष्टमिति शेषः, रत्नमयं यस्येति सर्वशेषः, अत्र विषये बहुना, उक्तेनेति

स्वङ्गं मायाकुरङ्गं द्रुतनिधननिशाचारिमारीचमग्रे
धावन्तं सञ्चरन्तं क्षणमपि गहने जानकी याचति स्म ।
रामं कामाभिरामं निशितशरधनुर्धारिणा लक्ष्मणेन
क्षिप्रं तद्रक्षणायोल्लिखिततटभुवा सोऽप्यगात्तद्वधाय ॥ ६० ॥

प्रियतम ! मृगमद्भुताङ्गमेतं
मृगपतिविक्रम ! देहि, मे प्रसीद ।
इति जनकसुतावचोऽनुरोधात्
कनकमृगं सशरोऽन्वियाय रामः ॥ ६१ ॥

---

शेषः, किम् ? न किमपि प्रयोजनमित्यर्थः, मृगः सर्वेषु अङ्गेषु रम्यः मनोहरः । शार्दूलविक्रीडितं वृत्तम् ॥ ५८ ॥

स्वङ्गमिति । जानकी कामाभिरामं मदनसुन्दरं रामं स्वङ्गं शोभनाङ्गं, द्रुतम् अचिरभावि निधनं यस्य तथोक्तः स चासौ निशाचारी मारीचश्चेति तम् अग्रे पुरतः धावन्तं, क्षणमपि गहने निविड़देशे सञ्चरन्तं याचति स्म प्रार्थयाञ्चक्रे । सोऽपि रामः तस्याः सीतायाः रक्षणाय रक्षार्थम् उल्लिखितौ धनुष्कोट्या चिह्नितौ तटौ द्वारोपान्तभागौ यस्याः तथाभूता भूः कुटी येन तथोक्तेन, तद्धनुर्लेखां कोऽपि नोल्लङ्घयिष्यतीति भावः, निशिताः शराः धनुश्च तानि धारयतीति तादृशेन लक्ष्मणेन सह तस्य स्वर्णमृगस्य बधाय क्षिप्रं शीघ्रम् अगात् गतवान् । स्रग्धरा वृत्तम् ॥ ६० ॥

प्रियतमेति । हे मृगपतिविक्रम सिंहविक्रान्त ! प्रियतम ! अद्भुताङ्गं विचित्राङ्गम् एतं परितो दृश्यमानमित्यर्थः, मृगं मे मह्यं देहि, प्रसीद प्रसन्नो भव, इतीत्थं जनकसुतायाः सीतायाः

रामः। वत्स लक्ष्मण! त्वमस्याः प्रजावत्याः सहायो भव। यावदहमिनं कनककुरङ्गं निहत्यागच्छामीति निष्क्रान्तः।

आलोकयन् विशिखमेककरेण मन्दं
कोदण्डकाण्डमपरेण करेण सज्यम्।
संनह्य पुष्पलतया पटलं जटानां
रामो मृगं मृगयति वनवीथिकासु॥ ६२॥

अथ मृगचरितम्।

हस्तप्राप्यमुपैति, लेढ़ि च तृणं, न स्पृश्यतां गाहते,
गुल्मान् प्राप्य निवर्त्तते, किसलयान्याघ्राय चाघ्राय च।
भूयः पश्यति, गच्छति प्रतिदिशं, कण्डूयते स्वां तनुं,
दूरं धावति, तिष्ठति प्रचलति प्रान्तेषु मायामृगः॥ ६३॥

---

वचोऽनुरोधात् वचननिर्बन्धात् हेतोः रामः सशरः सन् कनकमृगम् अन्विष्याय अनुससार। पुष्पिताग्रा वृत्तम्॥ ६१॥

आलोकयन्निति। रामः एककरेण एकेन करेण दक्षिणेनेति भावः, विशिखं शरम्, अपरेण करेण वामेनेति भावः, सज्यम् अधिरोपितमौर्वीकं कोदण्डकाण्डं धनुर्दण्डं, धृतमित्युभयत्राध्याहार्य्यं, मन्दं सावहेलमिति यावत्, यथा तथा आलोकयन् पश्यन्, आलोकयन्नित्यत्रान्दोलयन्निति, मन्दमित्यत्र सार्द्धमिति, सज्यमित्यत्र धुन्वन्निति च पाठान्तरं सुगमम्; पुष्पलतया जटानां पटलं चयं सन्नह्य संयम्य वनवीथिकासु अरण्यश्रेणिषु मृगं मृगयति अन्विष्यति। वसन्ततिलकं वृत्तम्॥ ६२॥

हस्तेति। मायामृगः काञ्चनकुरङ्गः हस्तप्राप्यं यथा तथा उपैति उपगच्छति, समीपं गच्छतीत्यर्थः, हस्ताभ्यासमिति पाठे हस्तसविधमित्यर्थः, तृणं लेढ़ि खादति, स्पृश्यतां

तत्र सीता लक्ष्मणं प्रति।

चिरयति मृगान्वेषी नाथः कथं रघुनन्दनो
वनपरिसरा ह्येते क्रूरक्षपाचरभैरवाः।
मुहुरपि भवानुक्तो न ज्यायसः परिमार्गणे
व्रजसि, तदहो चेतः किं किं न लक्ष्मण! शङ्कते?॥ ६४॥
चिराद्दृष्टे रामे करणकटुभिर्मैथिलसुता-
वचोभिः कोदण्डाटनिजनितरेखान्तरगताम्।

---

स्पर्शयोग्यतां न गाहते न प्राप्नोति, धर्त्तुं न शक्यते इति भावः, गुल्मान् लतागहनानि प्राप्य निवर्त्तते तत्र न प्रविशतीति भावः, किसलयानि पल्लवान् आघ्राय च आघ्राय च पुनः पुनराघ्रायेत्यर्थः, भूयः पुनः पश्यति, प्रतिदिशं गच्छति, स्वां निजां तनुम् अङ्गं कण्डूयते शृङ्गाभ्याम् उद्घर्षतीत्यर्थः, दूरं धावति, तिष्ठति प्रान्तेषु आश्रमस्य प्रान्तदेशेषु प्रचलति प्रकर्षेण चरति। पश्यतीत्यत्र त्रस्यतीति पाठे त्रस्यति बिभेतीत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्॥ ६३॥

चिरयतीति। हे लक्ष्मण! नाथः आर्य्यपुत्रः रघुनन्दनः मृगान्वेषी मृगानुसारी सन् कथं किमर्थं चिरयति विलम्बते? एते वनपरिसराः अरण्यविभागाः क्रूरैः दारुणैः क्षपाचरैः राक्षसैः भैरवाः हि भीषणा एव, भवान् मुहुः पुनः पुनः उक्तोऽपि मया अनुरुद्धोऽपीत्यर्थः, ज्यायसः ज्येष्ठस्य परिमार्गणे परितः अन्वेषणे न व्रजसि न गच्छसि, तत् तस्मात् अहो आश्चर्य्यं किं कथं किं किमपीत्यर्थः, न शङ्कते? अपि तु शङ्कत एवेत्यर्थः। हरिणी वृत्तं "नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्॥ ६४॥

विधायैनां रामस्फुरितपदपद्माङ्कितभुवं
तदध्वानं पश्यन् कथमपि स सौमित्रिरगमत् ॥ ६५ ॥
नीतो दूरं कनकहरिणच्छद्मना रामभद्रः,
पश्चादेनं द्रुतमनुसरत्येष वत्सः कनिष्ठः ।
त्रिस्यत् बिभ्यत् प्रविशति ततः पर्णशालाञ्च भिक्षुः
धिग् धिक् कष्टं प्रथयति निजामाकृतिं रावणोऽयम् ॥ ६६ ॥
रामोन्मुक्तैकबाणप्रतिहतहृदयः काञ्चनाङ्गः कुरङ्गः,
सद्यो मारीचनामाऽजनि रजनिचरः सान्द्ररक्तात्तवक्त्रः ।

---

चिराद्दृष्टे इति । स सौमित्रिर्लक्ष्मणः रामे चिराद्दृष्टे चिर-मदृष्टे, चिरयतीति भावः, करणकटुभिः इन्द्रियव्यथकैरित्यर्थः, मैथिलसुतायाः सीतायाः वचोभिः हेतुभिः एनां सीतां कोदण्डस्य धनुषः अटन्या कोट्या जनिता उत्पादिता या रेखा तस्या अन्तरम् अभ्यन्तरं गता तां विधाय धनुष्कोटिरेखातो वहिर्मा गच्छेत्युक्त्वेति भावः, रामस्य स्फुरितैः राजितैः पदपद्मैः अङ्किता चिह्निता भूर्यत्र तं तदध्वानं तस्य रामस्य अध्वानं पन्थानं पश्यन् अवलोकयन् कथमपि अनिच्छयेति भावः, अगमत् गतवान् । शिखरिणी वृत्तम् ॥ ६५ ॥

नीत इति । रामः कनकहरिणः काञ्चनमृगः तस्य छद्मना कपटेन दूरं नीतः आकृष्टः । एष कनिष्ठो वत्सः लक्ष्मणः पश्चात् द्रुततरम् एनं रामम् अनुसरति अनुधावति । ततः अनन्तरम् अयं रावणः भिक्षुः सन्न्यासी सन् बिभ्यत् बिभ्यत् त्रस्यन् त्रस्यन् पर्णशालां प्रविशति, धिक् धिक् कष्टं निजाम् आकृतिं दशाननावयवं प्रथयति आविष्करोति च । मन्दा-क्रान्ता वृत्तम् ॥ ६६ ॥

भिक्षुः कोऽपि क्षणार्द्धान्मणिखचितचलत्कुण्डलश्रेणिशोभा-
वीचीखेलत्कपोलस्फुरितदशशिराः कुम्भकर्णाग्रजोऽभूत् ॥ ६७ ॥
बाणेन दिव्येन रघुप्रवीरो मृगस्य वक्षःस्थलबद्धलक्ष्यः ।
विव्याध यावत्तरसा, तपस्वी दशाननस्तावदिहाजगाम ॥ ६८ ॥
आह च । भिक्षां प्रयच्छ ननु सूर्य्यकुलावतंसे !
वंशे विदेहनृपतेः प्रथितासि साध्वि !।

---

रामेति । काञ्चनाङ्गः कुरङ्गः मृगः रामेण उन्मुक्तः प्रहितः यः एको बाणः शरः तेन प्रतिहतं हृदयं यस्य तथाभूतः सन् सद्यः तत्क्षणं सान्द्रैः घनैः रक्तैः आक्तं लिप्तं वक्षो यस्य तथोक्तः मारीचनामा रजनिचरः राक्षसः अजनि अभूत् । कोऽपि भिक्षुः सन्न्यासी प्राक् पर्णशालां प्रविष्ट इति भावः, क्षणार्द्धात् अत्यल्पात् क्षणात् मणिखचितानां रत्नाविद्धानां चलताम् आन्दोलयतां कुण्डलानां कर्णभूषणविशेषाणां श्रेण्याः शोभावीचीभिः शोभातरङ्गैः खेलत्सु स्फुरत्सु कपोलेषु गण्डदेशेषु स्फुरितानि प्रतिविम्बितानि दश शिरांसि यस्य तथाभूतः कुम्भकर्णस्य अग्रजः रावणः अभूत्, स्वरूपं जग्राहेति भावः । स्रग्धरा वृत्तम् ॥ ६७ ॥

बाणेनेति । रघुप्रवीरो रामः यावत् दिव्येन बाणेन मृगस्य वक्षःस्थले बद्धः लक्ष्यः येन तथाभूतः वक्षःस्थलं लक्षयन्नित्यर्थः, तरसा प्रसह्य विव्याध, तावत् तपस्वी भिक्षुवेशधरः दशाननः इहास्मिन् आश्रमे आजगाम । मृगस्य वक्षःस्थलबद्धलक्ष्य इत्यत्र ततो मृगं वक्षसि बद्धलक्ष्य इति पाठे ततोऽनन्तरं बद्ध-लक्ष्यः वक्षसि मृगमित्यर्थः । उपजाति वृत्तम् ॥ ६८ ॥

भिक्षामिति । नन्विति सम्बुद्धिसूचकमव्ययम् । ननु सूर्य्य-

एतद्गृहाण हरिपादरजोविमिश्रं,
निर्माल्यदाम सकलेप्सितसिद्धिहेतु ॥ ६९ ॥

इति तुलसीं दर्शयति।

दृग्भङ्गिमन्दि(ञ्जि)मशतैरसतीरहस्यम्
अन्वेषयन् कपटभिक्षुक! लक्षितोऽसि।
आसं प्रभुः सुभग! नाहमिति क्षमस्व,
भैक्षाय मा कुरु मृषा, त्वयमञ्जलिस्ते ॥ ७० ॥

स व्याहरन् धर्मिणि! देहि भिक्षामलङ्घयल्लँक्ष्मणदत्तरेखाम्।
जग्राह तां पाणितले क्षिपन्तीं समाह्वयन्तीं रघुराजपुत्रौ ॥७१॥

---

कुलावतंसे सूर्य्यकुलालङ्कारभूते! साध्वि! भिक्षां प्रयच्छ देहि, विदेहनृपतेः जनकस्य राजर्षेः वंशे प्रथितासि विख्यातासि, हरेः नारायणस्य पादरजोभिः चरणरेणुभिः विमिश्रं युक्तं सकलानाम् ईप्सितानाम् अभिलषितानां सिद्धिहेतु सिद्धेः कारणम् एतत् निर्माल्यदाम निर्माल्यमालां गृहाण। वसन्ततिलकं वृत्तम् ॥ ६९ ॥

दृगिति। हे कपटभिक्षुक! दृशां भङ्गीनां मन्दिमशतैः मन्दमन्दसञ्चालनशतैः, कटाक्षवीक्षणशतैरिति यावत्, मञ्जिमशतैरिति पाठे मनोहरतातिशयैरिति भावः, असतीनां पुंश्चलीनां रहस्यं वृत्तम् अन्वेषयन् मृगयमाणः लक्षितः असि, हे सुभग! सुन्दर! अहं भैक्षाय भिक्षादानाय न प्रभुः न समर्था आसम् अभवम् इति हेतोः क्षमस्व मृषा व्यर्थं मा कुरु, प्रयासमिति शेषः, अयं तु ते तव अञ्जलिः, कृताञ्जलिस्त्वां क्षमार्थं याचे इति भावः। वसन्ततिलकं वृत्तम् ॥ ७० ॥

स इति। स रावणः हे धर्मिणि! धर्मचारिणि! भिक्षां

मार्गं मार्गं मृगयति मृगारातिरामेऽभिरामे
शोकं शोकं गतवति गते लक्ष्मणे लक्ष्मणेन।
सीता सीतातपनतनया राज्यलङ्कामलङ्कां
नीता नीतासुरसुरवधूरावणे रावणेन॥ ७२॥

---

देहि इति व्याहरन् उच्चरन् लक्ष्मणेन दत्ता धनुष्कोट्या अङ्कितेत्यर्थः, रेखा ताम् अलङ्घयत् अतिचक्राम। यद्यपि लक्ष्मणदत्तरेखायाः केनापि अलङ्घ्यत्वं तथापि रावणस्य कामचरत्वात् तपोऽतिरेकाच्च तल्लङ्घनमिति बोध्यम्। व्याहरन्नित्यत्र व्याहरदिति, अलङ्घयदित्यत्र प्रलङ्घयन्निति च पाठे लक्ष्मणदत्तरेखां प्रलङ्घयन् हे धर्मिणि! भिक्षां देहीति व्याहरत् उक्तवानित्यर्थः। धर्मिणि धर्मचारिणि मयि भिक्षां देहीत्यपि केचित् व्याचक्षते। क्षिपन्तीम् आक्षिपन्तीं रघुराजपुत्रौ रामलक्ष्मणौ समाह्वयन्तीम्, आकारयन्तीमिति पाठे स एवार्थः, "हूतिराकारणाह्वानम्" इत्यमरः, तां सीतां पाणितले करतले जग्राह च। उपजाति वृत्तम्॥ ७१॥

मार्गमिति। मृगस्य अयं मार्गः तं मृगसम्बन्धिनं मार्गं पन्थानं मृगयति अन्विष्यति, अनुधावति इत्यर्थः, अभिरामे सुन्दरे मृगारातिः मृगशत्रुश्चासौ रामश्चेति तस्मिन् मृगयाशीले रामे इत्यर्थः, लक्ष्मणे गते स्वनिकटं प्राप्ते सति लक्ष्मणेन अशुभचिह्नभूतेन शिवारुतादिना शोकं शोकम्, आभीक्ष्ण्ये द्विर्भावः, अत्यन्तं शोकं गतवति, नितराम् उन्मनस्कतां भजतीति भावः, सति नीतासुरसुरवधूरावणे रावणेन नीतः प्रापितः असुराणां सुराणाञ्च वधूनां नारीणां रावयति क्रन्दयतीति रावणः इः कामो यस्य तथाभूतः रावणः तेन असुरसुरवधूहारिणा रावणेनेत्यर्थः,

सीता दशमुखनीता भीता वदति स्म काञ्चनद्योता।
रघुनन्दन! रघुनन्दन! रामचन्द्र! रामचन्द्रेहि (ति) ॥७३॥

हा राम! हा रमण! हा जगदेकवीर!
हा नाथ! हा रघुपते! किमुपेक्षसे माम्।
इत्थं विदेहतनयां बहुधालपन्तीम्
आदाय राक्षसपतिर्नभसा जगाम ॥ ७४ ॥

---

सीतातपनतनया सीता लाङ्गलपद्धतिः तया आ सम्यक् तपति तपश्चरतीति तथोक्तः सीतातपनः यज्ञार्थं लाङ्गलकृष्टक्षेत्रे यज्ञं कृत्वा यस्तपस्तप्तवानित्यर्थः तस्य जनकस्येत्यर्थः, तनया कन्या सीता राजते इति राजिः विद्योतमानेत्यर्थः, अतएव अलमत्यर्थं काम्यते इति अलङ्कामा अतिशयेन स्पृहणीयेत्यर्थः, सा चासौ लङ्का चेति तां नीता प्रापिता। अत्र मार्गं मार्गमित्यादिस्वर-व्यञ्जनसंहतेः क्रमेण तेनैवावृत्तेर्यमकालङ्कारः—"सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः। क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते॥" इति लक्षणात्। मन्दाक्रान्ता वृत्तम् ॥ ७२ ॥

सीतेति। काञ्चनवत् द्योतः दीप्तिर्यस्याः सा हेमाङ्गीत्यर्थः, सीता दशमुखेन रावणेन नीता हृता सती हे रघुनन्दन! रघुनन्दन! रामचन्द्र रामचन्द्र एहि आगच्छ इति, रामचन्द्रेति वा पाठः, वदति स्म आकारयति स्म ॥ ७३ ॥

हा रामेति। हा राम! हा रमण! हा जगदेकवीर! हा नाथ! हा रघुपते! किं कथं माम् उपेक्षसे न पश्यसीत्यर्थः, इत्थं बहुधा आलपन्तीं विदेहतनयां सीताम् आदाय राक्षसपतिः रावणः नभसा आकाशमार्गेण जगाम गतवान्। वसन्ततिलकं वृत्तम् ॥ ७४ ॥

रावणस्य रथसङ्गता सती नूपुरं परिससर्ज सत्वरा ।
उत्तरीयमपि कङ्कणं क्वचिच्चारुहारमपि सा स्थले स्थले ॥ ७५ ॥

अथ जटायुवृत्तान्तः ।

इतो बाणं रामः क्षिपति हरिणे मुक्तकरुणः,
सचापः सौमित्रिः स्वजनमनुयाति द्रुतमितः ।
इतः सीता भिक्षामुपनयति भिक्षोः करतले,
त्वयं व्योम्नि प्रेक्षन् युगपदहमालोकयमिदम् ॥ ७६ ॥
रावणेन हृता सीता कृष्णपक्षेऽसिताष्टमी ।
अर्द्धरात्रौ दिनस्यार्द्धे चार्द्धचन्द्रार्द्धभास्करे ॥ ७७ ॥

---

रावणस्येति । सा सती पतिव्रता सीता रावणस्य रथसङ्गता रथोपरिस्था सती सत्वरा क्वचित् क्वचित् स्थले स्थले नूपुरम्, उत्तरीयं, कङ्कणं, चारुहारं मनोहरहारम् अपि परिससर्ज परितत्याज । रथोद्धता वृत्तम् ॥ ७५ ॥

इत इति । इतः अस्मिन् प्रदेशे रामः मुक्तकरुणः निर्दयः सन् हरिणे काञ्चनमृगे बाणं शरं क्षिपति, इतः अस्यां दिशि सौमित्रिर्लक्ष्मणः सचापः धनुर्धरः सन् द्रुतमितः सत्वरं गतः सन् स्वजनम् आत्मजनं, राममित्यर्थः, अनुयाति अनुगच्छति । इतः अमुष्यां दिशि सीता भिक्षोः सन्यासिनः करतले भिक्षाम् उपनयति ददाति । व्योम्नि आकाशे प्रेक्षन् सञ्चरन् अहं युगपत् समकालम् इदं त्वयं रामलक्ष्मणसीताव्यापारत्रितयमित्यर्थः, आलोकयम् अपश्यम् । शिखरिणी वृत्तम् ॥ ७६ ॥

रावणेनेति । रावणेन कृष्णपक्षे असितपक्षे असितः शनैश्चरः अष्टमः स्वजन्मराश्यपेक्षया अष्टमराशिस्थः यस्याः सा, अष्टमशनेः अमङ्गलविधायित्वस्य ज्योतिःशास्त्रप्रतिपादितत्वादिति

रावणरथस्थां सीतां दृष्ट्वा स्वगतम्।

मारीचमृगयाव्यग्रे रामभद्रे च लक्ष्मणे।
कथमेषा कुरङ्गाक्षी रावणस्य रथोपरि?॥ ७८॥

---

भावः, अर्द्धं राति ददातीति अर्द्धरा भिक्षान्नस्य अर्द्धदानकर्त्रीत्यर्थः, अर्द्धचन्द्रस्य अर्द्धं तस्येव भाः कान्तिर्यस्याः सा मलिनप्रायेत्यर्थः, सीता अत्रौ अत्रिमुनेः समीपे, आश्रमसन्निधावित्यर्थः, दिनस्य अर्द्धे मध्याह्नसमये इत्यर्थः, करे पाणौ हृता गृहीतेत्यर्थः। केचित्तु अर्द्धचन्द्रार्द्धभास्करे इत्येकं पदं कृत्वा अर्द्धचन्द्रस्य अष्टमीचन्द्रस्येत्यर्थः, यत् अर्द्धःचतुर्थीचन्द्र इत्यर्थः, तद्वत् भास्करः सूर्य्यः यस्मिन् तथाभूते, कुलवधूहरणात् अतीव मलिनभास्करे इति भावः, दिनस्यार्द्धं इत्यस्य विशेषणतया व्याचक्षते। अर्द्धचन्द्रेऽर्द्धभास्करे इति पाठमाश्रित्य व्याख्यान्तरम्। दिनस्य, दैवस्येति शेषः, अर्द्धे चैत्रे मासीत्यर्थः, मकरादिषट्कं दिनं कर्कादिषट्कं निशेति स्मरणात्। "मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः" इत्यमरोक्तेर्देवानां मानुषवर्षेणाहोरात्रकीर्त्तनाच्च। तत्रापि अकृष्णपक्षे शुक्लपक्षे अर्द्धः अष्टकलः चन्द्रः यस्मिन् तादृशे अतएव अर्द्धरात्रे, पितृणामिति शेषः, शुक्लपक्षस्य पितृणां रात्रित्वेन कीर्त्तनात् तदर्द्धे इत्यनेन शुक्लपक्षीयाष्टम्यामित्यर्थः प्रतीयते। अर्द्धभास्करे मध्यन्दिनवर्त्तिनि आदित्ये असितः शनैश्चरः अष्टमो यस्याः तथोक्ता सीता रावणेन हृता इत्यन्वयः। तदुक्तं वाराहे,—"चैत्रमाससिताष्टम्यां मुहूर्त्ते वृन्दसंज्ञिते। राघवस्य प्रियां भार्य्यां जहार दशकन्धरः॥" इति। अनुष्टुप् वृत्तम्॥७७॥

मारीचेति।—रामभद्रे लक्ष्मणे च मारीचस्य मृगया हननं

आकाशादवतरन्तं जटायुं दृष्ट्वा रावणः ।

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः ? स वज्रपतनाद्भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणम्
आं ज्ञातं, स जटायुरेष जरसा ग्रस्तो बधं वाञ्छति ॥ ७९ ॥

रावणं प्रति जटायुः ।

जन्म ब्रह्मकुले, हरार्च्चनविधौ कृत्वा शिरःकर्त्तनं
भक्तिर्वज्रिणि बाहुदण्डदलनव्यापारशक्तिः परा(र्मता) ।

---

तत्र व्यग्रः व्यापृतः तस्मिन् सति एषा कुरङ्गाक्षी मृगनयना सीता रावणस्य रथोपरि कथं, तिष्ठतीति शेषः । अनुष्टुप् वृत्तम् ॥ ७८ ॥

मैनाक इति । अयं मैनाकः गगने आकाशे अव्याहतं केनापि अविघ्नितं मम मार्गं रुणद्धि आवृणोति किम् ? तस्य मैनाकस्य कुतः कस्मात् शक्तिः सामर्थ्यम् ? यतः सः वज्र-पतनात् वज्रप्रहारात् महेन्द्रादपि, किं पुनस्तद्विजेतुर्मत्त इति भावः, भीतः तस्मात् मैनाको नायमिति निश्चयः । सोऽपि तार्क्ष्यः गरुत्मान् निजेन विभुना नारायणेन समं सह मां रावणं जानाति, मया पूर्वं प्रभुसहितः पराजितः तस्मात् सोऽपि नायमिति भावः । आं ज्ञातम् ! एष जरसा वार्द्धकेन ग्रस्तः, क्लिष्ट इति पाठान्तरम् ; जटायुः बधं, मत्-सकाशादिति भावः, वाञ्छति अभिलषति । अत्र प्रकृते जटा-युषि अन्यस्य मैनाकादेः संशयात् सन्देहालङ्कारः, "सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" इति लक्षणात् । शार्दूल-विक्रीड़ितं वृत्तम् ॥७९॥

हेलोत्तोलितकेलिकन्दुकनिभः कैलास उत्पाटित-
स्तत् किं रावण ! लज्जसे न ? हरसे चौर्य्येण पत्नीं रघोः ॥८०॥
जन्म ब्रह्मकुले, तपस्त्वनुपमं वीर्य्यञ्च लोकोत्तरं,
किञ्चैश्वर्य्यमहो त्रिलोकजयिनः (ता) स्वर्गाङ्गनास्वामिनः ।
इत्यस्मादपि वाञ्छितं किमधिकं, सीता समाकृष्यते,
तस्मात्त्वं सह बान्धवैः पशुमते ! यातोऽसि निःशेषताम् ॥ ८१ ॥

---

जन्मेति । हे रावण ! ब्रह्मणः कुले वंशे जन्म, ब्रह्मणः प्रपौत्रोऽसीति भावः, हरस्य अर्चनविधौ पूजनविधाने शिरसां कर्त्तनं छेदनं, कृन्तनमिति पाठान्तरे स एवार्थः, कृत्वा भक्तिः, प्राणानपि अगणयित्वा हरमर्चयसीत्यर्थः, वज्रिणि वज्रायुधे इन्द्रे बाहुदण्डैः यत् दलनं स एव व्यापारः तत्र शक्तिः सामर्थ्यं परा महती, सतेति पाठे ख्यातेत्यर्थः । हेलया अवलीलया उत्तोलितं यत् केलिकन्दुकं क्रीड़ागेण्डुकं तन्निभः तत्सदृशः, हेलोल्लासितेति पाठान्तरं, कैलासः गिरिः उत्पाटितः उन्मूल्य उद्धृत इत्यर्थः, अथच चौर्य्येण रघोः रामस्य पत्नीं हरसे, तत् तस्मात् न लज्जसे किम् ? निर्लज्जस्त्वमिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८० ॥

जन्मेति । ब्रह्मकुले ब्रह्मणः वंशे जन्म, तपस्तु अनुपमम् उपमारहितं, शिरःकर्त्तनावधिकत्वादिति भावः, वीर्य्यञ्च लोकोत्तरम् अलौकिकं, त्रिलोकविजयीति भावः । किञ्च त्रिलोकजयिनः तथा स्वर्गाङ्गनानां देवाङ्गनानां स्वामिनः भोक्तुरिति यावत्, तवेति शेषः, ऐश्वर्य्यं प्रभुत्वम् अहो आश्चर्य्यं, त्रिलोकजयितेति पाठे त्रिलोकजयितया हेतुना स्वर्गाङ्गनानां स्वामिन इत्यर्थः, इत्यस्मादपि अधिकं वाञ्छितम् अभिलषितं किम्,

अविदुषस्तव दोषमहं सहे, विसृज रावण ! वीरपतिव्रताम् ।
शरणमस्मि जटायुरहं सखा दशरथस्य, रथस्तव तिष्ठतु ॥ ८२ ॥

तथापि तमवधीर्य्य गच्छति रावणे जटायुः ।

रे रे भोः परदारचौर ! किमिदं धीरं त्वया गम्यते,
तिष्ठाधिष्ठितगन्धमादनतटः प्राप्तो जटायुः स्वयम् ।
मुञ्चैनां पतिदेवतां, न खलु चेन्मत्तुण्डचण्डाङ्कुश-
क्रीड़ा(क्रूरा)कर्षणनिर्गतास्त्रमुरसः पास्यन्ति गृध्रास्तव ॥८३॥

---

अस्तीति शेषः, यत् सीता समाक्रुष्यते चौर्य्येणापक्रियते, तस्मात् हे पशुमते ! पशोरिव मतिः बुद्धिर्यस्य तथाभूत ! निःशेषतां नास्ति शेषो यस्य स निःशेषः तस्य भावः तां निर्वंशतामित्यर्थः, यातः गतः असि, एतेन तव कर्म्मणा राक्षसकुलं निःशेषं भविष्यतीति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ८१ ॥

अविदुष इति। हे रावण ! अविदुषः अज्ञस्य तव दोषं सीताहरणापराधमित्यर्थः, अहं सहे क्षमे, वीरपतिव्रतां वीरपतिरतां, सीतामिति शेषः, विसृज मुञ्च। अहं दशरथस्य सखा जटायुः शरणं रक्षिता अस्मि भवामि, "शरणं गृहरक्षित्रोः" इत्यमरः, तव रथः तिष्ठतु भूमौ अवरोहत्वित्यर्थः। द्रुतविलम्बितं वृत्तं "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥८२

रे रे इति। रे रे इति अवज्ञासूचकं सम्बोधनम्। भोः परदारचौर परस्त्रीतस्कर ! त्वया धीरं मन्दं मन्दं यथा तथा निरुद्वेगमिति भावः, गम्यते किमिदम् ? किमरे इति पाठान्तरम्। तिष्ठ स्थिरो भव अधिष्ठितं गन्धमादनस्य गिरेः तटं येन सः गन्धमादनतटवासीत्यर्थः, गन्धमादनेत्यत्र चन्दना-

सीतामाश्वासयन् रावणं प्रति क्रोधं नाटयति ।

मा भैषीः पुत्त्रि सीते ! व्रजति मम पुरो नैष दूरं दुरात्मा,
रे रे रक्षः ! क्व दारान् रघुकुलतिलकस्यापहृत्य प्रयासि ? ।
चञ्च्वाक्षेपप्रहारैः(स्फु)स्त्रुटितधमनिभिर्दिक्षु विक्षिप्यमाणै-
राशापालोपहारं दशभिरपि भृशं त्वच्छिरोभिः करोमि ॥ ८४ ॥

---

चलेति पाठे चन्दनाचलः मलयाद्रिरित्यर्थः, जटायुः स्वयं प्राप्तः उपस्थितः । इमां पतिदेवतां पतिव्रतां मुञ्च त्यज । चेत् यदि न खलु नैव, मुञ्चेरिति शेषः, तदा गृध्राः पक्षि-विशेषाः तव उरसः वक्षःस्थलात् मम तुण्ड एव चण्डः तीक्ष्णः अङ्कुशः अस्त्रविशेषः तस्य क्रीड़या यत् आकर्षणं निर्दलनं तेन निर्गतम् अस्त्रं रक्तं, मच्चण्डतुण्डाङ्कुशक्रूरावस्करणव्रणा-स्टगिति पाठे मम चण्डं भीषणं तुण्डमेव अङ्कुशः तेन यत् क्रूरं निदारुणम् अवस्करणं कुट्टनं तेन ये व्रणाः क्षतानि तेभ्यः असृक् रुधिरं, निर्गतमिति शेषः, पास्यन्ति । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८३ ॥

मा भैषीरिति । हे पुत्त्रि सीते ! मा भैषीः भयं मा कुरु, एषः दुरात्मा मम पुरः अग्रतः दूरं न व्रजति न गन्तुं शक्नो-तीत्यर्थः । रे रे रक्षः ! राक्षस ! रघुकुलतिलकस्य रामस्य दारान् भार्य्याम् अपहृत्य चोरयित्वा क्व कुत्र प्रयासि गच्छसि ? नैव गन्तुं शक्नोषीति भावः, चञ्च्वा आक्षेपेण प्रसारणेन ये प्रहाराः तैः स्फुटिताः क्षताः, त्रुटिता इति वा पाठः, धमनयः शिराः येषां तैः दशभिरपि तव शिरोभिः मुण्डैः दिक्षु आशासु विक्षिप्यमाणैः भृशमतिमात्रम् आशापालानां दिक्पालानाम् उपहारं पूजां करोमि । स्रग्धरा वृत्तम् ॥ ८४ ॥

आः पापिन् ! पश्यतो मे रघुतिलकबधूं चोरयित्वा प्रयातुं
सीतां शीतांशुलेखामिव गिरिशशिरःशायिनीमुद्यतोऽसि ।
एभिश्छित्त्वा शिरांसि प्रखरनखमुखैर्दीप्तचूड़ामणीनि
त्वामद्याहं गरुत्मानुरगमिव सुधाहारिणं संहरामि ॥ ८५ ॥

जानामि त्वां दशास्य ! प्रबलभुजबलव्यूढ़कैलासशैलं
नीत्वा वैदेहपुत्त्रीं जलनिधिशरणं कस्य हेतोः प्रयासि ? ।
किं वा दूरं शराणां दिशि दिशि पततां, किन्तु निर्लक्ष्यबाण-
व्यापारो नो विधेयः, समरमनुसर, प्रीयतां साहसश्रीः ॥ ८६ ॥

---

आः पापिन्निति ! आः पापिन् पापाचार ! पश्यतो मे, अनादरे षष्ठी, पश्यन्तं मामनादृत्येत्यर्थः, गिरिशस्य हरस्य शिरःशायिनीं शिरःस्थितां शीतांशुलेखामिव शशिकलामिव रघुतिलकस्य रामस्य वधूं सीतां चोरयित्वा अपहृत्य प्रयातुं गन्तुम् उद्यतः प्रवृत्तः असि, अद्य अहं गरुत्मान् गरुड़ः सुधाहारिणम् अमृतचौरम् उरगमिव भुजङ्गमिव त्वाम् एभिः प्रखरैः तीक्ष्णैः नखमुखैः नखाग्रैः दीप्ताः चूड़ामणयः किरीटा येषु तानि तव शिरांसि छित्त्वा संहरामि नाशयामि । उपमालङ्कारः । स्रग्धरा वृत्तम् ॥ ८५ ॥

जानामीति । हे दशास्य दशानन ! प्रबलेन भुजानां बलेन व्यूढ़ः उद्धृतः कैलासशैलः येन तथाभूतं महाबलभुजशालिनमित्यर्थः, त्वां जानामि, बाहुबलं दर्शयेति भावः, वैदेहपुत्त्रीं जानकीं नीत्वा अपहृत्येत्यर्थः, कस्य हेतोः किमर्थं जलनिधिरेव शरणम् आश्रयः तत् प्रयासि गच्छसि ? वा अथवा दिशि दिशि पततां शराणां, दाशरथेरिति भावः, दूरं किम् ? न किमपीत्यर्थः, किन्तु निर्नास्ति लक्ष्यं यस्य तादृशः

अथ युद्धम् ।

अक्षं विक्षिपति, ध्वजं विभजते, मथ्नाति नद्धं युगं,
चक्रं चूर्णयति, क्षिणोति तुरगान् रक्षःपतेः पक्षिराट् ।
रूक्षं गर्जति, तर्जयत्यभिभवत्यालम्बते ताड़य-
त्याकर्षत्यपकर्षति प्रचलति न्यञ्चत्युदञ्चत्यपि ॥ ८७ ॥

---

बाणानां शराणां व्यापारः सम्प्रयोगः नो विधेयः न कर्त्तव्यः, समरं युद्धं, रामेणेति भावः, अनुसर कुरु, साहसस्य रणव्यापारस्य श्रीः शोभा प्रीयतां प्रीता भवतु, चरितार्थतां गच्छत्वित्यर्थः । स्रग्धरा वृत्तम् ॥ ८६ ॥

अक्षमिति । पक्षिराट् जटायुः रक्षसां पतेः रावणस्य अक्षं रथचक्रान्तरालं काष्ठं विक्षिपति विपरीतं क्षिपति, ध्वजं विभजते भग्नं करोति, दलयते इति पाठे दलयते त्रोटयतीत्यर्थः, नद्धं सम्बद्धं युगं रथाग्रवर्त्तिकाष्ठविशेषं मथ्नाति मर्दयति, मृद्नातीति पाठे स एवार्थः । चक्रं चूर्णयति खण्डयति, तुरगान् अश्वान् क्षिणोति नाशयति, रूक्षम् उग्रं यथा तथा, रूक्षमित्यत्र रुन्धन्निति पाठे रुन्धन् मार्गमावृण्वन्नित्यर्थः, गर्जति चीत्करोति, तर्जयति तर्जनां करोति, अभिभवति तिरस्करोति, आलम्बते मार्गमालम्ब्य तिष्ठति, ताड़यति प्रहरति, आकर्षति, अपकर्षति अङ्गात् वसनादिकं च्यावयतीत्यर्थः, अवलुम्पतीति पाठे तथैवार्थः, प्रचलति उड्डयते, न्यञ्चति अधोगच्छति, उदञ्चति उद्गच्छति अपि, अत्रानेकासु क्रियासु एकस्य कारकपदस्य उक्तत्वात् दीपकभेदः, तदुक्तं दर्पणे—"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" इति । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८७ ॥

क्रुद्धं ततो दृढ़चपेटशिलातलेन
रक्षः पिपेष गगनेऽद्भुतपक्षिराजम् ।
ईषत्स्थितासुरपतद्भुवि राम ! राम !
रामेति मन्त्रमनिशं निगदन् जटायुः ॥ ८८ ॥

अथ कृतरथभङ्गं पक्षिराजं (वीरं) निहत्य
क्षितिगतमवलोक्य श्वासमात्रावशेषम् ।
जनकनृपतिपुत्रीं क्षिप्रसादाय लङ्कां
सरभसमुपदध्रेऽशोककेलीवनान्ते ॥ ८९ ॥

---

क्रुद्ध इति । ततोऽनन्तरं रक्षः रावणः क्रुद्धं सत्, क्रुद्ध इति पुंलिङ्गपाठः प्रामादिकः, रक्षःशब्दस्य "नैर्ऋतो यातु-रक्षसो" इत्यमरोक्तेर्नपुंसकलिङ्गत्वात्तद्विशेषणस्य तथैव युक्त-त्वादिति बोध्यम् । दृढ़श्चपेट एव शिलातलं प्रस्तरखण्डः तेन गगने अन्तरीक्षे, स्थितमिति शेषः, अद्भुतपक्षिराजम् आश्चर्यपक्षिप्रवरं, गगने इत्यत्र गहने इति पाठान्तरम् ; पिपेष निष्पिष्टवान् । जटायुः ईषत् अल्पं स्थिता असवः प्राणा यस्य तथाभूतः सन्, तेन प्रहारेणेति भावः, राम राम राम इति मन्त्रम् अनिशम् अनवरतं निगदन् उच्चरन् भुवि पृथिव्याम् अपतत् पपात । जटायुरित्यत्र मुमुक्षुरिति पाठे मुमुक्षुः मोक्तुमिच्छुः, निर्वाणं लिप्सुरित्यर्थः । मुमूर्षुरिति पाठे मुमूर्षुः मर्त्तुमिच्छुः, आसन्नमृत्युरित्यर्थः । वसन्ततिलकं वृत्तम् ॥ ८८ ॥

अथेति । अथानन्तरं कृतो रथभङ्गो येन तं पक्षिराजं, पक्षिवीरमिति पाठान्तरं, निहत्य आहत्य क्षितिगतं भूपतितं श्वासमात्रावशेषं निःश्वासमात्रावशिष्टम् अवलोक्य दृष्ट्वा जनक-

अथ जटायुखेदः ।

न मैत्री निर्व्यूढ़ा दशरथनृपे कार्य्यविषया,
न वैदेही त्राता हठहरणतो राक्षसपतेः ।
न रामस्यास्येन्दुर्नयनविषयोऽभूदकृतिनो,
जटायोर्जन्मेदं वितथमभवद्भाग्यरहितम् ॥ ९० ॥

---

नृपतिपुत्रीं सीताम् आदाय क्षिप्रं शीघ्रं सरभसं सहर्षं लङ्कां, नीत्वेति शेषः, अशोककेलीवनान्ते अशोकाख्यक्रीड़ोद्यानसीमायाम् उपदध्रे रक्षितवान् । मालिनी वृत्तम् ॥ ८९ ॥

नेति । दशरथनृपे विषये कार्य्यविषया कार्य्यनिबन्धना, कार्य्यवशात् जातेत्यर्थः, राज्यविषयेति पाठे राज्यसम्बन्धिनीत्यर्थः, मैत्री सख्यं न निर्व्यूढ़ा न सम्पादिता, न कृतार्थीकृतेति यावत्, न सख्यजनितम् ऋणं परिशोधितमिति भावः । राक्षसपतेः रावणस्य हठहरणतः सहसा हरणात् बलाद्धरणाद्वा वैदेही सीता न त्राता न रक्षिता, हठहरणतो राक्षसपतेरित्यत्र न च रणहतो राक्षसपतिरिति पाठे वैदेही न त्राता राक्षसपतिश्च रणे न हत इत्यन्वयः । रामस्य आस्यं मुखमेव इन्दुश्चन्द्रः न नयनविषयः दृष्टिगोचरः न अभूत् अतः अकृतिनः अकृतकार्य्यस्य जटायोः इदं भाग्यरहितं हतभाग्यं जन्म वितथं विफलम् अभवत् । अकृतिनः इत्यत्र सुकृतिन इति पाठे सुकृतिनो रामस्येति योज्यम् । अत्र पूर्वपादत्रयवाक्यानां चतुर्थपादवाक्यस्य हेतुत्वेनोक्तत्वात् काव्यलिङ्गमलङ्कारः, "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति लक्षणात् । शिखरिणी वृत्तम् ॥ ९० ॥

अथ पथि रामलक्ष्मणयोरुक्तिप्रत्युक्ती ।

एकाकिनीमुटजसीम्नि विहाय सीतां
किं वत्स ! मत्सविधमाकुलमागतोऽसि ? ।
अत्रागते चिरयति त्वयि वीर! देव्या
नैव स्थितः कटुकदुक्तिकदर्थितोऽहम् ॥ ८१ ॥

बाणेनैकेनाद्भुतं तं निहत्य मारीचाख्यं यातुधानं जवेन ।
सीताशून्यां पश्यतः पर्णशालां किं किं वृत्तं नो तदा राघवस्य ॥८२॥

मायाकुरङ्गं विनिहत्य बाणैर्भ्रान्त्वा समागत्य च पर्णशालाम् ।
कोणत्रयं तत्र समीक्ष्य शून्यं द्रष्टुं चतुर्थं न शशाक रामः ॥ ८३ ॥

---

एकाकिनीमिति । हे वत्स ! लक्ष्मण ! उटजसीम्नि पर्णशालाप्रदेशे एकाकिनीम् असहायां सीतां विहाय परित्यज्य किं कथम् आकुलं यथा तथा मम सविधं सकाशम् आगतः असि ? इति रामोक्तिः । हे वीर ! अत्र आगते त्वयि चिरयति विलम्बमाने सति देव्याः सीतायाः कटुभिः दारुणाभिः कदुक्तिभिः कुत्सिताभिः उक्तिभिः कदर्थितः चोभितः अहं नैव स्थितः स्थातुं न शक्त इत्यर्थः । लक्ष्मणोक्तिः । वसन्ततिलकं वृत्तम् ॥ ८१ ॥

बाणेनेति । एकेन बाणेन शरेण तम् अद्भुतं विचित्रं मारीचाख्यं यातुधानं राक्षसं जवेन वेगेन निहत्य सीताशून्यां पर्णशालां पश्यतः अवलोकयतः राघवस्य रामस्य तदा किं किं नो वृत्तम् ? न जातम् ? अपि तु दुःखस्य परा काष्ठा जातेति भावः । शालिनी वृत्तं "मात्तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात् ॥ ८२ ॥

मायेति । रामः बाणैः मायाकुरङ्गं मायामृगं, मारीच-

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
वैदेहीहरणाभिधोऽत्र गतवानङ्कस्तृतीयो महान् ॥ ९४ ॥

---

# चतुर्थोऽङ्कः ।

अथ रामविलापः ।

बहिरपि न पदानां पङ्क्तिरन्तर्न काचित्,
किमिदमिह न सीता, पर्णशाला किमन्या ? ।

---

मित्यर्थः, विनिहत्य विशेषेण निपात्य पर्णशालां समागत्य च तत्र पर्णशालायां कोणत्रयं शून्यं समीच्य दृष्ट्वा चतुर्थं, कोण-मिति शेषः, द्रष्टुं न शशाक न शक्तोऽभूत् । युगपत् सर्वाशा-भङ्गो नितरां दुःसह इति भावः ॥ ९३ ॥

एष इति । वैदेहीहरणाभिधः सीताहरणाख्यः । स्पष्टम् ॥९४॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
महानाटकतृतीयाङ्कव्याख्या समाप्ता ॥ ३ ॥

---

बहिरपीति । बहिरपि बाह्यदेशेऽपि काचित् पदानां पङ्क्तिः पदपद्धतिः न, अन्तरपि मध्यदेशेऽपि न दृश्यते इति शेषः । इह अस्यां पर्णशालायां सीता न, अस्तीति शेषः, इदं किम् ? किमिदमियमसीतेति पाठे इयं पर्णशाला

अहमपि किल नाहं सर्वथा राघवश्चेत्
क्षणमपि न हि सोढ़ा हन्त ! सीतावियोगम् ॥ १ ॥
हा पर्णशालाङ्गनवासयष्टे ! हा भूतलाविष्कृतचन्द्रलेखे !
मज्जीवितानामवलम्बशाखे ! वैदेहि ! वैदेहि ! कुतो गतासि ॥२॥
युक्तमेव हि कैकेय्या यदहं प्रेषितो वनम् ।
ईदृशी यस्य मे बुद्धिर्मृगः क्वापि हिरण्मयः ॥ ३ ॥

---

असीता सीताशून्या इदं किम् ? अथवा इयम् अन्या अपरा, परकीयेत्यर्थः, पर्णशाला किम् ? अहमपि किल निश्चितं न, राम इति शेषः, सर्वथा अहं राघवः रामश्चेत्, तदा क्षणमपि सीतावियोगं न हि नैव सोढ़ा किल सोढ़ुं शक्त एव, भवामीति शेषः । नाहमित्यत्र नायमिति पाठे अयं राम इत्यात्मनिर्देशः । मालिनी वृत्तम् ॥ १ ॥

हेति । हा इति खेदसूचकं सम्बोधनम् । हा पर्णशालाया अङ्गने चत्वरे यो वासः तस्य यष्टिः अवलम्बनदण्ड इत्यर्थः, तत्सम्बुद्धौ, मम पर्णशालाङ्गनवासयष्टे ! अवलम्बनभूते इत्यर्थः, हा भूतले आविष्कृता प्रकाशिता, विधात्रेति शेषः, चन्द्रलेखा तत्सम्बुद्धौ, भूतलोदितशशिकले इत्यर्थः, मम जीवितानाम् अवलम्बशाखा आश्रयविटपः तत्सम्बुद्धौ, हे मम जीवनावलम्बिनीत्यर्थः, वैदेहि ! वैदेहि ! कुतः कुत्र कथं वा गतासि ? इन्द्रवज्रा वृत्तम् ॥ २ ॥

युक्तमेवेति । कैकेय्या अहं यत् वनं प्रेषितः, तद्धि युक्तमेव उचितमेव । यस्य मे मम ईदृशी हिरण्मयमृगव्यापादनीति भावः, बुद्धिः, जातेति शेषः, हिरण्मयः मृगः क्वापि, सम्भवतीति शेषः, नैव सम्भवतीत्यर्थः । अनुष्टुप् वृत्तम् ॥ ३ ॥

स भूरजोरञ्जितसर्वकायो बभौ विभुर्मन्युविदीर्णचेताः।
योषिद्वियोगानलदह्यमानं स्वकान्तमालिङ्ग्यतीव भूमिः॥ ४॥

अत्रावसरे मुनिजनवाक्यम्।

एकदैव तु रामेण लब्धमर्थचतुष्टयम्।
राज्यनाशो वनेवासो हृता सीता मृतः पिता॥ ५॥

असम्भवं हेममृगस्य जन्म, तथापि रामो लुलुभे मृगाय।
प्रायः समासन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति॥५॥

---

स इति। स विभुः रामः मन्युना शोकेन विदीर्णं चेतः चित्तं यस्य तथाभूतः अत एव भुवः पृथिव्याः रजोभिः रेणुभिः रञ्जितः अलङ्कृतः, लिप्त इत्यर्थः, सर्वः समग्रः कायो यस्य तथोक्तः भुवि लुण्ठितगात्र इत्यर्थः, सन् बभौ शुशुभे। अत्रोत्प्रेक्षते योषिदिति, भूमिः योषितः कान्तायाः, सपत्न्या इति भावः, वियोगानलेन दह्यमानं स्वकान्तं निजपतिम् आलिङ्ग्यतीव, आत्मानमिति शेषः। उपजाति वृत्तम्॥ ४॥

एकदेति। रामेण एकदैव अल्पकालमध्य एवेति भावः, राज्यनाशः राज्यात् भ्रंशः, वने वासः, सीता हृता रावणेनेति शेषः, पिता मृत इति अर्थचतुष्टयं लब्धं, तु इति खेदे। अनुष्टुप् वृत्तम्॥ ५॥

असम्भवमिति। हेममृगस्य जन्म असम्भवं न कदाचित् सम्भवतीत्यर्थः, तथापि तमर्थं जानन्नपीत्यर्थः, रामः मृगाय लुलुभे लोभं चकार, "रुच्यर्थानां प्रीयमाणः" इति मृगायेत्यस्य सम्प्रदानत्वम्। तमेवार्थमर्थान्तरेण द्रढ़यति, प्राय इति।—समासन्ना सन्निहिता या विपत्तिः तस्याः काले समये पुंसां धियोऽपि बुद्धयोऽपि प्रायः बाहुल्येन मलिनीभवन्ति मलिनतामापद्यन्ते।

कर्म्मणा बाध्यते बुद्धिर्न बुद्ध्या कर्म्म बाध्यते ।
सुबुद्धिरपि यद्रामो हैमं हरिणमन्वगात् ॥ ७ ॥
राज्याद् भ्रंशयता वनं गमयता, घोरैस्त्रियामाचरै-
रेवं कारयता, मतिं छलयता मायामृगच्छद्मना ।
दारान् हारयता, वने भ्रमयता नानावनालीतलं,
रामस्यापि कृतं शठेन विधिना दुःखातिदुःखं महत् ॥ ८ ॥

---

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । उपजाति वृत्तम् ॥ ६ ॥

कर्म्मणेति । बुद्धिः कर्म्मणा बाध्यते वशीक्रियते, कर्म्माधीना भवतीत्यर्थः, कर्म्म बुद्ध्या न बाध्यते न वशीक्रियते, बुद्ध्यधीनं न भवतीत्यर्थः । यत् यतः रामः सुबुद्धिः सुधीरपि हैमं सौवर्णं हरिणं मृगम् अन्वगात् अनुससार, अत्र रामस्य मृगानुसरणरूपं कर्म्म न बुद्ध्यधीनमिति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । अनुष्टुप् वृत्तम् ॥ ७ ॥

राज्यादिति । राज्यात् भ्रंशयता च्यावयता वनं गमयता प्रेषयता घोरैः दारुणैः त्रियामाचरैः राक्षसैः एवम् इत्थं, विसंवादमिति शेषः, कारयता घटयता मायामृगच्छद्मना हिरण्मयमृगच्छलेन मतिं बुद्धिं छलयता मोहयता वने दारान् भार्य्यां हारयता हृतां कारयतेत्यर्थः, नानावनालीतलं विविधारण्यश्रेणितलभागं भ्रमयता पर्य्यटयता शठेन धूर्त्तेन विधिना दैवेन रामस्यापि, अन्यस्य का कथेत्यपिशब्दार्थः, महत् दुःखातिदुःखं दुःखात् अतिदुःखं कृतम् उत्पादितम् । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ८ ॥

भूमेरुत्थाय रामः।

नास्वादिताऽधरसुधा न शिरीषकोष-
मृद्वी मयोरसि कृता तनुरायताक्ष्याः।
व्रीडे! विरोधिनि! विमुञ्च विमुञ्च कण्ठ-
माक्रन्दितुं वितर जानकि! जानकीति॥ ९॥

हा वल्लभे! जनकवंशजवैजयन्ति!
हा मद्विलोचनचकोरनवेन्दुलेखे!।
इत्थं स्फुटं बहु विलप्य विलप्य राम-
स्तामिव पर्णवसतिं परितश्चचार॥ १०॥

---

नेति। अधरसुधा अधरामृतं न आस्वादिता न पीता, तथा मया आयताक्ष्याः विशालनयनायाः सीतायाः शिरीषकोषमृद्वी शिरीषकुसुमकोमला तनुः शरीरम् उरसि वक्षसि न कृता, हे विरोधिनि! प्रतिबन्धिनि! व्रीडे! लज्जे! कण्ठं विमुञ्च विमुञ्च त्यज त्यज, जानकि! जानकि! इति आक्रन्दितुं रोदितुं वितर देहि। वसन्ततिलकं वृत्तम्॥ ९॥

हा वल्लभे इति। हा वल्लभे! प्रिये! जनकवंशे जायते इति जनकवंशजा सा चासौ वैजयन्ती पताका चेति जनकवंशजवैजयन्ती तत्सम्बुद्धौ, हा वल्लभे इत्यत्र सीतेति हेति पाठे हा सीतेति नाम्ना जनकवंशजवैजयन्तीत्यर्थः। हा मम विलोचने एव चकोरौ तयोर्नवा इन्दुलेखा तत्सम्बुद्धौ इत्थम् अनेन प्रकारेण स्फुटमुच्चैः बहु यथा तथा विलप्य विलप्य पुनः पुनः विलापं कृत्वा तामिव पर्णवसतिं पर्णशालां परितः चचार बभ्राम। वसन्ततिलकं वृत्तम्॥ १०॥

अत्रालिङ्गितमत्र चुम्बितमथात्रैव प्रणामः कृतः,
किञ्चात्रालिखिता कपोलफलके कस्तूरिकापत्रिका ।
इत्यालोच्य विलोचनोत्सवकरीस्तास्ता विहारस्थली-
श्चेतः किं शतधा न याति विरहे तस्याः कुरङ्गीदृशः ॥ ११ ॥

पुनः पर्णशालां विलोक्य ।

आलिङ्गिताऽत्र सरसीरुहकोरकाक्षी,
पीतोऽधरोऽत्र मधुरो विधुमण्डलास्ये ।
रङ्गावतारमकरन्दविमर्द्दितानि,
पुष्पाण्यमूनि, दयिते ! क्व गतासि सुभ्रु ! ॥ १२ ॥

---

अत्रेति । अत्र अस्मिन् प्रदेशे आलिङ्गितम् आलिङ्गनं कृतम् अत्र चुम्बितं चुम्बनं कृतम्, अत्रैव प्रणामः प्रणतिः कृतः, किञ्च अत्र कपोलफलके गण्डतटे कस्तूरिकापत्रिका मृगनाभिपत्रावली आलिखिता रचिता इतीत्थं विलोचनयोः नयनयोः उत्सवकरीः विनोदनकरीः ताः ताः विहारस्थलीः क्रीड़ाप्रदेशान् आलोच्य आलोक्येति यावत्, आलोक्येति वा पाठः, चेतः मानसं तस्याः कुरङ्गीदृशः मृगाक्ष्याः विरहे शतधा न याति किम् ? अपि तु यात्येवेत्यर्थः । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ११ ॥

आलिङ्गितेति । अत्र सरसीरुहकोरकाविव पद्मकलिके इव, "कलिका कोरकः पुमान्" इत्यमरः, अक्षिणी यस्याः सा, प्रियेति शेषः, आलिङ्गिता आश्लिष्टा अत्र विधुमण्डलमिव आस्यं मुखं तस्मिन् मधुरः अधरः पीतः आस्वादितः । अमूनि पुरतः परिदृश्यमानानीत्यर्थः, पुष्पाणि रङ्गाणां केलीनाम् अवतारे आविर्भावे यः मकरन्दः मधुरसः तेन विमर्दितानि

अथ सीतान्वेषणे रामचरितम्।

हे गोदावरि! रम्यवारिसुभगे! दृष्टा त्वया जानकी ?
साऽऽहर्त्तुं कमलानि किं गतवती, याता विनोदाय वा ?।
इत्येवं प्रतिपादपं प्रतिपथं प्रत्यापगं प्रत्यगं,
प्रत्येणं प्रतिबर्हिणं तत इतस्तां याचते मैथिलीम्॥ १३॥
भो वृक्षाः! पर्वतस्था बहुकुसुमयुता वायुना घूर्णमानाः,
रामोऽयं व्याकुलात्मा दशरथतनयः पृच्छते शोकदग्धः।

---

निर्दलितानि, हे दयिते प्रिये! हे सुभ्रु! शोभनभ्रूशालिनि! क्व कुत्र गतासि? गतासि सुभ्रु इत्यत्र गतेत्यरोदीदिति पाठे क्व गता इति, अरोदीत् रुरोद। वसन्ततिलकं वृत्तम्॥ १२॥

हे इति। हे रम्यवारिसुभगे! रम्यैः वारिभिर्जलैः सुभगा प्रिया तत्सम्बुद्धौ, हे गोदावरि! त्वया जानकी दृष्टा? इति काकुः, दृष्टा किमित्यर्थः, रम्यवारिसुभगे दृष्टा त्वया जानकी-त्यत्र पुण्यवारिपुलिने सीता न दृष्टा त्वयेति पाठे पुण्यानि वारीणि पुलिनानि च यस्याः तत्सम्बुद्धौ, अन्यत् सुगमम्। सा जानकी कमलानि आहर्त्तुम् अवचेतुं गतवती किम्? वा विनोदाय तव जलेषु क्रीड़नायेत्यर्थः, याता? इत्येवम् एवं-प्रकारेण प्रतिपादपं प्रतिवृक्षं प्रतिपथं पथि पथीति प्रतिपथं प्रतिवर्त्म प्रत्यापगं प्रतिनदं प्रत्यगं प्रतिपर्वतं प्रत्येणं प्रतिमृगं प्रतिबर्हिणं प्रतिमयूरं तत इतः समन्तात् तां मैथिलीं सीतां याचते पृच्छतीत्यर्थः, राम इति शेषः। शार्दूलविक्रीड़ितं वृत्तम्॥ १३॥

भो वृक्षा इति। भोः पर्वतस्थाः बहुभिः कुसुमैः युताः वायुना घूर्णमानाः वृक्षाः! भो इत्यत्र रे इति पाठान्तरम्।

विम्बोष्ठी चारुनेत्रा गजपतिगमना दीर्घकेशी सुमध्या
हा ! सीता केन नीता मम हृदयगता केन वा कुत्र दृष्टा ? ॥१४॥
भो भो भुजङ्ग ! तरुपल्लवलोलजिह्व !
बन्धूकपुष्पवरशोभितनेत्रयुग्म ! ।

---

अयं व्याकुलात्मा दशरथतनयः रामः शोकेन दग्धः सन् पृच्छति आत्मनेपदं, निरङ्कुशाः कवय इत्युपेच्यम्। युष्मानिति शेषः, बहुकुसुमयुता इत्यत्र गिरिगहनलता इति, घूर्णमाना इत्यत्र वीज्यमाना इति, रामोऽयमित्यत्र रामोऽहमिति, पृच्छति शोकदग्ध इत्यत्र शोकशुक्रेण दग्ध इति पाठे हे गिरिगहनलताः पर्वतस्थवनव्रतत्य इत्यर्थः, शोकशुक्रेण शोक एव शुक्रः अग्निः तेन। विम्बमिव ओष्ठौ यस्याः सा चारुनेत्रा सुनयना गजपतिगमना गजगामिनी, मन्दगामिनीत्यर्थः, दीर्घकेशी सुमध्या चीणमध्या मम हृदयगता मनोरथवर्त्तिनी सीता हा इति खेदे केन नीता हृता, केन वा कुत्र दृष्टा अवलोकिता ? गजपतिगमना दीर्घकेशी सुमध्येत्यत्र सुविपुलजघना बद्धनागेन्द्रकाञ्चीति पाठे सुविपुलजघना विस्तृतकटिपुरोभागा। बद्धा संयमिता नागेन्द्रा "करिकुम्भमणिस्तोमनानारत्नोत्करैधिता। मध्ये कुम्भाकृतिस्वर्णा सा नागेन्द्राख्या मता॥" इति लचणा काञ्ची रशना यस्याः सा। केन वा कुत्र दृष्टेत्यत्र को भवान् केन दृष्टेति पाठे भवान् कः ? आकाशवचनम्। केन जनेन दृष्टा ? इत्यर्थः। स्रग्धरा वृत्तम् ॥ १४ ॥

भो भो इति। भो भोः तरुपल्लववत् लोला चञ्चला जिह्वा यस्य तथोक्तः तत्सम्बुद्धौ, बन्धूकं नाम यत् पुष्पवरं कुसुमोत्तमं

पृच्छामि ते पवनभोजन ! तुङ्गभोग !
मार्गे स्थिता सपदि चन्द्रमुखी न दृष्टा ? ॥ १५ ॥
सा रेवातटिनी तदेव विपिनं सैषा निकुञ्जस्थली
सोऽयं भूमिधरः स एव मलयप्रोद्भूतमन्दानिलः ।
तान्येतानि सरांसि हन्त ! विमलान्युत्तुङ्गवक्षोरुह-
द्वन्द्वापीड़नभारमन्दगमना नाऽऽलोक्यते जानकी ॥ १६ ॥
रामः । आदावेव कृशोदरी कुचतटीभारेण नम्रा पुन-
र्लीलाचङ्क्रमणञ्च नैव सहसे दोलाविधौ श्राम्यसि ।

---

तद्वत् शोभितं नेत्रयुग्मं यस्य तथोक्तः तत्सम्बुद्धौ, पवन-भोजन ! वायुभोजिन् ! तुङ्गभोग ! महाकाय ! भुजङ्ग ! सर्प ! ते तव, कर्मणि षष्ठी, त्वामित्यर्थः, पृच्छामि मार्गे पथि स्थिता चन्द्रमुखी सीता सपदि सम्प्रति न दृष्टा ?। वसन्ततिलकं वृत्तम् ॥ १५ ॥

सेति । सा रेवा नर्म्मदा नाम तटिनी सरित्, तदेव विपिनं वनं, सा एषा निकुञ्जस्थली लतादिपिहितविहारभूमिः, सः अयं भूमिधरः पर्वतः, स एव मलयात् चन्दनगिरेः प्रोद्भूतः निःसृतः मन्दः मृदुवाहीत्यर्थः, अनिलः वायुः, तानि एतानि विमलानि निर्मलानि सरांसि सरोवराः, उत्तुङ्गेन समुन्नतेन वक्षोरुहद्वन्द्वेन पयोधरयुगलेन यत् आपीड़नम् आक्रमणं तस्य भारेण आतिशय्येन मन्दं मन्थरं गमनं यस्याः तथाविधा जानकी न आलोक्यते न दृश्यते ? जानक्याः सर्वाण्येव विनोद-स्थानानि दृश्यन्ते परं सैव न दृश्यते इति खेदसूचकं हन्तेति पदम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ १६ ॥

आदाविति । आदावेव पूर्वमेव कृशोदरी तथा कुचतटीभारेण

स्रोत:काननगर्त्तनिर्झरसरित्प्रायानपूर्वानिमान्
भूभागानपि भूतभैरवमृगान् वैदेहि! यायाः कथम् ?॥ १७॥

गाहं गाहं गह्वरे कानने तां,
दर्शं दर्शं दर्शवल्लीमतल्लीम्।
स्मारं स्मारं भूषणान्ताञ्च कान्तां
रामः कान्तामद्रिचारो ह्यरोदीत्॥ १८॥

अथ सीतायामलब्धायां रामः।

मध्यं केशरिभिः, स्मितञ्च कुसुमैर्नेत्रं कुरङ्गीगणैः,

---

नम्रा पुनः त्वं लीलया विलासेन चङ्क्रमणं पुनः पुनः भ्रमणं न सहसे न सोढुं शक्नोषि, तथा दोलाविधौ दोलनव्यापारे श्राम्यसि श्रान्ता भवसि, अतः स्रोतांसि जलप्रवाहाः काननेषु गर्त्ता निर्झराः सरितः नद्यः ताः प्रायेण येषु तान् अपूर्वान् अपरिचितानित्यर्थः, स्रोतःकाननगर्त्तनिर्झरगिरिप्रायानपूर्वानिति पाठान्तरम्। भूतेषु प्राणिषु भैरवा भीषणा मृगाः श्वापदाः येषु तान् अपि इमान् भूभागान् हे वैदेहि! कथं केन प्रकारेण यायाः ? गच्छेः ?। शार्दूलविक्रीडितं वृत्तम्॥ १७॥

गाहं गाहमिति। रामः गह्वरे गुहायां कानने वने तां सीतां गाहं गाहम् अवगाह्य अवगाह्य अन्विष्यान्विष्येत्यर्थः, भूषणेन अलङ्कारेण अन्तां मनोहराञ्च कान्तां रम्यां कान्तां सीतां स्मारं स्मारं पुनः पुनः स्मृत्वा दर्शवल्लीषु दर्शनीयलतासु मतल्लीं प्रशस्तां, "मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ। प्रशस्तवाचकान्यमूनि" इत्यमरः, दर्शं दर्शं पुनः पुनर्दृष्ट्वेत्यर्थः, अन्विष्य अन्विष्येत्यर्थः, अद्रिचारो पर्वतचरः सन् अरोदीत्। हिशब्दः पादपूरणार्थः। शालिनी वृत्तं, "मात्तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात्॥ १८॥

कान्तिश्चम्पककुड्मलैः, कलरुतं हा हा हृतं कोकिलैः।
वल्लीभिर्ललितं गतं करिवरैरित्थं विभज्याञ्जसा
कान्तारे सकलैर्विलासपटुभिर्नीतासि किं मैथिलि!?॥ १९॥

अथ सीताया नूपुरं प्राप्य।

चक्षुर्मे प्रीणयत्येतत् सीताया इव नूपुरम्।
अवधारय सौमित्रे! भूषणान्तरसाम्यतः॥ २०॥

---

मध्यमिति। हे मैथिलि! हा हा इति खेदातिशयसूचकमव्ययद्वयम्। केशरिभिः सिंहैः मध्यं मध्यभागः, कटिदेश इत्यर्थः, कुसुमैः पुष्पैः स्मितं मन्दहसितं, कुरङ्गीगणैः मृगीवृन्दैः नेत्रं, चम्पककुड्मलैः चम्पकमुकुलैः कान्तिः, कोकिलैः कलरुतं मधुररवः, वल्लीभिः लताभिः ललितं चेष्टितं, करिवरैः गजेन्द्रैः गतञ्च हृतम् इत्थमनेन प्रकारेण सकलैः विलासपटुभिः विलसनशीलैः ऐश्वर्य्यादिभिः कान्तारे गहने वने अञ्जसा झटिति, "द्राक् झटित्यञ्जसाह्नाय" इत्यमरः, विभज्य नीतासि किम्? मध्योऽयं हरिभिः स्मितं हिमरुचा नेत्रे कुरङ्गीगणैरिति, कलरवो हाहा हृतः कोकिलैरिति, मातङ्गैर्गमनं कथं कथमहो हंसैर्विभज्याधुना कान्तारे सकलैर्विनाश्य पशुवन्नीतासि भो मैथिलीति पाठे हरिभिः सिंहैः, हिमरुचा चन्द्रेण, मातङ्गैः हस्तिभिः पशुवत् विनाश्य तत्तदङ्गं हृत्वा नीतासि भक्षितासीत्यर्थः, धातूनामनेकार्थत्वादिह नयतेर्भक्षणार्थत्वं, यद्वा नीतासि गृहीतासि, तत्तदङ्गेष्विति भावः। शार्दूलविक्रीडितं वृत्तम्॥१९॥

चक्षुरिति। हे सौमित्रे! एतत् पुरो दृश्यमानं सीताया नूपुरमिव मे मम चक्षुः प्रीणयति आनन्दयति, भूषणान्तरसाम्यतः अलङ्कारान्तरसादृश्यात् अवधारय निश्चिनु। अनुष्टुप् वृत्तम्॥२०॥

लक्ष्मणः । नाहं जानामि केयूरे नाहं जानामि कङ्कणे ।
नूपुरे चाभिजानामि नित्यं पादाभिवन्दनात् ॥ २१ ॥

कियद्दूरं गत्वा पतितं सीतोत्तरीयं दृष्ट्वा रामः ।

द्यूते पणः प्रणयकेलिषु कण्ठपाशः,
क्रीड़ापरिश्रमहरं व्यजनं रतान्ते ।
शय्या निशीथकलहे हरिणेक्षणायाः
प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥ २२ ॥

ततश्चन्द्रं दृष्ट्वा रामलक्ष्मणयोरुक्तिप्रत्युक्ती ।

सौमित्रे ! ननु सेव्यतां तरुतलं, चण्डांशुरुज्जृम्भते,
चण्डांशोर्निशि का कथा, रघुपते ! चन्द्रोऽयमुन्मीलति ।

---

नाहमिति । अहं केयूरे अङ्गदे न जानामि, अहं कङ्कणे च न जानामि, नित्यं प्रतिदिनं पादयोरभिवन्दनात् प्रणिपातात् नूपुरे च नूपुर एव अभिजानामि । अनुष्टुप् वृत्तम् ॥ २१॥

द्यूत इति । मया द्यूते पणः पणनं, पराजयलभ्यं वस्त्विति भावः, प्रणयकेलिषु प्रेमक्रीड़ासु, प्रणयमन्युष्विति पाठे प्रणयकोपेष्वित्यर्थः, कण्ठपाशः कण्ठबन्धनरज्जुः, रतान्ते सुरतावसाने क्रीड़या विहारेण यः परिश्रमः तस्य हरतीति हरं, पचाद्यच् प्रत्ययः, वीज्यतेऽनेनेति व्यजनं निशीथकलहे शय्या, निशीथसमये इति पाठान्तरं, हरिणेक्षणायाः सीतायाः, जनकात्मजाया इति पाठान्तरम्, इदम् उत्तरीयम् उत्तरासङ्गवसनं विधिवशात् भाग्यवशात् प्राप्तं लब्धम् । वसन्ततिलकं वृत्तम् ॥ २२ ॥

सौमित्र इति । हे सौमित्रे ! लक्ष्मण ! ननु भोः तरुतलं सेव्यताम् आश्रीयतां यतः अयं चण्डांशुः उष्णरश्मिः, सूर्य्यः

वत्सैतद्विदितं कथं नु भवता, धत्ते कुरङ्गं यतः,
क्वासि प्रेयसि ! हा कुरङ्गनयने ! चन्द्रानने ! जानकि ! ॥ २३ ॥

ततश्चन्द्रं प्रति रामः ।

शीतरश्मिरसि चन्द्र ! कथं मान्तापयस्यनलगर्भमयूखैः ।
त्वां शरेण शतधा विभजेयं, जानकीमुखसमो यदि न स्याः ॥२४॥

अथ स्मृतिभ्रंशे रामलक्ष्मणयोरुक्तिप्रत्युक्ती ।

---

इत्यर्थः, उज्जृम्भते उदेति । रामोक्तिः । हे रघुपते ! निशि रात्रौ चण्डांशोः सूर्य्यस्य कथा का ? न कापीत्यर्थः, अयं चन्द्रः उन्मीलति उद्गच्छति । लक्ष्मणोक्तिः । हे वत्स ! भवता एतत्—सूर्य्योऽयं न, चन्द्र एवोदेतीति कथं विदितं ज्ञातम् ? रामोक्तिः । यतः कुरङ्गं मृगं कलङ्कभूतमिति भावः, धत्ते धारयति । लक्ष्मणोक्तिः । हे प्रेयसि प्रियतमे ! कुरङ्गनयने मृगाक्षि ! चन्द्रानने जानकि ! क्व कुत्र असि वर्त्तसे ? शार्दूलविक्रीड़ितं वृत्तम् ॥ २३ ॥

शीतेति । हे चन्द्र ! त्वं शीतरश्मिः शीतलकिरणः असि भवसि, अतः कथम् अनलः गर्भे येषां ते मयूखाः किरणाः तैः मां तापयसि दहसीत्यर्थः, यदि त्वं जानक्या मुखेन समः तुल्यः न स्याः न भवेः, तदा त्वां शरेण शतधा शतखण्डेनेत्यर्थः, विभजेयं खण्डं खण्डं विदध्यामित्यर्थः । मन्दरेण मथितोऽसि न पापिन् ! ज्वालितोऽसि तमसा न दुरात्मन् । त्वां शरेण शतधा परिगिन्द्ये इति पाठे मन्दरेण पर्वतेन, समुद्रमन्थनकाले इति भावः, न मथितः न विलोड़ितः असि, तमसा राहुणा, "तमस्तु राहुः स्वर्भानुः" इत्यमरः, न ज्वालितोऽसि । अन्यत् सुगमम् । स्वागता वृत्तम् ॥ २४ ॥

के यूयं रघुनाथ ! नाथ ! किमिदं भृत्योऽस्मि ते लक्ष्मणः,
कोऽहं वत्स ! वदाशु, देव ! भगवानार्य्यो भवान् राघवः ।
किं कुर्मो विजने वने, तत इतो देवी समन्विष्यति,
का देवी, जनकाधिराजतनया हा हा प्रिये ! जानकि ! ॥ २५ ॥

हारो नारोपितः कण्ठे मया विच्छेदभीरुणा ।
इदानीमावयोर्मध्ये सरित्सागरभूधराः ॥ २६ ॥

---

के यूयमिति । यूयं के ? इति रामोक्तिः । हे रघुनाथ ! हे नाथ ! इदं किम् ? अस्मीति अहमित्यर्थे अव्ययम्, अस्मि अहं ते तव भृत्यः किङ्करः लक्ष्मणः । इति लक्ष्मणोक्तिः । हे वत्स ! अहं कः ? आशु शीघ्रं वद ब्रूहि । रामोक्तिः । देव ! भवान् भगवान् सर्वशक्तिमान् आर्य्यः राघवः । लक्ष्मणोक्तिः । विजने वने किं कुर्मः ? इति रामोक्तिः । तत इतः समन्तादित्यर्थः, देवी सीता समन्विष्यति समनुसन्धीयते । लक्ष्मणोक्तिः । देवी का ? जनकाधिराजतनया । प्रिये जानकि ! हा हा किमिदमापतितमिति भावः । रघुनाथेत्यत्र वद नाथ इति, भृत्य इत्यत्र दास इति, वदाशु देव इत्यत्र स आर्य्य एवेति, भवानित्यत्र स क इति च पाठान्तरं सुगमम् ॥ २५ ॥

हार इति । विच्छेदभीरुणा मया, विश्लेषभीरुणेति पाठान्तरं, कण्ठे हारः न आरोपितः न निहितः, इदानीम् आवयोः सीतारामयोः मध्ये सरित्सागरभूधराः नदीसमुद्रपर्वताः, वर्त्तन्ते इति शेषः । स्वल्पस्य विश्लेषस्य शान्तये कण्ठे हारार्पणं महतस्तु एतादृशस्य शान्तये कमुपायं करिष्यामीति भावः । आवयोर्मध्ये सरित्सागरभूधरा इत्यत्र अन्तरे जाताः पर्वताः सरितो द्रुमा इति पाठान्तरम् । अनुष्टुप् वृत्तम् ॥ २६ ॥

सोढ़स्तातवियोगः, सोढ़ो राज्यश्रियो वियोगोऽपि
सोढ़ो विपिने वासः, सोढ़ुं न भवामि जानकीविरहम् ॥ २७ ॥

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ २८ ॥

वासि वात! यतः कान्ता, तां स्पृष्ट्वा मामपि स्पृश।
रक्षेन्मां कोऽनया नान्यः, शक्यमेतेन जीवितुम् ॥ २९ ॥

---

सोढ़ इति। तातस्य पितुर्वियोगः सोढ़ः सह्यतां नीतः, राज्यश्रियः राजलक्ष्म्याः वियोगोऽपि सोढ़ः, विपिने अरण्ये वासः सोढ़ः, किन्तु जानकीवियोगं सोढ़ुं न भवामि न प्रभवामि, न शक्नोमीत्यर्थः। आर्य्या वृत्तं, "यस्याः पादे प्रथमे द्वादशमात्रा तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्या ॥" इति लक्षणात् ॥ २७ ॥

इयमिति। इयं सीता गेहे लक्ष्मीः गृहलक्ष्मीरित्यर्थः, इयं नयनयोः चक्षुषोः अमृतवर्त्तिः सुधालेप इत्यर्थः, वपुषि शरीरे अस्याः सीतायाः असौ स्पर्शः बहुलः प्रभूतः चन्दनरसः चन्दनद्रवः, कण्ठे अयं बाहुः शिशिरमसृणः शीतलकोमलः मौक्तिकसरः मुक्ताहारः, मौक्तिकरस इति पाठे मौक्तिकरसः मुक्तामणिद्रवः इत्यर्थः, यदि परं केवलं विरहः ते विच्छेद एव असह्यो न, तदा अस्याः किं प्रेयः ? प्रियतरं न ? सर्वमेव परमप्रियमित्यर्थः। रूपकालङ्कारः। शिखरिणी वृत्तम् ॥ २८ ॥

वासीति। हे वात! पवन! यतः यत्र कान्ता प्रिया, वर्त्तते इति शेषः, ततः वासि वहसि, तां कान्तां स्पृष्ट्वा

तद्वियोगसमुत्थेन तच्चिन्ताविपुलार्च्चिषा ।
रात्रिन्दिवं शरीरं मे दह्यते मदनाग्निना ॥ ३० ॥
वायुर्दक्षिणतो, वनानि(शिखी च) पुरतो, भृङ्गध्वनिर्वामतः,
पश्चाद्दुःसहचक्रवाकचरि(रुदि)तं चोर्द्ध्वं सुधादीधितिः ।
इत्थं दुःसहपञ्चतापसहिते मध्ये मया ध्यायता,
नेष्यन्ते कति वा प्रजागरभरैरत्यन्तदीर्घाः क्षपाः ॥ ३१ ॥

---

मामपि स्पृश । अनया कान्तया अन्यः, अत्रान्यशब्दयोगे तृतीया कवेर्निरङ्कुशत्वात् सोढ़व्या । कः कोऽपीत्यर्थः, मां न रक्षेत् रक्षितुं शक्नुयात् । एतेन तत्स्पृष्टवातेन जीवितुं शक्यं कथमपि जीवनं धर्त्तुं पारयितव्यं, मयेति शेषः । अनुष्टुप् वृत्तम् ॥ २९ ॥

तद्वियोगेति । तस्या वियोगः विरहः तस्मात् समुत्तिष्ठतीति तद्वियोगसमुत्थः तेन तस्याश्चिन्ता एव विपुलाः प्रचुराः अर्च्चिषो यस्य तेन मदनाग्निना कामानलेन मे मम शरीरं रात्रिन्दिवम् अहोरात्रं दह्यते । रूपकालङ्कारः । अनुष्टुप् वृत्तम् ॥ ३० ॥

वायुरिति । दक्षिणतः दक्षिणस्याः दिशः दक्षिणस्यां दिशि वा वायुः मलयपवन इत्यर्थः, वहतीति शेषः, पुरतः अग्रतः, अग्रे इत्यर्थः, वनानि काननानि, वर्त्तन्ते इति शेषः,शिखी चेति पाठे शिखी मयूरश्चेत्यर्थः । वामतः वामभागे भृङ्गाणां ध्वनिः भ्रमरविरुतम् । पश्चात् पृष्ठभागे दुःसहं सोढुमशक्यमित्यर्थः, चक्रवाकाणां चरितं युगलभावस्य विच्छेद इत्यर्थः, रुदितमिति पाठे रुदितम् अन्योऽन्यस्य वियोगे करुणविरुतमित्यर्थः । ऊर्द्ध्वञ्च उपरि च सुधादीधितिः चन्द्रः । इत्थम्

चन्द्रश्चण्डकरायते,मृदुगतिर्वातोऽपि वज्रायते
माला सूचिकुलायते, मलयजालेपः स्फुलिङ्गायते ।
आलोकस्तिमिरायते, विधिवशात् प्राणोऽपि भारायते,
हा हन्त ! प्रमदावियोगसमयः संहारकालायते ॥ ३२ ॥

---

एवं दुःसहैः पञ्चभिः तापैः सहितं युक्तं तस्मिन् मध्ये अभ्यन्तरे ध्यायता चिन्तयता, पञ्चाग्निसाध्यं तपश्चरतीति भावः मया, प्रजागरभरैः निद्राविरहातिशयैः कति वा कियतीर्वा अत्यन्त-दीर्घाः अतिमहत्यः क्षपाः रात्रयः नेष्यन्ते अतिवाह्यन्ते ? नातिवाहयितुं शक्या इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३१ ॥

चन्द्र इति । चन्द्रः चण्डकरः उष्णरश्मिः तद्वदाचरतीति चण्डकरायते अतीव तापयतीति भावः, मृदुगतिः मन्दसञ्चारो वातोऽपि पवनोऽपि वज्रमिव आचरतीति वज्रायते शरीरे वज्रमिव स्पृशतीत्यर्थः । माला पुष्पस्रक्, माल्यमिति पाठा-न्तरम्, सूचिकुलमिव आचरति सूचिपङ्क्तिरिव विध्यतीति भावः । मलयजस्य चन्दनस्य आलेपः प्रलेपः स्फुलिङ्गः अग्निकणः स इवाचरति स्फुलिङ्गायते अग्निकणवत् आलिम्पतीति भावः, "त्रिषु स्फुलिङ्गोऽग्निकणः" इत्यमरः । आलोकः उद्योतः, "आलोकौ दर्शनोद्योतौ" इत्यमरः, तिमिरमिव आचरति अन्ध-कारवदाभातीति यावत्, आलोकस्तिमिरायते इत्यत्र रात्रिः कल्पशतायते इति पाठान्तरम् । किं बहुना विधिवशात् दुर्दैववशात् प्राणोऽपि जीवनमपि भारायते भार इवाचरति, अपगमे सुखं जनयतीति भावः । हा हन्त इति खेदातिशये, प्रमदायाः प्रेयस्याः वियोगसमयः संहारकाल इवाचरति

रे रे निर्दय ! दुर्निवारमदन ! प्रोत्फुल्लपङ्केरुहान्,
बाणान् संवृणु संवृणु, त्यज धनुः, किं पौरुषं मां प्रति ।
कान्तायास्तु वियोगजातहुतभुग्ज्वालाप्रदग्धं वपुः,
शूराणां मृतमारणे न हि परो धर्मः प्रयुक्तो बुधैः ॥ २३ ॥
आपुङ्खाग्रममी शरा मनसि मे मग्नाः समं पञ्च ते,
निर्दग्धं विरहाग्निना वपुरिदं तैरेव सार्द्धं मम ।
तत् कन्दर्प ! निरायुधोऽसि भवता जेतुं न शक्तः परो
दुःखी स्यामहमेक एव, सकलो लोकः सुखी(खं)जीवतु ॥२४॥

---

कल्पान्त इवावभासते इत्यर्थः । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

रे इति । रे रे निर्दय निष्ठुर ! दुर्निवार ! अप्रतिसमाधेय ! मदन ! प्रोत्फुल्लाः प्रकर्षेण विकस्वरा इत्यर्थः, पङ्केरुहाः पद्माः तान्, अत्र पङ्केरुहशब्दस्य पुंलिङ्गता पूर्ववत् सोढ़व्या । बाणान् शरान् संवृणु संवृणु मा मुञ्च मा मुञ्चेति भावः, धनुः कार्मुकं त्यज मां प्रति पौरुषं पुरुषकारः, पराक्रम इत्यर्थः, किम् ? किमर्थमित्यर्थः, वपुः शरीरन्तु, ममेति शेषः, कान्तायाः वियोग एव जातः उत्पन्नः यो हुतभुक् अग्निः तस्य ज्वालाभिः शिखाभिः प्रकर्षेण दग्धं मृतोऽहमिति भावः, मृतस्य मारणे शूराणां बलवतां परो महान् धर्म्मः बुधैः विद्वद्भिः न हि नैव प्रयुक्तः कथितः, मृतोपरि प्रहारो न पौरुषायेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

आपुङ्खाग्रमिति । ते तव अमी पञ्च शराः आपुङ्खाग्रं पुङ्खाग्रपर्य्यन्तं समं युगपदेव मे मम मनसि मग्नाः निपतिताः मम इदं वपुः शरीरं विरहाग्निना वियोगानलेन कर्त्रा

चरणं विकसिताशोकतले विश्रम्य ।

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे ! मामपि ।
कान्तापादतलाहतिस्तव मुदे, तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥ २५ ॥

एवं दैवादस्तं गते मार्त्तण्डमण्डले प्रचण्डमार्त्तण्डमिवो-दयन्तमचण्डरश्मिमण्डलमाखण्डलदिशि अवलोक्य लक्ष्मणं प्रति रामः । (क)

---

तैरेव शरैः सार्द्धं निर्दग्धं निःशेषेण भस्मीकृतम् । तत्तस्मात् हे कन्दर्प ! त्वं निरायुधः निरस्त्रः असि, भवता परः मदन्य इत्यर्थः, जेतुं न शक्तः, अहमेक एव दुःखी स्यां, तव शरै-र्निर्दग्धत्वादिति भावः, सकलः, अन्य इति शेषः, लोकः सुखी सन्, त्वत्पीड़नाभावादिति भावः, सुखमिति पाठे सुखं यथा तथेत्यर्थः, जीवतु प्राणान् धारयतु । शार्दूलविक्रीड़ितं वृत्तम् ॥ २४ ॥

रक्त इति । हे अशोक ! त्वं नवैः पल्लवैः रक्तः रक्ततां गतः, अहमपि श्लाघ्यैः प्रशस्यैः, मनोज्ञैरित्यर्थः, प्रियायाः सीतायाः गुणैः शीलसौन्दर्य्यादिभिः रक्तः इत्यन्वयः । हे सखे ! शिली-मुखाः भ्रमराः त्वाम् आयान्ति आगच्छन्ति प्राप्नुवन्तीत्यर्थः, स्मरधनुषः कामकार्मुकात् मुक्ताः त्यक्ताः शिलीमुखाः शरा इत्यर्थः, मामपि आयान्तीत्यन्वयः । कान्तायाः प्रमदायाः पादतलेन चरणतलेन आहतिः आघातः, प्रहार इत्यर्थः, तव मुदे प्रमोदाय, विकासाय इत्यर्थः, भवतीति शेषः, "पादाहतः प्रमदया विकसत्यशोकः"इति कविसमयसिद्धेरिति भावः,ममापि

सौमित्रे ! दाववह्निस्तरुशिखरगतो वार्य्यतां निर्झरोदैः,
का वार्त्ता दाववह्नेरयमुदयगिरेरुज्जिहीते हिमांशुः ।
धत्ते धूमं पुरस्तात् किमिति कथय तत्, नैष धूमो धरण्या-
श्छायेयं सङ्गताभूदयि धरणिसुते ! कुत्र सोते ! स्थितासि ? ॥३६॥
जानकि ! जानकि ! मैथिलि ! मैथिलि ! वैदेहि ! वैदेहि ! ।
जनकसुते ! जनकसुते ! सोते ! सीते ! क्व याताऽसि ॥ ३७ ॥

---

तद्वत् कान्ताया: जानक्या: पादतलाहति: प्रणयकोपादिति भाव:, मुदे भवतीत्यन्वय: । अत: आवयो: सर्वं तुल्यम्, अहं केवलं धात्रा विधिना सशोक: शोकसहित: कृत: त्वमशोक: अहन्तु सशोक इति विशेष इति भाव: । शार्दूलविक्रीड़ितं वृत्तम् ॥३५॥

(क) मार्त्तण्डमण्डले सूर्य्यमण्डले । अचण्डरश्मिमण्डलं शीतरश्मिमण्डलम् । आखण्डलदिशि प्राच्यां दिशि ।

सौमित्रे इति । हे सौमित्रे ! तरुशिखरगत: वृक्षाग्रलग्न: दाववह्नि: वनाग्नि: निर्झरोदै: निर्झरवारिभि: वार्य्यतां निर्वाप्यताम् । रामोक्ति: । दाववह्ने: वनानलस्य वार्त्ता का ? क: संवाद: ? अयं हिमांशु: चन्द्र: उदयगिरे: उदयाचलात् उज्जिहीते उद्गच्छति । लक्ष्मणोक्ति: । अयं पुरस्तात् अग्रत: किमिति धूमं धत्ते । तत् कथय ? पुरस्तात् किमिति कथय तदित्यत्र हिमांशु: कथमयमिति पाठान्तरम् । रामोक्ति: । एष धूमो न, धरण्या: पृथिव्या: छाया इयं सङ्गता, अत्रेति शेष:, अभूत् । लक्ष्मणोक्ति: । अयि धरणिसुते पृथ्वीकन्ये सीते ! कुत्र स्थिता असि वर्त्तसे ? रामोक्ति: । कुत्र मान्तेऽसि सीते इति पाठान्तरम् । स्रग्धरा वृत्तम् ॥ ३६ ॥

जानकीति । सुगमम् ॥ ३७ ॥

यत्र यत्र न जगाम राघवस्तत्र तत्र बुबुधे स मैथिलीम् ।
यद्यदेति भवनं न भिक्षुकस्तत्तदन्नपरिपूर्णमीक्षते ॥ ३८ ॥

एवं दैवात् गोगवयगजशार्दूलसिंहादिभैरवजन्तुसङ्कीर्ण-तालतमालविशालासु अरण्यस्थलीषु सीतागतान्तरात्मना रामेण ।

विचिन्वता तेन विदेहपुत्रीं दृष्टो जटायुः श्वसितावशेषः ।
सीता हृता ते दशकन्धरेणेत्यावेद्य सद्यः स तनुं मुमोच ॥३९॥

ज्ञात्वा दशरथस्यैनं मित्रं शत्रुनिसूदनम् ।
हा तात ! किमिदं नाम रामः पक्षीन्द्रमब्रवीत् ॥ ४० ॥

---

यत्रेति । राघवो रामः यत्र यत्र प्रदेशे न जगाम, तत्र तत्र स राघवः मैथिलीं, स्थितामिति शेषः, बुबुधे व्यतर्कयत् । तथाहि भिक्षुकः यत् यत् भवनं न एति न गच्छति तत्तत् भवनम् अन्नपरिपूर्णम् ईक्षते पश्यति, मन्यते इत्यर्थः । अत्र उभयोरपि वाक्ययोः सामान्यधर्म्मस्य एकरूपतया पर्य्यवसानात् प्रतिवस्तू-पमालङ्कारः, "प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्म्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥" इति लक्षणात् । रथोद्धता वृत्तं, "रात्परैर्नरलगै रथोद्धता" इति लक्षणात् ॥ ३८ ॥

विचिन्वतेति । विदेहपुत्रीं जनकात्मजां विचिन्वता अन्विष्यता तेन रामेण श्वसितं निश्वासः अवशेषो यस्य तथाभूतः जटायुः दृष्टः । स जटायुः दशकन्धरेण रावणेन ते तव सीता हृता इति आवेद्य सद्यः तत्क्षणं तनुं कलेवरं मुमोच तत्याज । उपजाति वृत्तम् ॥ ३९ ॥

ज्ञात्वेति । रामः शत्रुनिसूदनं शत्रुन्तपम् एनं पक्षीन्द्रं पक्षिराजं जटायं जटायुषं वा दशरथस्य मित्रं सखायं ज्ञात्वा

पारलौकिकं कृत्वा पुटाञ्जलिः ।

तात ! त्वं निजतेजसैव गमितः स्वर्गं, व्रज स्वस्ति ते,
ब्रूमस्ते किमिमां बधूहृतिकथां तातान्तिके मा कृथाः ।
रामोऽहं यदि, तद्दिनैः कतिपयैर्व्रीड़ानमत्कन्धरः
साद्धं बन्धुजनैः सुरेन्द्रविजयी वक्ता स्वयं रावणः ॥ ४१ ॥

कियद्दूरं गत्वा भग्नं रावणरथं दृष्ट्वा ।

भग्नोऽयं कथमस्ति रावणरथस्तातेन वज्राङ्कुश(र)-
क्रूरापस्किरमाणभङ्गुरनखत्रोटित्रुटद्बन्धनः ।

---

हा तात ! इदं किं नाम इति अब्रवीत् उवाच । अनुष्टुप् वृत्तम् ॥ ४० ॥

तातेति । हे तात ! त्वं निजतेजसैव स्वर्गं गमितः नीतः, व्रज गच्छ, ते तुभ्यं स्वस्ति शुभम्, अस्त्विति शेषः, ते तुभ्यं तव वा किं ब्रूमः ? किं कथयामः ? न किमपि कथनीयमस्तीत्यर्थः, इमां बधूहृतिकथां जानकीहरणवार्त्तां तातस्य पितुः, स्वर्गतस्येति शेषः, अन्तिके समीपे मा कृथा न कथय । यदि अहं रामः, स्यामिति शेषः, तत् तदा कतिपयैरल्पैरेवेत्यर्थः, दिनैः सुरेन्द्रविजयी देवेन्द्रजेता रावणः बन्धुजनैः सार्द्धं सह व्रीड़या लज्जया, सीताहरणरूपदुष्कृतजनितयेति भावः, नमन्ती कन्धरा ग्रीवा यस्य तथाभूतः सन् स्वयं वक्ता वक्ष्यति, तव स्नुषाहरणात् सवंशोऽहं निधनं गत इति तातान्तिकं स्वयं कथयिष्यतीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४१ ॥

भग्न इति । अयं रावणरथः रावणस्य स्यन्दनः तातेन वज्राङ्कुशः वज्रनिर्मितं वक्राग्रमस्त्रं तद्वत् क्रूराः दारुणाः अपस्किरमाणाः उद्भिद्य आकर्षन्तः भङ्गुरा भञ्जनकारिणः,

हा सीरध्वजराजपुत्रि ! स तदा दृष्टस्त्वया धन्यया
पक्षीन्द्रो दशकण्ठकुञ्जरशिरःसञ्चारपञ्चाननः ॥ ४२ ॥

जटायुवचसा रावणेन सीता हृतेति निश्चित्य
आत्मानमधिक्षिपति ।

राज्यनाशो वने वासो हृता सीता मृतः पिता ।
एकैकमपि यद्दुःखं समुद्रमपि शोषयेत् ॥ ४३ ॥

---

कर्त्तरि घुरच्प्रत्ययः न तु कर्म्मकर्त्तरि, तथात्वे भङ्गुरा भङ्गप्रवणा इत्यर्थः स्यादिति बोध्यं, ये नखाः त्रोटयश्चञ्चवश्च तैः तदाघातै-रित्यर्थः, त्रुटत् विश्लथत् बन्धनं यस्य तथाभूतः कथं केन प्रकारेण भग्नः खण्डितः अस्ति ? असम्भवमिदमिति भावः, क्रूरावस्फारणेन भङ्गरलसत्कोटीत्रुटज्ज्यं धनुरिति पाठे अयं रावणरथः तातेन कथं भग्नः, तथा वज्राङ्कुशस्येव क्रूरं दुःसहं यत् अवस्फारणं तुण्डेन उल्लिख्याकर्षणं तेन भङ्गरे वक्रे लसन्त्यौ ये कोटी धनुरग्रभागौ तयोः सकाशात् त्रुटन्ती ज्या मौर्वी यस्य तादृशं धनुश्च, भग्नमिति शेषः । हा इति खेदे सीरध्वज-राजपुत्रि ! जानकि ! हे इति पाठान्तरम् ; तदा तस्मिन् काले, हरणसमये इत्यर्थः, धन्यया पुण्यवत्या त्वया दशकण्ठः रावण एव कुञ्जरः हस्ती तस्य शिरःसु सञ्चारे आरोहणे इति यावत्, पञ्चाननः सिंहः, "सिंहो मृगेन्द्रः पञ्चास्यः" इत्यमरः, पक्षीन्द्रः पक्षिराजो जटायुः दृष्टः अवलोकितः, आत्मत्राणायेति भावः । तदेत्यत्र तथेति पाठान्तरम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४२ ॥

राज्यनाश इति । राज्यस्य नाशः भ्रंशः, वने वासः, सीता हृता, पिता मृतः, एकैकमपि येषां राज्यनाशादीनां दुःखं

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ ४४ ॥
युक्तमेव हि कैकेय्या भरतस्याभिषेचनम् ।
भार्य्यामपि न यो रक्षेत् स कथं पालयेन्महीम् ॥ ४५ ॥
भद्रं कृतं हि तातेन, येनाहं वनवासितः ।
एषापि हि न मे बुद्धिः क्व मृगः क्व हिरण्मयः ॥ ४६ ॥
सगरात् सागरः कीर्त्तिर्गङ्गा कीर्त्तिर्भगीरथात् ।

---

समुद्रमपि शोषयेत्, समुद्रशोषणमिव हृदयशोषणमिति भावः । अनुष्टुप् वृत्तम् ॥ ४३ ॥

एकस्येति । अहम् अर्णवस्य समुद्रस्य पारमिव यावत् एकस्य दुःखस्य अन्तं न गच्छामि, तावत् द्वितीयं दुःखं मे मम समुपस्थितं, तथाहि अनर्था विपदः, दुःखानीत्यर्थः, छिद्रेषु रन्ध्रेषु बहुलीभवन्ति विस्तृतिमापद्यन्ते इत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । इन्द्रवज्रा वृत्तम् ॥ ४४ ॥

युक्तमिति । भरतस्य अभिषेचनं राज्ये नियोगः कैकेय्या युक्तमेव उचितमेव, हि यतः यः भार्य्यां पत्नीमपि न रक्षेत् न रक्षितुं शक्नुयात् सः कथं केन प्रकारेण महीं पृथिवीं पालयेत् रक्षेत्? नैव रक्षितुं शक्नुयादित्यर्थः । अनुष्टुप् वृत्तम् ॥ ४५ ॥

भद्रमिति । येन तातेन पित्रा अहं वनवासितः वनं प्रेषितः, तेन तातेन भद्रं युक्तं कृतं हि, मम वनप्रेषणं पितुरुचितमेवेत्यर्थः । मे मम एषा बुद्धिरपि न, अस्तीति शेषः, यत् मृगः क्व, हिरण्मयः काञ्चनमयः क्व? न कथमपि मृगस्य हिरण्मयत्वं सम्भवतीति भावः । अनुष्टुप् वृत्तम् ॥ ४६ ॥

अस्माकमीदृशी कीर्त्तिरेका भार्य्या न रचिता ॥ ४७ ॥
लब्धव्यमर्थं लभते मनुष्यो, देवोऽपि तं वारयितुं न शक्तः।
अतो न शोचामि न विस्मयो मे ललाटलेखो न पुनः प्रयाति ॥४८॥
या पाणिग्रहलालिता सुतरुणी तन्वी सुवंशोद्भवा,
गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी।
सा केनापि हृता, तया विरहिणो(ता) गन्तुं न शक्ता वयं,
हे भिक्षो! तव कामिनी ? न हि न हि प्राणप्रिया यष्टिका ॥४९॥

---

सगरादिति। सगरात् मत्पूर्वपुरुषादिति भावः, सागरः कीर्त्तिः जातेति शेषः, अश्वमेधीयाश्वान्वेषणे पातालगमनार्थं पुत्रैः भूमिखननात् सागरो जात इति भावः, भगीरथात् अपरात् पूर्वपुरुषादिति भावः, गङ्गा कीर्त्तिः जातेति शेषः, सगरपुत्राणां कपिलकोपदग्धानाम् उद्धाराय भूतले गङ्गा आनीता भगीरथेनेति भावः, अस्माकम् ईदृशी कीर्त्तिः यत् एका अपिरत्नाध्याहार्य्यः, एकापीत्यर्थः, बह्व्यो भार्य्या दूरे आसतामिति भावः, न रचिता न रचितुं शक्ता। अनुष्टुप् वृत्तम् ॥४७॥

लब्धव्यमिति। मनुष्यः लब्धव्यम् अर्थं लभते प्राप्नोति, देवोऽपि तम् अर्थं वारयितुं न शक्तः न क्षमः। अतः कारणात् न शोचामि न दुःखं करोमि, न च मे मम विस्मयः चमत्कार-बुद्धिः, अस्तीति शेषः, ललाटलेखः विधातृलिपिः न पुनः प्रयाति नैवान्यथा भवतीत्यर्थः। उपजाति वृत्तम् ॥ ४८ ॥

येति। या पाणिग्रहात् आरभ्य पाणिग्रहणेन करग्रहणेन च लालिता सादरं पालितेत्यर्थः, सुतरुणी सुन्दरी युवती सुनवीना च तन्वी कृशाङ्गी सुवंशोद्भवा महाकुलोद्भवा सुष्ठु वेणुसम्भवा च गौरी गौरवर्णा एकत्र निसर्गात् अन्यत्र

अर्द्धे चेतसि जानकी परितपत्यर्द्धे च लङ्केश्वरः
तच्चार्द्धं मदनानलः कवलयत्यर्द्धञ्च रोषानलः ।
इत्थं दुर्विधिसङ्गमव्यतिकरस्तुल्यो द्वयोरंशयोः
एकं वेद्मि तुषाग्निदग्धमपरं दग्धं करीषाग्निना ॥ ५० ॥

---

त्वगपनयनादिति भावः, स्पर्शसुखावहा सुखस्पर्शा गुणवती शीलसौन्दर्य्यादिशालिनी चिक्कणतादिसमन्विता च नित्यं सततं मनोहारिणी हृदयङ्गमा, सा केनापि हृता चोरिता, तया विरहिणः वियोगिनः वयं गन्तुं चलितुं न शक्ताः । हे भिक्षो ! तव कामिनी ? अस्तीति शेषः इति केनापि पृष्टे, नहि नहि कामिनी मम नास्ति नास्ति, प्राणप्रिया यष्टिका अवलम्बनदण्ड इत्यर्थः । अत्र गोपनीयमर्थं कथञ्चन द्योतयित्वा पश्चादन्यथा-करणात् अपह्नुतिरलङ्कारः, "गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन । यदि श्लेषेणान्यथा वाऽन्यथयेत् साप्यपह्नुतिः ॥" इति लक्षणात् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४९ ॥

अर्द्धे इति । अर्द्धे चेतसि चित्तस्यार्द्धांशे इत्यर्थः, जानकी सीता तिष्ठतीत्यर्थः, अर्द्धे च, अपरस्मिन्निति शेषः, लङ्केश्वरः रावणः परितपति परितस्तापं ददातीत्यर्थः । तच्चार्द्धं प्रथम-मिति भावः, मदनानलः कामाग्निः कवलयति ग्रसति, अर्द्धञ्च, द्वितीयमिति शेषः, रोषानलः क्रोधाग्निः, कवलयतीत्यन्वयः, जानकीं प्रति मदनानुरागः रावणं प्रति क्रोध इति भावः, इत्थं द्वयोरपि अंशयोः, चेतस इति शेषः, दुर्विधिः दुर्दैवं तस्य सङ्गमः समागमः तस्य व्यतिकरः प्रभावः तुल्यः, अतः एकम् अंशं प्रथममिति भावः, तुषाग्निना तुषानलेन दग्धम् अपरम् अंशं द्वितीयमिति भावः, करीषाग्निना शुष्कगोमयानलेन

अन्वेषयामि सुमुखीं, विमुखो विधाता,
तां विस्मरामि, निविड़प्रणयो विरोधी ।
अङ्गीकरोमि गरलं, कुलयोः कलङ्कः,
शान्तिं भजामि, कुटिलं धनुरन्तरायः ॥ ५१ ॥

न मे दुःखं प्रिया दूरे, न मे दुःखं हृतेति सा ।
एतदेव हि शोचामि, चापो यदभिवर्त्तते ॥ ५२ ॥

मांसं कार्श्यादभिगतमपां विन्दवो वाष्पपातात्

---

दग्धं वेद्मि मन्ये इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५० ॥

अन्वेषयामीति । सुमुखीं सुवदनां सीताम् अन्वेषयामि अनुसन्दधामि, किन्तु विधाता विमुखः प्रतिकूलः, अन्वेषणे फलं नास्तीति भावः । तां कान्तां विस्मरामि विस्मर्त्तुमिच्छामि, किन्तु निविड़प्रणयः सान्द्रप्रेमा विरोधी प्रतीपः, विस्मरणं प्रतिबध्नातीति भावः, गरलं विषम् अङ्गीकरोमि विषपानेन प्राणान् त्यक्तुमिच्छामीति भावः, किन्तु कुलयोः पितृमातृवंशयोः पितृश्वशुरवंशयोर्वा कलङ्कः अपवादः, स्यादिति शेषः, शान्तिं भजामि तूष्णीं तिष्ठामीत्यर्थः, किन्तु धनुः कार्मुकम् अन्तरायः विघ्नः, धनुषा प्रतीकारविधाने मां समुद्योजयतीति भावः । वसन्ततिलकं वृत्तम् ॥ ५१ ॥

नेति । प्रिया जानकी दूरे, तिष्ठतीति शेषः, इति मे मम न दुःखं, सा प्रिया हृता इति मे मम न दुःखम्, अस्तीति शेषः, चापः धनुः यत् अभिवर्त्तते तिष्ठति एतदेव शोचामि, हि मम धनुर्धारणं विफलं यदनेन प्राणाधिका कान्तापि न रक्षितेति दुःखमनुभवामीत्यर्थः । अनुष्टुप् वृत्तम् ॥ ५२ ॥

तद्विरहे प्राणधारणादात्मनः काठिन्यं प्रारब्धावश्यभोग्यत्वं

तेजः कान्तापहरणवशाद् वायवः श्वासदैर्घ्यात्।
इत्थं नष्टं विरहवपुषस्तन्मयत्वाच्च शून्यं
जीवत्येवं कुलिशकठिनो रामचन्द्रः किमेतत्॥" ५२॥

---

दर्शयति मांसमिति। कार्श्यात् दुश्चिन्तया क्रमेण चीणत्वात् मांसं चितेरंशभूतमिति भावः, अभिगतं नष्टमित्यर्थः, अपां विन्दवः जलीयभागा इति भावः. वाष्पाणाम् अश्रूणां पातात् अभिगता इति लिङ्गवचनव्यत्यासेनान्वयः। तेजः प्रताप इति भावः, कान्ताया अपहरणवशात् अभिगतमित्यन्वयः। वायवः मरुद्भागा इति भावः, श्वासानां निश्वासानां दैर्घ्यात् अभिगता इत्यन्वयः। इत्थम् एवं विरहे यत् वपुः शरीरं तस्य तन्मयत्वात् सीतया पूरितनिखिलावकाशत्वादिति भावः, शून्यं व्योमभागश्च नष्टम्। उक्तञ्च सिद्धान्तमुक्तावल्याम्; "तस्मिन् यत् कठिनत्वं सा भूः, तज्जलं यद्द्रवात्मकं, तेजो भवेद् यदुष्णत्वं तत्, सञ्चरेद् यः स मारुतः, सुषिरं यत्तदाकाशमिति पञ्चात्मकं वपुः" इति। कारणाभावात् कार्य्यस्याप्यभाव इति नयादेतत्-कार्य्येन्द्रियगणोऽपि नष्ट इति द्योतितम्। उक्तञ्च तत्रैव "श्रवणं व्योमतो वायोस्त्वक् नेत्रे तेजसो जलात्। रसना भूमितो घ्राणमिति पञ्चेन्द्रियोद्भवः॥" इति ग्राहकाभावे ग्राह्यस्याप्यभाव इति नयेन इन्द्रियग्राह्यविषयाणामप्यभावे व्यञ्जितः। तथाचास्य चित्यादिपञ्चकमिन्द्रियपञ्चकं तद्ग्राह्यविषयपञ्चकञ्च नष्टमिति ध्वन्यते। कर्मेन्द्रियाणाञ्च वायुकार्य्यत्वात् तल्लये लय एव, महदहङ्कारमनश्चित्तानाञ्च पृथिव्यप्तेजोवायूनां सात्त्विकांशेभ्यो जातानां तत्तल्लिलय एव लय इति चतुर्विंशति-तत्त्वलयः सुतरां जात इति भावः, एवं सत्यपि रामचन्द्रः

(ख) एवं दैवयोगाद् गोगवयगजभुजङ्गशरभशार्दूलकोलबहुल-कोलाहलाहूतभूतवेतालसमुत्तालकालकराल-चक्रवालकण्ठनाल-प्रोच्छलत्तुमुल-घोर-चीत्कार-मिलित-बहुलान्धकार-कलित-गह्वरा-न्तरालविलसदविरल-सरल-परिमलबहल चञ्चलगलद्विमल-मकर-न्दविन्दुकीलालजालपिच्छिलालवालत्तुलितप्रमत्तालि-माला-मन्दा-

---

कुलिशकठिनः वज्रकठोरः अत एव जीवति, एतत् किम् ? चतुर्विंशतितत्त्वविगमेऽपि प्राणितीत्याश्चर्य्यमिति सन्दर्भार्थः । मन्दाक्रान्ता वृत्तम् ॥ ५२ ॥

(ख) एवमित्यादि । दैवयोगात् विधिवशात्, सहसेत्यर्थः, गोगवयादि...पच्चिणोपचन्नद्धिमिति अरण्यानीमित्यस्य विशे-षणम् । भुजङ्गश्चित्रमृगः सर्पो वा, "भुजङ्गौ सर्पचित्रकौ" इति धरणिः । शरभः अष्टापदमृगविशेषः, गवयः गोसदृशो जन्तु-विशेषः, कोलः वराहः, "कोलः पोत्री किरिः किटिः" इत्यमरः । गोगवयादिकोलान्तानां कोलाहलेन निनादेन आहूताः आका-रिताः ये भूताः मृतशरीराविष्टाः प्रेताः वेतालाः रुद्रगणभेदाश्च तेषां समुत्तालानि महान्ति यानि कालवत्करालानि भीषणानि चक्रवालानि समूहाः, "चक्रवालन्तु मण्डलम्" इत्यमरः, तेषां कण्ठनालेभ्यः प्रोच्छलन् समुद्गच्छन् तुमुलो महान् यः घोरः भीषणश्चीत्कारः तेन मिलिताः सङ्गताः ये बहुलाः प्रभूताः अन्धकाराः तैः कलितानाम् आवृतानां गह्वराणाम् अन्त-रालेभ्यः अवकाशेभ्यः विलसन्तः स्फुरन्तः अविरलाः घनाः ये सरलानां देवदारूणां परिमलाः येषु तादृशाः बहला बहुलाः चञ्चलाः विसृमराः गलन्तः निःसरन्तः ये मकरन्दानां पुष्प-रसानां विन्दवः कणाः, त एव कीलालजालानि अमृतपूराः

निलान्दोलवाचाल-दरदलित ललितमाकन्दवृन्द-वकुलमुकुल-धूलिजालखेलत्कोकिलकुल-विलासिनी-कोमलालाप-निखिल-गिरिशिखर-शिखिलास्य-लीलाकलापस्यानुकूललोलद्गोलाङ्गूल-चञ्चच्चकोरचक्र-मञ्जुगुञ्जद्-वृक्षपक्षिणी-पक्षवृद्धिं गगनचुम्बनबद्ध-लक्ष्य-विपुल फलभारावलम्बनालम्बितानन्त-जन्तु-सन्तोषपोष-निर्दोष-भूषणाध्युषित-निःशेष - सविशेषामृतवर्ष-स्पर्द्धि-वर्द्धिष्णु-रस-रसाल-प्रियालहिन्ताल-तमाल-कृतमाल-विशाल-शाल्मल-मालूर-शल्लकी-शिरीषासन-शमीशाक-शिंशपाशोक-चम्पक-सुरदारु-कोवि-

---

"पयः कीलालममृतम्" इत्यमर, तैः पिच्छिलेषु पूर्णेषु आलवालेषु वृक्षमूलजलाधारगर्त्तेषु लुलिता लुब्धाः ये प्रमत्ता अलयः भ्रमराः तेषां माला, तथा मन्दानिलस्य मन्दं मन्दं सञ्चरतो मातरिश्वनः आन्दोलेन प्रकम्पनेन वाचाला मुखरा या दरदलितानाम् ईषद्विकसितानाम् अतएव ललितानां सुन्दराणां, मनोहराणामित्यर्थः, "ललितं त्रिषु सुन्दरम्" इति कोषः, माकन्दवृन्दानाम् आम्रसमूहानां वकुलमुकुलानाञ्च धूलजालेषु परागनिवहेषु खेलन्त्यः विहरन्त्यः कोकिलकुलविलासिन्यः कोकिला इत्यर्थः, तासां कोमलेन मृदुना आलापेन निखिलानि पूर्णानि यानि गिरिशिखराणि पर्वतशृङ्गाणि तेषु ये शिखिनः मयूराः तेषां लास्यलीलाकलापः नर्त्तनक्रीड़ातिशयः तस्य अनुकूलाः तदुत्साहहेतव इत्यर्थः, लोलन्त इतस्ततश्चलन्तः गोलाङ्गुलाः वानराः तथा चञ्चन्तः समन्तात् प्रसरन्तः चकोराः पक्षिविशेषाः तेषां चक्रेण समूहेनेत्यर्थः, मञ्जु मनोज्ञं गुञ्जन्तो नदन्तो वृक्षपक्षिणीनां वृक्षस्थितपक्षिणीनां पक्षस्य कुलस्य वृद्धिः समृद्धिः, समवाय इति यावत् यस्यां तथाविधाम् ।

दारकर्णिकार-सिन्धुवार-बहुसार निम्ब-जम्बुदुम्ब-र-कदम्ब-करञ्ज-शोभाञ्जन-वकुल-निचुल-करूर-खर्जूर-वीजपूर-जम्बीर-भाण्डीर-वानीर-काश्मीर-नारङ्ग कर्म्मरङ्ग-कदली-चन्दनालिङ्गित-लवली-धात्री-वटुकुटज-पाटलाङ्कोल=कङ्कोल-चोल-भल्लातक-विभीतक-हरीतक्याम्रातक-केतक=कङ्कत-वैकङ्कत-मधूक-बन्धूक जयन्ती-जयाश्वत्थ-तिन्तिड़ीनागकेसरादि-दुस्तराम् अरण्यानीं पर्य्यटन् मह्लावराहस्कन्धारूढ़म् उत्कटं रटन्तं करटं वामतो विलोक्य

---

गगनस्य आकाशस्य चुम्बनाय बद्धं लक्ष्यं यैः ते समुन्नता इति यावत्, विपुलेन प्रभूतेन फलभारावलम्बेन आलम्बिता अवनताः अनन्तानाम् अशेषाणां जन्तूनां प्राणिनां सन्तोषं पुष्णातीति सन्तोषपोषः सन्तोषकर इत्यर्थः, निर्दोषं विशुद्धं यत् भूषणम् अलङ्कारः तदिव अध्युषितः निःशेषः बहुलः सविशेषः विशिष्टगुणयुक्तः अमृतवर्षस्पर्द्धी पीयूषवर्षणसदृश इत्यर्थः, वर्द्धिष्णुः प्रवृद्धः रसः स्वादः येषां तैः रसालादि-केसरादिभिः दुस्तरां दुष्पारामित्यर्थः । रसालः आम्रः, "आम्रश्चूतो रसालः" इत्यमरः, प्रियालः राजादनाख्यवृक्षभेदः, "राजादनः प्रियालः स्यात्" इत्यमरः, हिन्तालो हिङ्गोटकाख्यः वृक्षभेदः, तमालः प्रसिद्धः, कृतमालः चतुरङ्गलाख्यवृक्षः, शाल्मलः शाल्मली, मालूरः श्रीफलः, "मालूरः श्रीफलो विल्वः" इत्यमरः । शल्लकी गजभक्ष्यवृक्षविशेषः, शिरीषः प्रसिद्धः असनः तदाख्यवृक्षभेदः सुरदारुः देवदारुः, कोविदारः चमरिकाख्यवृक्षः । बहुसारः सप्तच्छदः शोभाञ्जनः 'सजिना' इति प्रसिद्धः, निचुलः स्थलवेतसभेदः, करूरः वृक्षभेदः, कर्म्मरङ्गः, 'कामराङ्गा' इति प्रसिद्धः, अन्ये च लवल्यादयः केसरान्ता वृक्षभेदाः आदयो येषां

दक्षिणतस्तु दक्षिणाचलप्रचलित-मलयमालती-मरुवक लवङ्ग-कङ्कोल-दमनक-जाती-तगर-शतपत्रादि-कमल-मुकुल-कुमुदिनी-कह्लार-परिमल मिलित-चुम्बित-ताम्रपर्णी-कावेरी-तुङ्गभद्रा सान्द्र-गभीर नीरधारा-तरङ्ग परिपीत मैत्रावरुणतरुणी लङ्का-शशाङ्क रुद्र-पादाद्रिसरलसिंहल सालकश्रीगोपालक-पाण्ड्यमङ्गलगिरिप्रवाल-चोल-कुन्तल-केरल-पुन्नाटक-कर्णाटक-करहाट-विदग्धान्ध्रकामिनी नीरन्ध्र-पीनस्तनवदन–घनजघनदोर्मूल–धम्मिल्लभारान्तराधिष्ठित-

---

तैः दुस्तरा ताम्। महान् वराहः शूकरः तस्य स्कन्धः तम् आरूढ़ः तम्। उत्कटं दारुणं रटन्तं ध्वनन्तं करटं काकं, "काके तु करटारिष्ट" इत्यमरः। दक्षिणेति। दक्षिणाचलेषु दक्षिणदिग्वर्त्तिषु पर्वतेषु मध्ये प्रचलितो यो मलयः तदाख्यो गिरिः तत्र ये मालतीनां मरुवकाणां लवङ्गानां कङ्कोलानां दमनकानां वृक्षभेदानां जातीनां तगराणां शतपत्रादिकमल-मुकुलानां शतपत्रसहस्रपत्रप्रभृतिपद्मवकुलानां कुमुदिनीनां कह्लाराणां रक्तोत्पलानाञ्च परिमलाः विमर्दजनिता गन्धाः तेषां मिलितं मेलनं, भावे क्तप्रत्ययः, तेन चुम्बिताः सङ्गताः याः ताम्रपर्णी कावेरी तुङ्गभद्रा नदीविशेषा इत्यर्थः, तासां सान्द्रा घनाः गभीराः या नीरधाराः जलप्रवाहाः तासां तरङ्गेषु परिपीताः कृतावगाहनाः, परिपूर्वात् पिबतेः कर्त्तरि क्तप्रत्ययश्चिन्त्यः, यद्वा तासां तरङ्गैः कर्त्तृभिः परिपीताः चालिताः धौताङ्गा इति यावत् मैत्रावरुणतरुणी अगस्त्यपत्नी लोपामुद्रेत्यर्थः, तथा लङ्काद्यन्ध्रपर्य्यन्तदेशानां कामिन्यः तासां नीरन्ध्राणां घनानां पीनानां स्तनानां वदनानां घनजघनानां

श्रीखण्डागुरु-कर्पूर-मृगमद कुङ्कुम-स्तोमसम्भृत-यच्चकर्दमविमर्द-वर्द्धितविविधगन्धकुसुमबहुलपरिमलोद्गारि-मारुताशनोत्थितचीर-नीहार-काश्मीर-स्फटिक-शुद्धशङ्ख--कर्पूरकुन्दावदात-महाभुजङ्ग-स्फीतफूत्कारप्रफुल्लफणामणौ क्रीड़न्तं शोकभञ्जनं खञ्जन-ञ्चावलोक्य वामेनाक्ष्णा सकरुणं सवाष्पञ्च दक्षिणेन सवि-स्मयं सानन्दम् । ( ख )

ततोऽन्यतो गत्वा श्रीखण्डागुरुकर्पूरमृगमदकुङ्कुमस्तोममरु-वकजातीतगर-चम्पकादि-गन्धकुसुमबहुलमारुतोत्थितस्य चीर-नीहारस्फटिकशङ्खकर्पूरकुन्दावदातस्य स्फीतफुत्कारप्रफूल्लस्य

---

दोर्मूलानां भुजामूलानां धम्मिल्लानां संयतकुन्तलानां, "धम्मिल्लाः संयताः कचाः" इत्यमरः, भारस्य अन्तरेषु अधिष्ठितः यः श्रीखण्डः चन्दनम् अगुरु कर्पूरं मृगमदः कस्तूरी कुङ्कुमः तेषां स्तोमः समूहः तेन सम्भृतः यः यच्चकर्दमः प्रागुक्तः पङ्कभेदः तस्य विमर्द्देन वर्द्धितः विविधानां गन्धकुसुमानां बहुलः प्रभूतः परिमलः तस्य उद्गारी वाही यः मारुतः वायुः स अशनं भोजनं यस्य स चासौ उत्थितः अर्द्धमिति यावत्, चीरं दुग्धं नीहारः शिशिरः काश्मीरस्फटिके इव शुद्धः निर्मलः, स्वच्छ इत्यर्थः, शङ्खकर्पूरकुन्दवत् अवदातः श्वेतो यः महान् भुजङ्गः सर्पः, "अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः" इत्य-मरः, तस्य स्फीतेन प्रवृद्धेन फूत्कारेण श्वासविशेषेणेत्यर्थः, प्रफुल्लायाः फणायाः मणिः रत्नं तत्र क्रीड़न्तं विहरन्तं शोक-भञ्जनं शोकनाशनं, दर्शनेनैव दुःखमवसाययन्तमित्यर्थः ।

(ग) ततोऽन्यतो गत्वेत्यादि । श्रीखण्डादिचम्पकादीनां गन्धद्रव्याणां कुसुमानाञ्च बहुलेन मारुतेन तत्पानार्थमिति

भुजङ्गस्य फणामणौ कामिनीलोचनगञ्जनं खञ्जनं दृष्ट्वा रामः। (ग)

काकः कपोलस्थलसंस्थितो मे कोलस्य वामे व्यसनं सदौःस्थ्यम्।
राज्यं भुजङ्गस्य फणाधिरूढ़ो व्यनक्त्यहो दक्षिणखञ्जरीटः॥५४॥

क्षणं विचिन्त्य विश्रम्य च सवाष्पम्।

भो भो भुजङ्ग! तरुपल्लवलोलजिह्व!
बन्धूकपुष्पवरशोभितपुष्कराक्ष!।
पृच्छामि ते पवनभोजन! कोमलाङ्गी
काचित् त्वया शरदचन्द्रमुखी न दृष्टा?॥ ५५ ॥

---

भावः, उत्थितस्य अर्द्धोन्नतस्येत्यर्थः, चौरेत्यादिवत् अवदातस्य गौरस्य स्फीतेन फूत्कारेण श्वासेन प्रफुल्लस्य प्रवृद्धकायस्येत्यर्थः। कामिनीलोचनगञ्जनं रमणीनयनतिरस्कारकं, तत्सदृशमिति भावः। तत इत्यादिपाठस्तु प्राच्यपुस्तकेषु दृश्यते।

काक इति। वामे वामभागे कोलस्य वराहस्य कपोलस्थल-संस्थितः स्कन्धाधिरूढ़ इति यावत्, काकः मे मम सदौःस्थ्यं दुःखावस्थानसहितं व्यसनं विपदं भुजङ्गस्य फणाधिरूढ़ः दक्षिणखञ्जरीटः दक्षिणदिग्वर्त्ती खञ्जनः राज्यं व्यनक्ति सूचयति अहो एकदैवार्थद्वयसूचकशकुनत्वादाश्चर्य्यमित्यर्थः। उपजाति वृत्तम्॥ ५४ ॥

भो इति। भो भोः तरुपल्लववत् लोला चला जिह्वा यस्य तथोक्तः तत्सम्बुद्धौ, बन्धूकपुष्पवरेण शोभिते ये पुष्करे पद्मे, ते इव अक्षिणी यस्य तथोक्तः तत्सम्बुद्धौ, हे पवनभोजिन्! वायुभोजिन् भुजङ्ग! ते तुभ्यं तव वा पृच्छामि, कोमलाङ्गी मृदुकलेवरा शरदचन्द्रमुखी शारदचन्द्रवदना काचित् त्वया

रामः।

दृष्टा गता चम्पकपुष्पवर्णा पीनस्तनी कुङ्कुमचर्चिताङ्गी।
आकाशगङ्गेव सुशीतलाङ्गी नक्षत्रमध्ये इव चन्द्ररेखा ॥ ५६ ॥

व्यसनं किमतोऽप्यास्ते ज्ञातश्चाभ्युदयो मम।
शरणं मरणं, राज्यं मा पुनर्मरणन्तु तत् ॥ ५७ ॥

ततो रामः पुरस्कृत्य तिरस्कृत्य च दक्षिणम्।
धन्यो धन्यशरण्यान्तामरण्यानीं व्यगाहत ॥ ५८ ॥

---

दृष्टा न? न्विति पाठे दृष्टा नु दृष्टा किमित्यर्थः। वसन्ततिलकं वृत्तम् ॥ ५५ ॥

गतेति। चम्पकपुष्पवत् वर्णो यस्याः तथाभुता गौरीत्यर्थः, पीनस्तनी स्थूलकुचा कुङ्कुमेन चर्चितं विलेपितम् अङ्गं यस्याः सा आकाशगङ्गेव मन्दाकिनीव सुशीतलाङ्गी नक्षत्रमध्ये चन्द्ररेखेव, कापीति शेषः, गता दृष्टा?। उपजाति वृत्तम् ॥ ५६ ॥

व्यसनमिति। इतोऽपि अस्मादपि, सीतावियोगादिति भावः, व्यसनं दुःखं किम् आस्ते? न किमपीत्यर्थः, यदावेदयति करट इति भावः। मम अभ्युदयश्च समुन्नतिश्च ज्ञातः, खञ्जनदर्शनेनेति भावः, साम्प्रतं मरणं शरणम् आश्रय इत्यर्थः, मरणमेव आश्रयामीत्यर्थः, राज्यं पुनः मा, अस्त्विति शेषः, तत् राज्यं मरणन्तु मरणमेवेत्यर्थः, सीतारहितस्य ममेति भावः, मरणन्त्वित्यत्र लक्ष्मणेऽस्त्विति पाठे तत् राज्यं लक्ष्मणे अस्तु भवतु, लक्ष्मणो राज्यं लभतामित्यर्थः। अनुष्टुप् वृत्तम् ॥ ५७ ॥

तत इति। ततोऽनन्तरं शुभाशुभशकुनदर्शनात् परं धन्यः पुण्यकर्मा रामः पुरस्कृत्य अवलम्ब्येत्यर्थः, अशुभशकुनमिति

ततः कबन्धदर्शनम् ।

आयोजनप्रसृतदोर्युगलेन मार्गम्

आक्रम्य कण्ठकुहरे कुरुते नु कोऽयम् ।

सौमित्रिणेति गदितः स कबन्धकण्ठं

चिच्छेद गर्भकदलीमिव रामभद्रः ॥ ५९ ॥

पूतो रामशरेण दिव्यमगमद्देहं कबन्धस्तत-

स्तद्वाक्याच्छ्रमणाश्रमे हनुमता संयुज्य सीतापतिः ।

---

भावः, दक्षिणं शुभशकुनमित्यर्थः, तिरस्कृत्य अगणयित्वेति भावः, रामः पुरस्कृत्य तिरस्कृत्य चेत्यत्र वामं तिरस्कृत्य पुरस्कृत्य चेति पाठे वामम् अशुभशकुनं तिरस्कृत्य निर्भर्त्स्य दक्षिणं शुभशकुनं पुरस्कृत्य प्रशस्य चेत्यर्थः,धन्यानां पुण्यकर्म्मणामृषीणामिति भावः, शरण्याम् आश्रयभूतां, वन्यशरण्यामिति पाठे वन्यानां वनचारिणां शरण्यामित्यन्वयः, ताम् अरण्यानीं महारण्यं,"महारण्यमरण्यानी" इत्यमरः,व्यगाहत प्रविष्टवान् । अनुष्टुप् वृत्तम् ॥५८॥

आयोजनेति । कोऽयं योजनात् आ आयोजनं क्रोशचतुष्टयं यावदित्यर्थः, "स्याद् योजनं क्रोशचतुष्टयेन" इत्युक्तेः, प्रसृतं विस्तृतं दोर्युगलं बाहुद्वयं तेन मार्गं पन्थानम् आक्रम्य निरुध्य कण्ठकुहरे गलविवरे कुरुते, अस्मानिति शेषः, नु वितर्के । सौमित्रिणा लक्ष्मणेन इतीत्थं गदितः अभिहितः स रामभद्रः कबन्धस्य योजनबाह्वोरिति भावः, कण्ठं गर्भकदलीमिव कदल्यन्तर्भागविशेषमिव चिच्छेद चकर्त्त । वसन्ततिलकं वृत्तम् ॥५९॥

पूत इति । ततः रामशरकर्त्तनानन्तरं कबन्धः रामस्य शरेण पूतः निस्तीर्णकलुष इत्यर्थः, दिव्यं स्वर्गीयं देहम् अगमत् प्राप । सीतापतिः रामः तस्य कबन्धस्य वाक्यात् "याहि श्रमणा-

सीतोद्धारविधौ समं निजबलैः स्वीकार्य्य साहायकं
संप्राप्तः प्रतिपन्नबालिनिधनः सख्यं कपीन्द्राधिपात् ( पे ) ॥६०॥
ऋष्यमूकगिरौ रामो निःसहायः परिभ्रमन्।
सख्यं समानदुःखेन सुग्रीवेण सहाकरोत्॥ ६१ ॥
पादाङ्गुष्ठेन दूरं धरणिधरगुरुं दुन्दुभेरस्थिकूटं
क्षिप्त्वासौ क्षिप्रकारी विषमविनिहितान् वज्रवत् सप्त तालान्।
बाणेनैकेन शब्दप्रतिहतसकलश्रोत्रगर्भान् विभिद्य
प्रत्याशां बालिवे(वा)धे प्लवगबलपतेः पोषयामास रामः॥ ६२ ॥

---

सकाशं सा ते उपायं विधास्यति" इति वचनादित्यर्थः, श्रमणायाः तदाख्यायाः सिद्धशवर्य्याः आश्रमे हनुमता सह संयुज्य सङ्गत्य सीताया उद्धारविधौ उद्धारसाधने विषये निजबलैः कपिसेनाभिः समं सह साहायकं सहायभावं स्वीकार्य्य प्रतिश्राव्येत्यर्थः, प्रतिपन्नबालिनिधनः अङ्गीकृतबालिबधः सन् कपीन्द्राधिपात् सुग्रीवात्, कपीन्द्राधिपे इति पाठान्तरं, सख्यं सम्प्राप्तः लब्धवान्। स्वीकृत्येति पाठे स्वीकृत्य अङ्गीकृत्य, स्थितादिति अध्याहृत्य कपीन्द्राधिपादित्यनेनान्वयः। शार्दूलविक्रीडितं वृत्तम्॥ ६० ॥

ऋष्यमूकेति। निःसहायो रामः ऋष्यमूकगिरौ परिभ्रमन् समानं दुःखं कान्तावियोगजमिति भावः, यस्य तेन सुग्रीवेण बालिहृतदारेणेति भावः, सह सख्यं मैत्रीम् अकरोत्। अनुष्टप् वृत्तम्॥ ६१ ॥

पादेति। असौ रामः धरणिधरः पर्वतः तद्वत् गुरुः महान् भारवान् वेत्यर्थः, दुन्दुभेः तदाख्यस्य दैत्यभेदस्य, बालिना निहतस्येति भावः, अस्थ्नां कूटः राशिः तं पादस्य अङ्गुष्ठेन दूरं क्षिप्त्वा निक्षिप्य क्षिप्रकारी द्रुतहस्तः सन्नित्यर्थः, वज्रवत् वज्रेणेव एकेन बाणेन शब्देन भेदध्वानेन प्रतिहताः बधिरीकृता

किष्किन्ध्याद्रौ रौद्ररुद्रावतारं दृष्ट्वा रामो मारुतिं वाचमूचे ।
सीता नीता केनचित् क्वापि दृष्टा हृष्टः कष्टं संहरन् प्राह वीरः ॥६२॥
पापेनाकृष्यमाणा रजनिचरवरेणाम्बरेण व्रजन्ती
किष्किन्ध्याद्रौ मुमोच प्रचुरमणिगणैर्भूषणान्यर्च्चितानि ।

---

इति यावत्, सकलानां सर्वेषां प्राणिनामिति भावः, श्रोत्रगर्भाः श्रवणेन्द्रियविवराणि यैः तान् विषमं विकटं यथा तथा विनिहताः विद्धाः तान् सप्त तालान् श्रेणीबद्धान् सप्तसंख्यकान् तालवृक्षानित्यर्थः, विभिद्य विशेषेण भित्त्वा प्लवगानां वानराणां बलस्य सेनायाः पतिः तस्य सुग्रीवस्येत्यर्थः, बालिविधे बालिनो वेधे शरेण भेदने, बाधे इति पाठे बाधे पीड़ने, हिंसने इत्यर्थः, प्रत्याशां पोषयामास जनयामास । यदा अयं पादाङ्गुष्ठेन दुन्दुभिकङ्कालं सुदूरं निक्षिप्य एकेन शरेण सप्त तालान् बिभेद तदा अनेन बालिवधः सम्भाव्यते इति सुग्रीवस्य मनसि आशा जातेति भावः । स्रग्धरा वृत्तम् ॥ ६२ ॥

किष्किन्ध्येति । रामः किष्किन्ध्याद्रौ रौद्रः भीषणः रुद्रस्य हरस्य अवतारः अंशरूपेणाविर्भूत इति यावत् तं मारुतिं वायुपुत्रं, हनूमन्तमित्यर्थः, दृष्ट्वा वाचम् ऊचे अब्रवीत् ( वत्स ! ) केनचित् जनेन क्वापि सीता नीता दृष्टा ? त्वयेति शेषः । स वीरः हनूमान् हृष्टः सन् कष्टं दुःखं, रामस्येति शेषः, संहरन् निरस्यन् प्राह प्रोक्तवान् । इन्द्रवज्रा वृत्तम् ॥ ६२ ॥

पापेनेति । पापेन दुराचारेण रजनिचरवरेण राक्षसाधिपेन, केनचिदिति शेषः, आकृष्यमाणा नीयमाना अम्बरेण

हा राम ! प्राणनाथेत्यहह जहि रिपुं लक्ष्मणेनालपन्ती
यानीमानीति तानि क्षिपति रघुपुरः कापि रामाञ्जनेयः ॥६४॥

तालवेधसमये श्रीरामो बाणं प्रति ।

भावोऽनिशं कुशिकनन्दनपादयोर्मे,
यद्यस्म्यहं द्विजतिरस्कृतिरोषहीनः ।
नान्याङ्गनासु च मनः, शर ! सप्त तालान्
भित्त्वा तदा प्रविश भूतलमप्यगाधम् ॥ ६५ ॥

एकेनैव शरेण गर्भकदलीकाण्डेष्विवानुक्रमात्
विद्धेषु प्रथितेन दाशरथिना तालेषु सप्तस्वपि ।

---

आकाशेन व्रजन्ती गच्छन्ती कापि रामा कामिनी, "कामिनी रमणी रामा" इत्यमरः, हा राम ! प्राणनाथ ! अहह इति खेदातिशयार्थं, लक्ष्मणेन सह रिपुं शत्रुं जहि नाशय इति आलपन्ती प्रचुरमणिगणैः अर्चितानि खचितानि यानि भूषणानि किष्किन्ध्याद्रौ मुमोच तत्याज, आञ्जनेयः अञ्जनातनयः हनूमान् तानि इमानि इति, उक्त्वेति शेषः, रघुपुरः रामाग्रतः क्षिपति अर्पयति, भूतार्थे वर्त्तमानप्रयोगश्चिन्त्यः । स्रग्धरा वृत्तम् ॥ ६४ ॥

भाव इति । यदि मे मम कुशिकनन्दनस्य विश्वामित्रस्य पादयोः अनिशं सततं भावः भक्तिः, अस्ति इति शेषः, यदि अहं द्विजानां ब्राह्मणानां तिरस्कृतिः तिरस्कारः रोषः क्रोधः ताभ्यां हीनः वर्जितः अस्मि ब्राह्मणेषु नापराद्धः अस्मीति भावः, यदि च मम मनः अन्याङ्गनासु परनारीषु न, अस्तीति शेषः, तदा हे शर ! सप्त तालान् भित्त्वा अगाधम् अतलस्पर्शं भूतलमपि प्रविश । वसन्ततिलकं वृत्तम् ॥ ६५ ॥

एकेनेति । प्रथितेन प्रसिद्धेन दाशरथिना रामेण एकेनैव

* * * * * * *

शैलाः सप्त रसातलानि भयतः सङ्ख्यानसाम्यादिव ॥ ६६ ॥

श्रुत्वा हतान् समरमूर्द्धनि सप्त तालान्
रामेण दीनहृदयेन विनापराधम् ।
कोपानलज्वलितहृत्कमलोऽथ वाली
रङ्गावतारमगमत् गिरिगह्वरात् सः ॥ ६७ ॥

---

शरेण गर्भकदलीकाण्डेष्विव अभ्यन्तरवर्त्तिरम्भास्तम्भेष्विव अनुक्रमात् यथाक्रमं सप्तसु अपि तालेषु विद्धेषु सत्सु, बालकदलीकाण्डप्रभङ्गक्रमात् कृत्तेषु प्रथमेषु दाशरथिना तालेषु सप्तस्वथेति पाठान्तरम् ; ( शैलाः सप्त रसातलानि भयतः संख्यानसाम्यादिवेत्यत्र तृतीयपादविरहात् पाश्चात्त्यपुस्तकीयपाठः संयोजितः ) अश्वाः सप्त जगन्ति सप्त मुनयः सप्ताब्धयः सप्त गाः शैलाः सप्त च मातरो भयभृतः सङ्ख्यानसाम्यादिव । सप्त अश्वाः, रवेरिति शेषः, सप्त जगन्ति भूरादीनि सप्त मुनयः मरीच्यादयः, सप्त अब्धयः समुद्रा लवणादयः, सप्त गाः सप्त द्वीपानि सप्त शैलाः पर्वताः सप्त मातरश्च जनन्यादयः, "राजपत्नी गुरोः पत्नी श्वश्रूर्भूमिः प्रसूस्तथा । पितृपत्नी चोपमाता सप्तैता मातरः स्मृताः ॥" इत्युक्ताः सङ्ख्यानसाम्यादिव अस्माकमपि सप्तसंख्यास्तत् यदि अस्मानप्ययं विध्येदित्याशङ्कावशादिव भयभृतः भीताः, आसन्निति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६६ ॥

श्रुत्वेति । अथानन्तरं स प्रसिद्धो वाली दीनहृदयेन शोकार्त्तचेतसा, स्वस्थतायां किमु वक्तव्यमिति भावः, रामेण सप्त तालान् अपराधं विना हतान् नाशितान् श्रुत्वा कोपानलेन ज्वलितं हृत्कमलं हृदयपद्मं यस्य तथाभूतः सन् गिरिगह्वरात् किष्किन्ध्याद्रिगुहातः समरमूर्द्धनि रणशिरसि रङ्गावतारं नर्त्तनार्थ-

ततस्तारा सहर्षमात्मगतम्। अद्यावश्यं श्रीरामचन्द्र-चरणप्रसादात् निजवल्लभस्य चिरविरहिणो वक्षःपीठे लुठिष्यामि वीरसुग्रीवस्य इत्याशिषं पठति। (क)

तारा सन्त्यक्तहारा गिरिशिखरवरव्यस्तधम्मिल्लभा(धा)रा
शोकाब्धेः प्राप्तपारार्पितमदनशरा वीरसुग्रीवदाराः।
नाना नाराचधारा निजरमणरतातापिनः पापिनोऽस्य
प्राणान् मालावतीर्णा हरतु कलिकलाशालिनो बालिनोऽस्य ॥६८॥

---

मवतरणम् अगमत् रणभूमौ आजगामेत्यर्थः। दीनहृदयेनेत्यत्र पापहृदयेनेति, गिरिगह्वरादित्यत्र गिरिचत्वरेष्विति पाठान्तरम्। वसन्ततिलकं वृत्तम् ॥ ६७ ॥

(क) अद्यावश्यमित्यत्र अवश्यं भगवतः श्रीपुरुषोत्तमस्य रामचन्द्रस्य प्रसादादस्य चिरविरहिणः प्राणवल्लभस्य सुग्रीवस्य वक्षःपीठे लुठिष्यामीति मन्यमाना गिरिवरशिखरमारुह्य राम-पौरन्दरि-समरम् आकाङ्क्षन्ती चिन्तयामास इति पाठान्तरे राम-पौरन्दरिसमरं रामश्च पुरन्दरस्यापत्यं पुमान् पौरन्दरिः बाली च तयोः समरः तम्।

तारेति। सन्त्यक्तः परित्यक्तः, प्राणवल्लभसुग्रीवशोकादिति भावः, हारो यया सा गिरिशिखरवरे किष्किन्ध्याद्रिशृङ्गश्रेष्ठे व्यस्तः विपर्य्यस्तः, औत्सुक्यातिशयादिति भावः, धम्मिल्लभारः संयतकेशनिवहः यस्याः तथोक्ता शोकाब्धेः विरहदुःखसागरस्य प्राप्तपारा पारंगता, अचिरभाविप्राणनाथसमागमलाभादिति भावः, अर्पितः निहितः मदनेन शरो यस्यां तथाभूता काम-शरविद्धेत्यर्थः, वीरस्य सुग्रीवस्य दाराः पत्नी तारा निजरमणे स्वभर्त्तरि सुग्रीवे रता अनुरागिणी सती इति वक्ष्यमाणाम्

लक्ष्मणः । पृथिव्यां चतुरन्तायां नास्ति बालिसमो बली ।
　　　　वचसानेन लोकानां शङ्कितव्यो महेन्द्रजः ॥ ६९ ॥

रामः सहासम्

मा भैषीर्मयि सौमित्रे ! राघवेऽधिज्यधन्वनि ।
सतां देहं परित्यज्य निर्गच्छत्यसतो भयम् ॥ ७० ॥

---

आशिषं पठतीति प्रागुक्तपद्येनान्वयः । का सेत्याह, नानेति ।— अद्य नाना विविधा नाराचधारा अस्त्रविशेषधारा मालया श्रेणीक्रमेण अवतीर्णा पतिता सती आतापिनः सम्यक् सन्तापिनः पापिनः कलिकलाशालिनः विवादांशशोभिनः, सततविरोधिन इति यावत्, अस्य बालिनः प्राणान् हरतु नाशयतु । निजरमणरताताापिन इत्यस्यैकपदत्वे निजरमणे रतं सुरतसम्भोगः तस्य आतापिनः प्रतिबन्धिन इत्यर्थः । गिरिशिखरचरा स्रस्तधम्मिल्लभारा शोकाब्धिप्राप्तपारेति पाठान्तरम् । नानेत्यत्र नारेति पाठे नरस्य रामस्य इयं नारा रामसम्बन्धिनीत्यर्थः । कलिकलाशालिन इत्यत्र किलकिलाशालिन इति पाठे किलकिलेति वानरजातीयशब्दविशेषः, तच्छालिनः तद्वत इत्यर्थः । स्रग्धरा वृत्तम् ॥ ६८ ॥

पृथिव्यामिति । चत्वारः समुद्रा इति भावः, अन्ता यस्याः तस्यां पृथिव्यां बालिना समः तुल्यः बली बलवान् नास्ति, अनेन लोकानां वचसा वाक्येन महेन्द्रजः इन्द्रतनयः बालीत्यर्थः, शङ्कितव्यः भयहेतुतया गण्य इत्यर्थः । अनुष्टुप् वृत्तम् ॥ ६९ ॥

मेति । हे सौमित्रे ! लक्ष्मण ! राघवे रघुवंशजे मयि अधिज्यधन्वनि आरोपितकार्मुके सति मा भैषीः भयं मा कुरु,

वाली । गृहाण बाणं रघुराजपुत्त्र !
सुत्रामसूनुं समरेऽवतीर्णम् ।
जानीहि मां दुन्दुभिघातवज्रं
नेष्यामि वां कालगृहातिथित्वम् ॥ ७१ ॥

इत्युभौ युद्धमवतरतः । लक्ष्मणः सुग्रीवं प्रति ।

आर्य्यबाणेन भिन्नोऽयं वाली लुठति भूतले ।
तद्विपक्षस्य शिरसि पुष्पवृष्टिः सुरैः कृता ॥ ७२ ॥

वाली । सुग्रीवोऽपि क्षमः कर्त्तुं यत् कार्य्यं तव राघव ! ।
तदहं न क्षमः कस्मादपराधं विना हतः ? ॥ ७३ ॥

---

भयं सतां साधूनां देहं परित्यज्य असतः दुर्जनान् निर्गच्छति नितरां प्राप्नोतीत्यर्थः । अनुष्टुप् वृत्तम् ॥ ७० ॥

गृहाणेति । हे रघुराजपुत्त्र ! बाणं शरं गृहाण, मां दुन्दुभेः दैत्यविशेषस्य घाते संहारे वज्रं कुलिशं दुन्दुभिदैत्यघातिनमित्यर्थः, तव हनने किं वक्तव्यमिति भावः, समरे युद्धे अवतीर्णं सुत्रामसूनुम् इन्द्रपुत्त्रं जानीहि, वां युवां, त्वां लक्ष्मणञ्चेत्यर्थः, कालगृहस्य यमालयस्य अतिथित्वं नेष्यामि हनिष्यामीत्यर्थः । उपजाति वृत्तम् ॥ ७१ ॥

आर्य्येति । आर्य्यस्य रामस्य बाणेन भिन्नः विद्धः अयं वाली भूतले लुठति विचेष्टते, सुरैः देवैः तस्य बालिनः विपक्षः शत्रुः, राम इत्यर्थः, तस्य शिरसि पुष्पवृष्टिः कृता । अनुष्टुप् वृत्तम् ॥ ७२ ॥

सुग्रीव इति । हे राघव ! तव यत् कार्य्यं सीतोद्धाररूपं सुग्रीवोऽपि कर्त्तुं क्षमः शक्तः, तत् कार्य्यं कर्त्तुम् अहं न क्षमः ? काकुः, सुग्रीवादपि प्रबलोऽहमवश्यं तत् कार्य्यं कर्त्तुं शक्त

मुक्ताफलाय करिणं हरिणं पलाय
सिंहं निहन्ति भुजविक्रमसूचनाय।
का नीतिरीतिरियती रघुवंशवीर!
शाखामृगे जरति यस्तव बाणमोक्षः? ॥ ७४ ॥

रामः सकरुणम्।

शस्त्रौघप्रसरेण रावणिरसौ यद्दुर्यशोभागिनं
चक्रे गौतमशापयन्त्रितभुजस्थेमानमाखण्डलम्।
कच्चागर्त्तकुलीरतां गमयता वीर! त्वया रावणं
तत् संमृष्टमहो! विशल्यकरणी जागर्त्ति सत्पुत्रता ॥ ७५ ॥

---

इत्यर्थः, अतः कस्मात् हेतोः अपराधं दोषं विना हतः? अह-मिति शेषः, विना दोषेण मां कथं हतवानसीत्यर्थः। अनुष्टुप् वृत्तम् ॥ ७३ ॥

मुक्ताफलायेति। मुक्ताफलाय मौक्तिकलाभार्थमित्यर्थः, करिणं हस्तिनं, पलाय मांसाय मांसलाभार्थमित्यर्थः, हरिणं मृगं, भुजविक्रमसूचनाय बाहुबलप्रकटनाय सिंहं निहन्ति हिनस्ति, जन इति शेषः, हे रघुवंशवीर! जरति जीर्णे स्थविरे इत्यर्थः, शाखामृगे वानरे तव यः बाणमोक्षः शर-निक्षेपः इयती एवंरूपा नीतिरीतिः नीतिसम्मतः आचारः का? कया नीत्या, प्रचलितयेति यावत्। शाखामृगवधे न किमपि फलमिति भावः। वसन्ततिलकं वृत्तम् ॥ ७४ ॥

शस्त्रौघेति। असौ रावणस्य अपत्यं पुमान् रावणिः इन्द्रजित् शस्त्रौघप्रसरेण शस्त्रसमूहवर्षणेन गौतमस्य अहल्या-पतेरिति भावः, शापेन अहल्याधर्षणजनितेन "त्वं पौरुष-हीनो भव" इत्येवंरूपेणेति भावः, यन्त्रितः निरुद्धः भुजयोः

अतिक्रान्तस्य ते धर्मं कामवृत्तस्य वानर ! ।
भ्रातृभार्य्याभिमर्षेऽस्मिन् दण्डोऽयं प्रतिपादितः ॥ ७६ ॥
न च ते मर्षये पापं क्षत्रियोऽहं कुलोद्गतः ।
तदलं परितापेन स्वर्गं गच्छ कपीश्वर ! ॥ ७७ ॥

बाली । सोऽहं श्रीमतो रघुवंशावतंसस्य भवतः प्रसादात्

---

वाह्वोः क्षेमा स्थैर्य्यं, क्षिप्रकारित्वमिति भावः यस्य तादृशम् आखण्डलं सुरपतिं दुर्यशोभागिनं पराभूतमिति भावः, चक्रे कृतवान् इति यत्, हे वीर ! त्वया रावणं कृत्वा भुजामूलमिव गर्त्तः तस्य कुलीरतां कर्कटतां गमयता सता तत् संमृष्टं परिशोधितम्, अहो आश्चर्य्यं सत्पुत्रता उत्कृष्टपुत्रशालिता विशल्यकरणी शल्योद्धारकारिणी, मनोदुःखनिराकरणीति यावत्, जागर्त्ति शोभते इति यावत् । त्वया सत्पुत्रेण भगवान् देवेन्द्रः रावणिकृतपराभवदुःखं मुमोचेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ७५ ॥

किन्तु—अतिक्रान्तस्येति । हे वानर ! धर्म्मम् अतिक्रान्तस्य उल्लङ्घितवतः कामवृत्तस्य स्वेच्छाचारिणः ते तव अस्मिन् भ्रातुः सुग्रीवस्य भार्य्याभिमर्षे भार्य्याहरणे अयं दण्डः प्राणान्तरूप इत्यर्थः, प्रतिपादितः कृतः, मयेति शेषः ॥ ७६ ॥

न चेति । यतः अहं कुलोद्गतः महाकुलप्रसूतः क्षत्रियः, अतः ते तव पापं भ्रातृभार्य्याहरणरूपमिति भावः, न च मर्षये नैव क्षमे, महाकुलप्रसूतानां क्षत्रियाणां दुष्टनिग्रहशिष्टपालनरूपधर्म्मवत्त्वादिति भावः, तत् तस्मात्, हे कपीश्वर ! परितापेन सन्तापेन अलं सन्तापं मा कुर्वित्यर्थः, स्वर्गं गच्छ । अनुष्टुप् वृत्तम् ॥ ७७ ॥

महावीरोचितां गतिं गच्छामि। अयं वत्सोऽङ्गदस्तव दास एवेति स्वर्गारोहणं नाटयति।

सद्यो निर्भिद्य बाणैः समरभुवि तदा बालिनं रामचन्द्रः
किष्किन्ध्याराज्यमाजानिकमथ स ददौ तत्र सुग्रीवहस्ते ।
वर्षाकालं घनालीघनरवदलितोद्दामदिक्चक्रवालं
चेतुं वासं वितेने शिखरवनतटे माल्यवत्पर्वतस्य ॥ ७८ ॥
राज्ये सुग्रीवमादौ सदयितमभिषिच्याङ्गदं यौवराज्ये
रामः सैनाधिपत्ये सपवनतनयान् वानरेन्द्रान् प्रतस्थे ।
लङ्कां सन्त्यज्य शङ्कां तदनु कपिभटैर्माल्यवत्युत्तमाद्रौ
वर्षाकालं गमयितुमचिरात् मन्त्रिभिः सम्मतोऽभूत् ॥ ७९ ॥

---

सद्य इति। रामचन्द्रः तदा समरभुवि रणभूमौ सद्यः बाणैः बालिनं निर्भिद्य निपात्य अथानन्तरं तत्र तस्मिन् सुग्रीवहस्ते आजानिकं प्रतिश्रुतं, यद्वा आ इति सहार्थमव्ययम्, आ सह जाययेति आजानिकं, जायाया जानिरादेशः, भार्य्या-सहितमित्यर्थः, किष्किन्ध्याराज्यं ददौ। घनालीनां मेघसङ्घानां घनेन गभीरेण रवेण दलितं स्तब्धीकृतम् उद्दामम् उत्कटं दिशां चक्रवालं मण्डलं यस्मिन् तं वर्षाकालं चेतुम् अति-वाहयितुं माल्यवत्पर्वतस्य शिखरे यत् वनं तस्य तटे प्रान्तदेशे वासम् अवस्थितिं वितेने कृतवान्। स्रग्धरा वृत्तम् ॥ ७८ ॥

राज्ये इति। रामः आदौ अग्रतः राजेत्र किष्किन्ध्याया-मित्यर्थः, दयिता कान्ता तया सह वर्त्तमानं सदयितं सभार्य्य-मित्यर्थः, सुग्रीवं, यौवराज्ये अङ्गदं, सैनाधिपत्ये सपवनतनयान् हनूमत्प्रभृतीन् वानरेन्द्रान् कपिप्रवरान् अभिषिच्य तदनु तदनन्तरं कपिभटैः वानरवीरैः सह शङ्कां भयं सन्त्यज्य

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीर-श्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
रामाद्वालिवधाभिधोऽत्र गतवानङ्कश्चतुर्थो महान् ॥ ८० ॥

## पञ्चमोऽङ्कः ।

रामाद्वलीयान्न परोऽस्ति कश्चिद्दारापहारान्न परोऽपमानः ।
तथापि रामः शरदं समीक्ष्य प्रतीक्षते सम्प्रति कालमेतम् ॥ १ ॥

---

निर्भयं यथा तथेत्यर्थः, लङ्कां प्रतस्थे प्रचचाल । किन्तु अचिरात् साम्प्रतं माल्यवति तदाख्ये उत्तमाद्रौ उत्कृष्टगिरौ वर्षाकालं गमयितुं नेतुं मन्त्रिभिः जाम्बुवत्प्रमुखैरिति शेषः, सम्मतः अभूत् । मन्त्रिणां परामर्शेन माल्यवत्पर्वते वर्षाकालमनयदिति भावः । स्रग्धरा वृत्तम् ॥ ७९ ॥

एष इति । सुगमम् ॥ ८० ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
महानाटकचतुर्थाङ्कव्याख्या समाप्ता ॥ ४ ॥

---

रामादिति । कश्चिदपि रामात् परः श्रेष्ठः बलीयान् प्रबलः न अस्ति न विद्यते, दारापहारात् भार्य्यापहरणात् परः श्रेष्ठः, महानित्यर्थः, अपमानः न, अस्तीत्यन्वयः, तथापि रामः शरदं समीक्ष्य सम्यग् दृष्ट्वा यात्राकालं विचार्य्येति यावत्, सम्प्रति एतम् उपस्थितं कालं वर्षाकालं प्रतीक्षते गमयतीत्यर्थः, समीक्ष्य प्रतीक्षते सम्प्रति कालमेतमित्यत्र प्रतीक्ष्य बद्धाम्बुधौ सेतुमरिं जगामेति पाठान्तरम् । उपजाति वृत्तम् ॥ १ ॥

अत्र माल्यवति पर्वते वर्षासु विरही रामः ।

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं,
मेघैरन्तरितं प्रिये ! तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ २ ॥

लक्ष्मणः । शिथिलशिथिलं न्यस्य स्वैरं धनुःशिखरे शिरो
नयनसलिलैः कुर्वन् मौर्वीलतामपरामिव ।
अहह ! विकलः श्रुत्वा श्रुत्वा घनस्तनितं मुहुः
किमपि किमपि ध्यायन्नार्य्यो न याति न तिष्ठति ॥३॥

---

यदिति । हे प्रिये ! यत् इन्दीवरं नीलोत्पलं तव नेत्रेण समाना कान्तिर्यस्य तथाभूतं तत् सलिले मग्नं तव मुखच्छायानुकारी त्वन्मुखसन्निभ इत्यर्थः, शशी चन्द्रः मेघैः अन्तरितः आवृतः । ये राजहंसाः तव गमनम् अनुकरोतीति तथाभूता गतिर्येषां तादृशाः, तेऽपि गताः मानसं सर इति भावः, अतः दैवेन विधिना तव सादृश्येन विनोदमात्रमपि प्रीतिलाभोऽपि न क्षम्यते न सह्यते । सादृश्यदर्शनं हि विरहिणां विनोदस्तदपि मम नास्तीति भावः, दैवं न हि क्षाम्यतीति पाठान्तरम् । अत्र पूर्ववाक्यत्रयस्य चतुर्थवाक्यहेतुत्वेन निर्देशात् काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥२॥

शिथिलेति । आर्य्यः रामः धनुषः कार्मुकस्य शिखरे अग्रे शिरः शिथिलशिथिलं मन्दं मन्दमित्यर्थः, स्वैरं स्वेच्छया न्यस्य निधाय नयनसलिलैः वाष्पधाराभिः अपरामिव अन्यामिव मौर्वीलतां ज्यावल्लरीं कुर्वन् रचयन् अहह खेदे, विकलः

एते ते दुरतिक्रमक्रममिलद्घर्मोर्मिमर्मच्छिदः
कादम्बेन रजोभरेण ककुभो रुन्धन्ति झञ्झानिलाः ।
घोरास्ताड़नरूढ़नीरदघटासंघट्टनीलीभवद्-
व्योमस्फोटकटाहजातकपयो-वेणीकणग्राहिणः ॥ ४ ॥

---

नितराम् आकुलः सन् मुहुः पुनः पुनः घनस्तनितं मेघगर्जितं श्रुत्वा श्रुत्वा अतिशयेन आकर्ण्य किमपि किमपि ध्यायन् चिन्तयन् न याति न गच्छति न तिष्ठति, गन्तुं स्थातुं द्वयमपि न शक्नोतीति भावः । हरिणी वृत्तं—"नसमरसला गः षड्वेदैर्हयै-र्हरिणी मता" इति लक्षणात् ॥ ३ ॥

एते इति । दुरतिक्रमेण दुःशमनीयेन क्रमेन श्रमेण मिलन् सङ्गच्छन् यः घर्म्मः ग्रीष्मः तस्य ऊर्म्मिस्तरङ्गः तस्या मर्म्म छिन्दन्तीति तथोक्ताः ग्रीष्मातिशयसन्तापहारिण इति यावत्, घोरा भीषणाः ताड़नेन पवनस्याघातेनेति भावः, रूढ़ाः प्रखरचलिता या नीरदघटाः मेघवृन्दानि तासां सङ्घट्टेन सङ्घर्षेण अनीलं नीलं भवदिति नीलीभवत् यत् व्योम आकाशं तदेव स्फुटतीति स्फोटः स चासौ कटाहश्चेति तथोक्तः सच्छिद्र इत्यर्थः, कटाहः तस्मात् जातान्येव जातकानि निर्गलिता-नीत्यर्थः, यानि पयांसि जलानि तेषां वेण्याः प्रवाहस्य कणान् बिन्दून् गृह्णन्तीति तथोक्ताः एते ते झञ्झानिलाः सगर्जित-वात्या इत्यर्थः, कादम्बेन कदम्बपुष्पसम्बन्धिना रजोभरेण धूलि-निचयेन ककुभः दिशः रुन्धन्ति आवृण्वन्ति । दुरतिक्रमा इति पाठे दुःसहा इत्यर्थः । घोरास्ताड़नेत्यत्र गाढ़ाम्रेड़नेति पाठे गाढ़ेन अत्यन्तेन आम्रेड़नेन सञ्चालनेनेत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४ ॥

मन्दं मरुद्वहति, गर्जति वारिवाहो,
विद्युल्लता स्फुरति, कूजति नीलकण्ठः ।
एतावति व्यतिकरे रघुनन्दनस्य
मूर्च्छैव केवलमभूदवलम्बनाय ॥ ५ ॥

रामः । पूर्वं पुरारिधनुषो निनदेन रुष्टं
रामं मुनिं रणमुखे परितो विलोक्य ।
शङ्काशशाङ्कपरितप्तमुखारविन्दां
तामेव मैथिलसुतां सततं स्मरामि ॥ ६ ॥

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः,
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।

---

मन्दमिति । मरुत् वायुः मन्दं वहति, वारिवाहः मेघः गर्जति, विद्युल्लता तड़िद्रूपा वल्ली स्फुरति राजते, नीलकण्ठो मयूरः कूजति नदति, "मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्ग-भुक्" इत्यमरः, एतावति उक्तप्रकारे व्यतिकरे अवस्थायां मूर्च्छा एव रघुनन्दनस्य रामस्य केवलम् अवलम्बनाय जीवन-रक्षणाय अभूत्, सर्वेषामिवैतेषां समुद्दीपकत्वात् मोह एव रामस्य विरहव्यथां व्यनाशयदिति भावः । वसन्ततिलकं वृत्तम् ॥ ५ ॥

पूर्वमिति । पूर्वं प्राक् पुरारिः हरः तस्य धनुः तस्य निनादेन भञ्जनध्वानेन परितः सर्वतः रुष्टं कुपितं मुनिं रामं भार्गवं रणमुखे संग्रामशिरसि विलोक्य दृष्ट्वा शङ्का त्रास एव शशाङ्कश्चन्द्रः तेन परितप्तं म्लानं मुखमेव अरविन्दं पद्मं यस्याः तथाभूतां तामेव मैथिलसुतां सीतां सततं स्मरामि । वसन्त-तिलकं वृत्तम् ॥ ६ ॥

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि, सर्वं सहे,
वैदेही तु कथं भविष्यति, हहा हा देवि! धीरा भव ॥ ७ ॥
नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे,
पाणौ पद्मधिया, मधूककुसुमभ्रान्त्या तथा गण्डयोः।
लीयन्ते कवरीषु बान्धवजनव्यामोहजातस्पृहा,
दुर्वारा मधुपाः कियन्ति तरुणि! स्थानानि रक्षिष्यसि ॥ ८ ॥

---

स्निग्धेति। घना मेघाः स्निग्धाभिः श्यामलाभिः कान्तिभिः लिप्तम् आच्छादितं वियत् आकाशं यैः तथाभूताः, "वियत् विष्णुपदं वापि पुंस्याकाशविहायसी" इत्यमरः, तथा वेल्लन्त्यः सञ्चरन्त्यः वलाकाः वकपङ्क्तयः येषु तथाविधाः, वाताः वायवः शीकरिणः, "शीकरोऽम्बुकणाः स्मृताः" इत्यमरः, तद्वन्तः, पयोदः मेघः सुहृत् येषां ते पयोदसुहृदः मयूरा इत्यर्थः, तेषाम् आनन्देन केकाः शब्दविशेषाः यासु ताः कलाः क्रीड़नानि कामं सम्यक् सन्तु भवन्तु, दृढं यथा तथा कठोरं कठिनं हृदयं यस्य सः रामः अस्मि भवामि, अतः सर्वमेतदिति शेषः, सहे सोढ़ुं शक्नोमीत्यर्थः, तु किन्तु वैदेही सीता कथं भविष्यति अतीव मृदुत्वात् नैव सोढ़ुं शक्ष्यतीत्यर्थः, हहा इति खेदे, हा देवि! धीरा कथञ्चित् सहनशीलेत्यर्थः, भव। शार्दूलविक्रीड़ितं वृत्तम् ॥ ७ ॥

नीलेति। हे तरुणि! यौवनभृतशरीरे! दुर्वारा वारयितुमशक्या मधुपाः भ्रमराः नीलेन्दीवरशङ्कया एते नीलोत्पले इति भ्रमेणेत्यर्थः, नयनयोः, तवेति सर्वत्र योज्यं, बन्धूकबुद्ध्या बन्धूककुसुममेतदिति धिया अधरे, पद्मधिया कमलमिदमिति बोधेन पाणौ करे मधककुसुमभ्रान्त्या मधूक-

कार्य्येषु मन्त्री, करणेषु दासी, धर्मेषु पत्नी, सहने धरित्री।
स्नेहेषु माता, शयनेषु वेश्या, रङ्गे सखी लक्ष्मण! सा प्रिया मे॥९॥

जीवातुः कुसुमायुधस्य भुवने, सीमन्तिनीनां शिरो-
रत्नं, मत्कुलदेवताप्रतिनिधिर्नेत्रोत्सवः कामिनाम्।
माद्यद्दन्तिनितान्तमन्दगमना सा मे प्रिया जानकी
सौमित्रे! शतपत्रशत्रुवदना कुत्राधुना सीदति?॥ १०॥

---

कुसुमे एते इति भ्रमेण गण्डयोः कपोलयोः तथा बान्धवजन-व्यामोहजातस्पृहा बान्धवजनाः स्वजातीया इत्यर्थः, एते इति व्यामोहेन विमुग्धतया जाता या स्पृहा तत्सङ्गेच्छा तया हेतुना कबरीषु केशपाशेषु लीयन्ते लयं गच्छन्ति, अन्तः प्रविशन्तीत्यर्थः, अतः कियन्ति स्थानानि रक्षिष्यसि? एभ्य इति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ८॥

कार्य्येष्विति। हे लक्ष्मण! सा मे मम प्रिया कान्ता कार्य्येषु कर्त्तव्यार्थेषु मन्त्री सचिवः, करणेषु सांसारिकव्यापारानुष्ठानेषु दासी किङ्करी, धर्मेषु धर्मकृत्येषु पत्नी, "सस्त्रीको धर्ममाचरेत्" इति सपत्नीकत्वश्रुतेरिति भावः, सहने क्षमायां सहिष्णुतायां धरित्री पृथिवी, पृथिवी यथा कस्यापि अपराधं न गृह्णाति तथा सा ममेति भावः, स्नेहेषु माता जननी, माता यथा पुत्राय स्निह्यति तथा सा मह्यमिति भावः, शयनेषु शय्यासु वेश्या वाराङ्गना, यथा वारनारी कामिनं नानारङ्गेण प्रीणयति तथा सा मामिति भावः, रङ्गे परिहासादि नर्म्मव्यापारे सखी सहचरी। इन्द्रवज्रा वृत्तम्॥ ९॥

जीवातुरिति। हे सौमित्रे! भुवने जगति कुसुमायुधस्य कामस्य जीवातुर्जीवनौषधं, "जीवातुर्जीवनौषधम्" इत्यमरः,

ईदृग्भानुकुले न कोऽपि भविता, यस्याङ्गना कामुकै-
राक्रष्टेति परस्परं निगदतां श्रुत्वा मुनीनां मुखात् ।
सौमित्रे ! कुलपांशुलस्य चरितं श्रीरामचन्द्रस्य मे
शक्रार्द्धासनसंस्थितेन गुरुणा दुःखं परं धीयते ॥ ११ ॥
रामो नाम नृपात्मजस्तदबला सीता, स चासौ स्थितिं
चक्रे पञ्चवटीवने विहरतस्तान्चाहरद्रावणः ।
इत्येवं जनसंकथां सुविपुलां विस्फारितां शृण्वतः
सौमित्रेः क्व धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु वः ॥ १२ ॥

---

सीमन्तिनीनां रमणीनां शिरोरत्नं चूड़ामणिः मम कुलदेवतायाः प्रतिनिधिः, कामिनां नेत्रोत्सवः नेत्रानन्ददायिनीत्यर्थः, माद्यतः मत्तस्य दन्तिन इव नितान्तं मन्दं गमनं यस्याः तथोक्ता शतपत्रं कमलं तस्य शत्रुः चन्द्रः तद्वत् वदनं यस्याः तथाभूता मे मम प्रिया सा जानकी अधुना इदानीं कुत्र सीदति क्लेशेन तिष्ठतीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १० ॥

ईदृगिति । हे सौमित्रे ! भानोः सूर्य्यस्य कुले ईदृक् एतादृशः कोऽपि न भविता न जनिष्यति, न भूत इति किमु वक्तव्यमिति भावः, यस्य अङ्गना कान्ता कामुकैः आक्रष्टा अपहृता इति परस्परम् अन्योन्यं निगदतां मुनीनां देवर्षीणा-मिति यावत्, मुखात् कुलपांशुलस्य कुलाङ्गारस्य श्रीराम-चन्द्रस्य मे मम चरितं श्रुत्वा शक्रस्य इन्द्रस्य अर्द्धासनसंस्थितेन गुरुणा पित्रा परम् अत्यन्तं दुःखं यथा तथा धीयते क्षीयते इत्यर्थः, क्षीयते इत्यपि पाठः । शार्दूलविक्रीड़ितं वृत्तम् ॥११॥

राम इति । रामो नाम नृपात्मजः राजपुत्रः, तस्य अबला पत्नी सीता, स चासौ रामः पञ्चवटीवने स्थितिं चक्रे कृतवान् ।

अतीतायां प्रावृषि नागच्छति सुग्रीवे रामचरितम् ।

ततो रामो महातेजा लक्ष्मणं समुपाह्वयत् ।
सुग्रीवं प्रेषयामास स्कन्धावारं चकार सः ॥ १३ ॥

श्रीमद्रामो वनस्थः कपिवरनगरे लक्ष्मणः प्रेषितोऽहं
किष्किन्ध्याद्वारमागां रघुपतिवचनाल्लक्ष्मणस्तं जगाद ।
श्रुत्वा रामेति वाक्यं हसति कपिवरो रामनामा किमेतत्
कस्मात् किंवा प्रमेयं सचकितमनसा विस्मितोऽसौ प्रमत्तः ॥१४॥

---

रावणः विहरतः मृगयां चरतः तस्य ताम् अबलाम् अहरच्च जहार च इत्येवं सुविपुलां समहतीं विस्फारितां विस्तृतां जनानां सङ्कथां संलापं शृण्वतः आकर्णयतः सौमित्रेः लक्ष्मणस्य क्व धनुः धनुः धनुरिति व्यग्राः सत्वरा गिरः वाचः वः युष्मान् पान्तु रक्षन्तु । नटोक्तिरियम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ १२ ॥

तत इति । ततः वर्षापगमानन्तरं महातेजा रामः लक्ष्मणं समुपाह्वयत् समाजुहाव, सुग्रीवं प्रतीति शेषः, प्रेषयामास चेत्यध्याहार्य्यं, स लक्ष्मणः स्कन्धावारं युद्धोद्योगार्थं व्यापारमित्यर्थः, चकार कृतवान् । अनुष्टुप् वृत्तम् ॥ १३ ॥

श्रीमदिति । श्रीमान् रामः वनस्थः अरण्ये स्थितः, अहं लक्ष्मणः कपिवरस्य सुग्रीवस्य नगरे प्रेषितः प्रेरितः, रामेणेति शेषः । रघुपतेः रामस्य वचनात् किष्किन्ध्याद्वारम् आगाम् आगतवानस्मि इति लक्ष्मणः तं सुग्रीवं जगाद उक्तवान् । असौ प्रमत्तः राज्यैश्वर्य्यलाभादिति भावः, कपिवरः सुग्रीवः रामेति वाक्यं श्रुत्वा विस्मितः विस्मयान्वितः सन् सचकितमनसा चमत्कृतचित्तेन रामनामा, कश्चिदिति शेषः, एतत् किम् ? कस्मात् किमर्थम् ? किं वा प्रमेयं कार्य्यम् ? इति, उक्तेति

विश्वामित्रहिताय ताड़कवधं यज्ञस्य सम्पूर्त्तये
सीतार्थं हरचापभङ्गमकरोच्छिष्यो जितः शूलिनः ।
मारीचः खलु लीलयाऽपि निहतो बाली हतः साम्प्रतं,
सोऽयं सम्प्रति राघवः कपिपते! पञ्चाननो गर्जति ॥ १५ ॥

स्वस्ति श्रीरामपादाः समाज्ञापयन्ति ।
न मे सङ्कुचितो बाणो येन बाली हतो मया ।
समये तिष्ठ सुग्रीव ! मा बालिपथमन्वगाः" ॥ १६ ॥

---

शेषः, हसति जहासेत्यर्थः, भूते वर्त्तमानप्रयोगश्चिन्त्यः । स्रग्धरा वृत्तम् ॥ १४ ॥

विश्वामित्रेति । विश्वामित्रस्य हिताय यज्ञस्य सम्पूर्त्तये ताड़कवधं यः, अकरोत् इति अध्याहार्य्यम् । सीतार्थे जानकीलाभार्थं हरस्य चापभङ्गं धनुर्भङ्गम् अकरोत् कृतवान्, य इत्यध्याहार्य्यम् । येन च अध्याहृतेनेति भावः, शूलिनः शङ्करस्य शिष्यः भार्गवः जितः पराभूतः, लीलया अवहेलया मारीचोऽपि निहतः खलु नाशितः एव, साम्प्रतं बाली हतश्च, हे कपिपते ! सोऽयं राघवः पञ्चाननः रघुसिंहः, व्यस्तरूपकम् ; सम्प्रति गर्जति नदति, त्वामाह्वयतीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १५ ॥

नेति । हे सुग्रीव ! मया येन बाली हतः, मे मम स बाणः न सङ्कुचितः न विनष्ट इत्यर्थः, अतः समये प्रतिज्ञायां, "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः, बालिनः पन्थाः बालिपथः तं बालिगतमध्वानमित्यर्थः, मा अन्वगाः न गच्छ, बालिवत् निधनं न लभस्वेत्यर्थः, अन्वगा इति मा योगेऽपि अमागमश्चिन्त्यः । अनुष्टुप् वृत्तम् ॥ १६ ॥

समागत्य सुग्रीवः ।

याऽसौ प्रकृतिरस्माकं वानराणां नरेश्वर ! ।
तामहं त्यक्तुमिच्छामि न सा मां त्यक्तुमिच्छति ॥ १७ ॥

पुनः सानुनयम् ।

दग्धं दग्धं त्यजति न पुनः काञ्चनं कान्तमूर्त्तिं ( वर्णं )
छिन्नं छिन्नं त्यजति न पुनः स्वादुतामिक्षुदण्डम् ।
घृष्टं घृष्टं त्यजति न पुनश्चन्दनं चारुगन्धं
प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम् ॥ १८ ॥

श्रीरामः सुग्रीवं दृष्ट्वा ।

तातेन दत्तं भरताय राज्यं सीता हृता सम्प्रति रावणेन ।

---

येति । हे नरेश्वर ! नराधिप ! वानराणां अस्माकं या असौ प्रकृतिः स्वभावः, चापल्यमिति भावः, अस्तीति शेषः, अहं तां प्रकृतिं त्यक्तुम् इच्छामि, किन्तु सा प्रकृतिः मां त्यक्तुं न इच्छति । अनुष्टुप् वृत्तम् ॥ १७ ॥

दग्धमिति । काञ्चनं स्वर्णं दग्धं दग्धं पुनः पुनरतिशयेन च दग्धमित्यर्थः, पुनरपोत्यर्थः, कान्तमूर्त्तिं मनोहररूपं, मूर्त्ति-मित्यत्र वर्णमिति पाठान्तरं, न त्यजति, इक्षुदण्डं छिन्नं छिन्नं पुनः पुनश्छिन्नमपोत्यर्थः, स्वादुतां सुस्वादत्वं न त्यजति, चन्दनं चन्दनकाष्ठमित्यर्थः,घृष्टं घृष्टं पुनः पुनः अतिशयेन घृष्टमपोत्यर्थः, चारुगन्धं मनोहरसौरभं न त्यजति, एवञ्च उत्तमानां सत्पुरुषाणां प्राणान्तेऽपि प्राणापगमेऽपि प्रकृतेः स्वभावस्य विकृतिः वैषम्यं न जायते न भवति, सत्पुरुषो भवान् वानरं मां क्षमतामिति भावः । मन्दाक्रान्ता वृत्तम् ॥ १८ ॥

तातेनेति । सः रामः तदा सुग्रीवदर्शनकाले इत्यर्थः,

विचिन्त्य रामो मनसाकुलेन विहाय चापं स तदा रुरोद ॥ १८ ॥

सुग्रीवः। एते सप्त पयोधयो दश दिशः सप्तैव गोत्राचलाः
पृथ्व्यादीनि चतुर्दशैव भुवनान्येकं नभोमण्डलम्।
एतावत् परिमाणमल्पविषये ब्रह्माण्डभाण्डोदरे
क्वासौ यास्यति जानकी ? रघुपते! किं कार्मुकं त्यज्यते ?
॥ २० ॥

रामः। व्यसने महति प्राप्ते स्थिरैः स्थातुं न युज्यते।
लङ्कां निःशङ्कमालोक्य क इहागन्तुमर्हति ? ॥ २१ ॥

---

तातेन पित्रा भरताय राज्यं दत्तं, सम्प्रति रावणेन सीता हृता इति आकुलेन व्यथितेन मनसा विचिन्त्य चापं धनुः विहाय विमुच्य रुरोद रुदितवान्। उपजाति वृत्तम् ॥ १८ ॥

एते इति। हे रघुपते! एते सप्त पयोधयः समुद्राः न तु ततोऽधिका इति भावः, दिशः दश न त्वधिकाः, गोत्राचलाः कुलपर्वताः सप्तैव न तु ततोऽधिका इति भावः, पृथ्व्यादीनि भुवनानि जगन्ति भूर्भुवः-स्वर्जन-महस्तपः-सत्यानि सप्त अतलानु-तलवितलसुतलतलातलपातालरसातलानि सप्त इत्येवं मिलित्वा चतुर्दशैव न तु एतदधिकानीति भावः, नभोमण्डलं आकाश-मण्डलम् एकमेव, न तु द्वितीयमस्तीति भावः, एतावत् अत्यल्पमेवेत्यर्थः, परिमाणं परिच्छेदः जगतामिति भावः, अतः अल्पः विषयः स्थानं यस्य तादृशे ब्रह्माण्डमेव भाण्डं तस्य उदरे अभ्यन्तरे असौ जानकी क्व कुत्र यास्यति ? रावणेन नीयमानेति भावः, अवश्यमेव अस्माभिः सा शत्रुहस्तात् उद्धा-र्यते इति भावः, अतः किं कथं कार्मुकं धनुः त्यज्यते ? नैव त्यक्तुमुचितमित्यर्थः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २० ॥

व्यसन इति। महति व्यसने विपदि, "व्यसनं विपदि"

जाम्ब। आञ्जनेयः समाज्ञेयो योऽसौ कपिकुलोद्भवः।
लङ्काप्रस्थापनायोग्यः,प्रोक्तं जाम्बवता सता (तदा) ॥२२॥

हनूमान् रामं प्रणम्य।

किं प्राकारविशालतोरणवतीं लङ्कामिहैवानये ?
किं वा सैन्यसमुद्धृ(न्न)तञ्च सकलं तत्रैव सम्पादये ?।
हेलोत्तोलितपर्वतोच्चशिखरैर्बध्नामि वा तोयधिं ?
देवाज्ञापय किं करोमि ? सकलं दोर्दण्डसाध्यं मम ॥२३॥

---

इत्यमरः, प्राप्ते उपस्थिते सति स्थिरैः निश्चिन्तैरित्यर्थः, स्थातुं न युज्यते नोचितमित्यर्थः। निःशङ्कं नास्ति शङ्का यस्मिन् तत् यथा तथा लङ्काम् आलोक्य दृष्ट्वा कः इह अस्मत्सकाशे इत्यर्थः, आगन्तुं प्रत्यागन्तुमित्यर्थः, अर्हति शक्नोतीत्यर्थः। अनुष्टुप् वृत्तम् ॥ २१ ॥

आञ्जनेय इति। योऽसौ कपिकुलेषु उद्भवः उत्पत्तिर्यस्य स आञ्जनेयः अञ्जनासुतः हनूमान् लङ्कायां प्रस्थापना प्रेरणा तस्या योग्यः समाज्ञेयः समादेश्यः इति सता सुबुद्धिना जाम्बवता प्रोक्तं कथितम्। सतेत्यत्र तदेति पाठान्तरम्। अनुष्टुप् वृत्तम् ॥ २२ ॥

किमिति। हे देव! आज्ञापय आदिश, प्राकारेण प्राचीरेण विशाला महती, दुर्लङ्घ्येति यावत्, तोरणवती प्रशस्तवहिर्द्वारा च तां, "तोरणोऽस्त्री वहिर्द्वारम्" इत्यमरः, लङ्काम् इह अस्मिन्, भवत्सन्निधावित्यर्थः, आनये किम् ? वा पक्षान्तरे तत्रैव लङ्कायामेव सकलं सर्वं स्थानं सैन्यैः वानरचमूभिरित्यर्थः, मया नीतैरिति भावः, समुद्धृतं समुन्मूलितं, समुन्नतमिति पाठे समुन्नतिमदित्यर्थः, सम्पादये करोमि किम् ? वा पक्षान्तरे हेलया

देवाज्ञापय किं करोमि ? सहसा लङ्कामिहैवानये ?
जम्बूद्वीपमितो नये ? किमथवा वारां निधिं शोषये ? ।
हेलोत्पाटितविन्ध्यमन्दरगिरिस्वर्णत्रिनेत्राचल-
क्षेपक्षुब्धविवर्त्तमानसलिलं बध्नामि वारां निधिम् ? ॥ २४ ॥

रामः । दोःस्तम्भास्फालनमभिनीय ब्रुवन्तं हनूमन्तं प्रति ।

एतैर्महत्त्वमुद्घुष्टं मारुते ! तव तेजसः ।
वृथा परिश्रमः कार्य्यः, सीता जीवति वा न वा ? ॥ २५ ॥

---

अवलीलया उत्तोलितैः उत्पाटितैः पर्वतानाम् उच्चैः उन्नतैः शिखरैः शृङ्गैः तोयधिं समुद्रं बध्नामि ? किं करोमि ? सकलं कार्य्यं मम दोर्दण्डेन बाहुदण्डेन साध्यं निष्पाद्यम् । विशालेत्यत्र विहारेति पाठे प्राकारस्य विहारः दीप्तिः तोरणञ्च तद्वती तामित्यर्थः ; यद्वा प्राकारस्य विह्रीयते अस्मिन्निति विहारस्य उपवनञ्चेत्यर्थः, तोरणञ्च तद्वती तामित्यर्थः । हेलोत्तोलितेत्यत्र हेलान्दोलितेति, वा तोयधिमित्यत्र वारां निधिमिति च पाठान्तरम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ २३ ॥

देवेति । हे देव ! आज्ञापय ! किं करोमि सहसा इह अस्मिन्नेव स्थाने लङ्काम् आनये ? इतः अस्मिन् स्थाने जम्बूप्रधानं द्वीपं जम्बूद्वीपं नये आनयामि ? अथवा पक्षान्तरे वारां निधिं सागरं शोषये किम् ? किञ्च वारां निधिं हेलया उत्पाटितानां विन्ध्यः मन्दरगिरिः स्वर्णत्रिनेत्राचलौ सुमेरुकैलासौ च तेषां क्षेपेण क्षुब्धानि आलोड़ितानि विवर्त्तमानानि विपर्य्यस्तानि सलिलानि यस्मिन् तत् यथा तथा बध्नामि ? शार्दूलविक्रीड़ितं वृत्तम् ॥ २४ ॥

एतैरिति । हे मारुते ! हनूमन् ! एतैः प्रागुक्तैः तव

कूर्मो मूलवदालबालवदपां नाथो, लतावद्दिशो,
मेघाः पल्लववत्, प्रसूनफलवन्नक्षत्रसूर्य्येन्दवः।
राजन्! व्योममहीरुहो मम तले श्रुत्वेति गां मारुतेः,
सीतान्वेषणमादिदेश सहसा रामः सहर्षः स्वयम्॥ २६॥

सीतान्वेषणे तद्वृत्तमनभिजानतो हनूमतः परिदेवनम्।

कुत्रायोध्या? क्व रामो? दशरथवचनाद्दण्डकारण्यमागात्
क्वासौ मारीचनामा कनकमयमृगः? कुत्र सीतापहारः?।

---

तेजसः महत्त्वम् उद्घुष्टम् उच्चैः प्रकटितं, किन्तु वृथा निरर्थकः परिश्रमः सागरलङ्घनादिरिति भावः, कार्य्यः करणीयः यतः सीता जीवति वा न वा जीवति? यदि सीता जीवति तदैव ते श्रमः सफलः नो चेत् विफलः इति भावः। अनुष्टुप् वृत्तम्॥२५॥

कूर्म्म इति। हे राजन्! कूर्म्मः कमठावतारः मूलवत् मूलमिव,यस्येति सर्वत्र योज्यम्,अपां नाथः समुद्रः आलवालवत् तलस्थजलाधारगर्त्तविशेष इव, दिशः लतावत् व्रतत्य इव, मेघाः पल्लववत् पल्लवा इव, नक्षत्रसूर्य्येन्दवः नक्षत्राणि सूर्य्यः इन्दुश्चन्द्रश्च प्रसूनफलवत् प्रसूनानि फलानि च तद्वत् एवम्भूतो व्योम एव महीरुहः तरुः मम तले करतले, स्थित इति शेषः, इति मारुतेः हनूमतः गां वाचं श्रुत्वा रामः सहर्षः सन् सहसा सद्य एव स्वयं सीताया अन्वेषणम् आदिदेश आज्ञापयामास। राजन्नित्यत्र स्वामिन्निति, व्योममहीरुहो मम तले इत्यत्र व्योमतरुर्मम क्रमतले इति च पाठान्तरम्। शार्दूलविक्रीड़ितं वृत्तम्॥ २६॥

कुत्रेति। अयोध्या कुत्र? कस्मिन् स्थाने? स्थितेति शेषः, रामः क्व? स च दशरथस्य पितुरिति भावः, वचनात् दण्डका-

सुग्रीवो राममित्रं क्व ? जनकतनयान्वेषणे प्रेषितोऽहं ?
योऽर्थोऽसम्भावनीयस्तमपि घटयति क्रूरकर्मा विधाता ॥ २७ ॥

रामः सत्वरं करमुद्रां समुद्धृत्य । वीरमारुते !

मुद्रां समुद्रमुल्लङ्घ्य शीघ्रमाश्वास्य जानकीम् ।
विन्यस्य पुरतस्तस्या आगच्छ मयि जीवति ॥ २८ ॥

हनूमान् तथेति श्रीरामसुग्रीवौ प्रणम्य मुद्रां समादाय समुद्रोपकण्ठमागच्छन् ।

सम्पातिरथ दृष्टयोजनशतात्, पारेसमुद्रं पुरी
लङ्का तत्र विदेहराजतनयेत्याकर्ण्य वायोः सुतः ।

---

रण्यम् आगात् आगतवान् । असौ मारीचनामा कनकमयमृगः क्व ? सीताया अपहारः अपहरणं कुत्र ? वृत्तमिति शेषः, रामस्य मित्रं सुग्रीवः क्व ? कुत्र ? स्थित इति शेषः, अहं जनकतनयायाः सीतायाः अन्वेषणे प्रेषितः ? क्वेति शेषः, अतः योऽर्थः विषयः असम्भावनीयः अघटनीयः, क्रुरकर्म्मा दारुणव्यवसायो विधाता तमपि अर्थं घटयति योजयति । अत्र चतुर्थपादवाक्यस्य पूर्वपादत्रयस्य हेतुत्वेन प्रतिपादनात् काव्यलिङ्गमलङ्कारः । स्रग्धरा वृत्तम् ॥ २७ ॥

मुद्रामिति । समुद्रम् उल्लङ्घ्य उत्तीर्य्य जानकीम् आश्वास्य तस्याः जानक्याः पुरतः अग्रतः मुद्राम् अभिज्ञानभूतामिति भावः, विन्यस्य दत्त्वा मयि जीवति सति शीघ्रम् आगच्छेत्यन्वयः । अनुष्टुप् वृत्तम् ॥ २८ ॥

सम्पातिरिति । अथानन्तरं वायोः सुतः हनूमान् समुद्रस्य पारे पारेसमुद्रं लङ्का नाम पुरी अस्तीति शेषः, तत्र विदेह-

अब्धिं स्वल्पशरीरदुस्तरतरं दृष्ट्वा तथाऽवर्द्धत
व्याप्तं येन तदीयकेशरसटाटोपैर्नभोमण्डलम् ॥ २९ ॥
आरम्भं विदधे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
वीरश्रीरघुनाथपादरजसामुच्चैः स्मरन् मारुतिः ।
मूर्ध्ना जाम्बवतोऽभिवन्द्य चरणौ संश्लिष्य सेनापतीन्
आश्वास्याश्रुमुखान् मुहुः प्रियतमान् प्रेष्यान् समादिश्य च ॥३०॥

---

राजतनया सीता अस्तीति दृष्टं योजनानां शतं क्रोशशतचतुष्टयमित्यर्थः, "स्यात् योजनं क्रोशचतुष्टयेन" इत्युक्तेः, येन तथाविधात् सम्पातेः जटायुषोऽग्रजात् पक्षिराजात् आकर्ण्य श्रुत्वा अब्धिं समुद्रं स्वल्पेन क्षुद्रेण शरीरेण दुस्तरतरम् अतीव दुष्पारं दृष्ट्वा तथा अवर्द्धत वृद्धिमगच्छत् येन वर्द्धनेन तस्य इमा तदीया या केशराणां जटानां सटा विस्तारः तस्या आटोपाः आड़म्बराः तैः नभोमण्डलं गगनाभोगः व्याप्तम् आवृतम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ २९ ॥

आरम्भमिति । मारुतिः पवनात्मजः वीरस्य श्रीरघुनाथस्य पादरजसां चरणरेणूनां, कर्म्मणि षष्ठी, उच्चैः अतिशयेन, भक्तिभावेनेति भावः, स्मरन् भावयन् जाम्बवतः ऋक्षराजस्य चरणौ मूर्द्ध्ना शिरसा अभिवन्द्य सेनापतीन् संश्लिष्य समालिङ्ग्य प्रियतमान् सुहृदः अश्रुमुखान् भाविविरहदुःखादिति भाव, मुहुः पुनः पुनः आश्वास्य सान्त्वयित्वा प्रेष्यान् भृत्यान् समादिश्य एवमेवं कार्य्यं युष्माभिरिति समाज्ञाप्य च, महेन्द्रस्य पर्वतस्य शिखरात् शृङ्गात्, यवर्थे पञ्चमी, महेन्द्रशिखरमारुह्येत्यर्थः, अम्भोनिधेः समुद्रस्य लङ्घने आरम्भम् उपक्रमं विदधे । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३० ॥

लाङ्गूलोत्तालकेतुर्नभसि पृथुगतिस्फारसीमन्तिताभ्रः
स्फूर्जत्प्रौढ़ोरुवेगोच्छलितजलनिधिः पृष्ठदेशोग्रसत्त्वः ।
दूरात् सिन्दूरपूरारुणमरुणरुचिस्तेजसः संविभागै-
श्चक्रे दिग्वारणानां कटितटमभितः सूर्य्यविम्बावदातम् ॥ २१ ॥
रत्नं किरीटे, तिलकं ललाटे, हारे वरे नायकतामुपेतः ।
क्रमेण भानुः पवमानसूनोः प्रबोधयामास पदारविन्दम् ॥ २२ ॥

---

लाङ्गूलेति । लाङ्गूलमेव उत्तालः उन्नतः केतुः ध्वजः यस्य सः नभसि आकाशे या पृथुगतिः शीघ्रगमनं तस्याः स्फारेण विस्तारेण सीमन्तितानि द्विधाकृतानि अभ्राणि मेघा येन तथोक्तः, "अभ्रं मेघो वारिवाहः स्तनयित्नुर्वलाहकः" इत्यमरः, स्फूर्जन् स्फुरन् प्रौढ़ः अतिबहुः उरुर्महान् वेगः, यद्वा ऊरुवेगः जङ्घाजवः तेन उच्छलितः उद्वेलतां नीतः, उल्ललितः इति पाठेऽपि स एवार्थः, जलनिधिः समुद्रो येन तथाभूतः पृष्ठदेशे उग्राणि भीषणानि सत्त्वानि जन्तवः लग्नानीति भावः यस्य सः, पृष्ठकृष्टेति पाठे पृष्ठे कृष्टानि उग्राणि सत्त्वानि राक्षसा-दीनि येन तथोक्तः. अरुणा रक्ता रुचिर्दीप्तिर्यस्य सः, वानर-जातीनां स्वभावतः रक्तवर्णत्वात् राक्षसान् प्रति क्रोधाद्वेति भावः, तेजसः स्वशरीरदीप्तेः दूरात् संविभागैः सम्प्रसारैः दिग्वारणानां दिग्गजानां कटितटम् अभितः उभयोः पार्श्वयोः सिन्दूरपूरवत् अरुणं रक्तम् अत एव सूर्य्यविम्बवत् अवदातम् उज्ज्वलं, सूर्य्यविद्धाम्बुदाभमिति पाठे सूर्य्येण विद्धः आलिङ्गितः, आरक्तीकृत इति यावत्, योऽम्बुदः मेघः तदाभं तन्निभं चक्रे कृतवान् । स्रग्धरा वृत्तम् ॥ २१ ॥

रत्नमिति । भानुः सूर्य्यः पवमानसूनोः हनूमतः वरे

अथ स विलसदम्भःस्तम्भिताचिप्रकाशं
जलचरखरखेलास्फालवाचालिताशम् ।
जलनिधिमतिवीरो लङ्घितुं वायुपुत्त्रः
खगपतिरिव चण्डोड्डीनमङ्गीचकार ॥ ३३ ॥

लाङ्गूलेन गभस्तिमान् वलयितः, पीतः शशी मौलिना,
जीमूता विधुराः सटाभिरुडवो दंष्ट्राभिरासादिताः ।
उत्तीर्णोऽम्बुनिधिर्भृशैरविशदैर्भीमाट्टहासोर्मिभिः
लङ्केशस्य च लङ्घितो दिशि दिशि प्रौढः प्रतापानलः ॥ ३४ ॥

---

श्रेष्ठे हारे नायकतां मध्यमणित्वम् उपेतः प्राप्तः मध्यमणिरिव प्रतिफलितः सन् किरीटे रत्नं ललाटे तिलकं पादारविन्दञ्च क्रमेण प्रबोधयामास दीपयामास । उपजाति वृत्तम् ॥ ३२ ॥

अथेति । अथानन्तरं सः अतिवीरः महावीरो वायुपुत्रः खगपतिरिव गरुड़ इव विलसद्भिः उच्छलद्भिः अम्भोभिः पयोभिः स्तम्भितः आच्छादितः अक्षिप्रकाशः दृष्टिव्यापारः येन तं जलचराणां नक्रादीनां खरेण उग्रेण खेलास्फालेन लीला-विचरणेन वाचालिता मुखरिता आशा दिशो येन तथोक्तं जल-निधिं सागरं लङ्घितुम् उत्तरीतुम् चण्डोड्डीनं प्रचण्डमुड्डयनम् अङ्गीचकार उपक्रान्तवानित्यर्थः । मालिनी वृत्तम् ॥ ३३ ॥

लाङ्गूलेनेति । लाङ्गूलेन गभस्तिमान् सूर्य्यः वलयितः वेष्टितः, मौलिना किरीटेन शिरसा वा शशी चन्द्रः पीतः कवलितः, सटाभिः जटाभिः, "जटा सटाकेसरयोः" इत्यमरः, जीमूताः मेघाः विधुराः, कृता इति शेषः, विध्वस्ता इत्यर्थः, दंष्ट्राभिः दशनैः उडवः नक्षत्राणि, "नक्षत्रमृक्षं भं तारा तारका-प्युडु वा स्त्रियाम्" इत्यमरः, आसादिताः आक्रान्ताः, भृशैः

कपीनां कटके घोरे जातः कलकलध्वनिः ।
आञ्जनेयः किमेकाकी गच्छेद्रावणसन्निधिम् ॥ २५ ॥

वेलावने तालतमालमालामालोकमानः सहसाञ्जनेयः ।
उल्लोलयन् बालधिबालमुच्चैः कल्लोलिनीवल्लभमुल्ललङ्घे ॥ २६ ॥

प्रविश्य सुरसामुखान्तरमतो विनिष्क्रम्य च
क्रमादुदितमम्बुधेस्तुहिनशैलजं मानयन् ।

---

महद्भिः अविशदैः अनिर्मलैः भीमाट्टहासोर्मिभिः उत्कटोच्च-हासरूपतरङ्गैः अम्बुनिधिः समुद्रः उत्तीर्णः लङ्केशस्य रावणस्य दिशि दिशि प्रतिदिशं प्रौढ़ः प्रवृद्धः प्रतापानलः लङ्घितश्च, हनूमतेति कर्त्तृपदं सर्वत्र योज्यम्। शार्दूलविक्रीड़ितं वृत्तम् ॥ २४ ॥

कपीनामिति। कपीनां वानराणां घोरे भीषणे कटके सैन्ये एकाकी असहायः आञ्जनेयः अञ्जनासुतः हनूमान् रावणसन्निधिं गच्छेत् किम् ? इतीत्थं कलकलध्वनिः जातः। किलकिलाध्वनिरिति पाठान्तरम् ॥ २५ ॥

वेलेति। आञ्जनेयः हनूमान् वेलावने समुद्रतीरवर्त्तिनि अरण्ये तालानां, शालेति पाठे शालानामित्यर्थः, तमालानाञ्च मालां श्रेणीम् आलोकमानः पश्यन् तथा बालधिबालं पुच्छ-लोमचयं, बालधिबालमित्यत्र बालधिवल्लीमिति पाठे बालधि-वल्लीं पुच्छलतामित्यर्थः, उल्लोलयन् विस्फारयन् सहसा झटिति उच्चैः महान्तं कल्लोलिनीवल्लभं नदीपतिम् उल्ललङ्घे उल्लङ्घित-वानित्यर्थः। इन्द्रवज्रा वृत्तम् ॥ २६ ॥

प्रविश्येति। स पवनजः वायुसुतः सुरसा तदाख्या नाग-माता तस्या मुखान्तरं वदनविवरं प्रविश्य अतो मुखान्तरात्

निहत्य पथि रोधिकां नभसि सिंहिकां राक्षसीं
विलङ्घ्य जलधिं ययौ पवनजः स लङ्कापुरीम्॥ ३७॥
गत्वा लङ्कां निशायां पवनसुतवरोऽन्विष्य सीतां विनीतां
गेहे गेहे प्रयत्नात् स्थलजलविटपे सर्वतो वृक्षमध्ये।
यत्रास्ते कुम्भकर्णः सुरजितभवने कन्दरे गह्वरे नो
दृष्ट्वा वैदेहपुत्रीं चिरमनुसरणाच्चिन्तितोऽसौ हनूमान्॥ ३८॥

---

विनिष्क्रम्य च, महाविस्तारं तन्मुखमतिक्रमितुमशक्ततया क्षुद्ररूपेण तदन्तःप्रवेशः तस्मान्निर्गमश्चेति भावः, क्रमात् अम्बुधेः समुद्रात् उदितम् उत्थितं, स्वस्याभिनन्दनविश्रामदानार्थमिति भावः, तुहिनशैलजं हिमाद्रिसुतं मैनाकमित्यर्थः, मानयन् स्पर्शेन तदातिथ्यं स्वीकुर्वन्निति भावः, नभसि पथि नभोमार्गे रोधिकाम् अवरोधकारिणीं सिंहिकां नाम राक्षसीं निहत्य निपात्य जलधिं विलङ्घ्य उत्तीर्य्य लङ्कापुरीं ययौ प्राप। पृथ्वी वृत्तं "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात्॥ ३७॥

गत्वेति। असौ पवनसुतवरः हनूमान् निशायां लङ्कां गत्वा प्रविश्येत्यर्थः, गेहे गेहे प्रतिगृहं स्थलजलविटपे स्थले जले विटपे वृक्षशाखायामित्यर्थः, सर्वतः सर्वस्मिन् वृक्षमध्ये, स्थित्वेति शेषः, विनीतां विनयवतीं सीताम् अन्विष्य यत्र कुम्भकर्णः आस्ते स्वपितीति भावः, तत्रेत्यध्याहार्य्यं, सुराणां देवानां जितं भवनं येन तादृशे कन्दरे गृहाकारे पर्वतनितम्बभागे गह्वरे गुहायां वैदेहपुत्रीं सीतां नो दृष्ट्वा अनवलोक्येत्यर्थः, चिरम् अनुसरणात् अन्वेषणात् हेतोः चिन्तितः चिन्ता अस्य जातेति चिन्तितः किमियं न दृश्यते मृता वा इति चिन्ताकुलितः, अभूदिति शेषः। स्रग्धरा वृत्तम्॥ ३८॥

मातृभ्रातृकलत्रमन्त्रिसचिवप्रख्यातपुत्रालयाः
पौलस्त्यस्य मया निरूपितमपि श्रीसौधमेकैकशः।
नानारूपरहःस्थली च चरिता सीता न दृष्टा क्वचि-
च्छङ्के सागरलङ्घने निपतिता लङ्केशशङ्काकुला ॥ ३९ ॥
संक्षिप्याथ तनुं निरीक्ष्य सकलां लङ्कां शरच्चन्द्रिका-
निर्धौताखिलसौधमण्डलमहोद्योतप्रसन्नान्तराम्।
दृष्ट्वाऽशोकवने स राक्षसवधूसंवेष्टितां जानकीम्
आरूढो निभृतं स्थितः पवनजः कङ्केल्लिभूमीरुहम् ॥ ४० ॥

---

चिन्ताप्रकारमाह, मात्रिति। मया पौलस्त्यस्य रावणस्य मातृभ्रातृकलत्रमन्त्रिसचिवप्रख्यातपुत्रालयाः मातुः भ्रातॄणां कलत्राणां नारीणां मन्त्रिणां सचिवानां भृत्यानां प्रख्यातानां प्रसिद्धानां पुत्राणाञ्च आलयाः गृहाणि श्रीसौधमपि श्रीमन्दिरं राजभवनमपि एकैकशः एकमेकं कृत्वेत्यर्थः, निरूपितं निरीक्षितं नानारूपा विविधप्रकारा रहःस्थली विजनविहारभूमिरित्यर्थः, चरिता अन्विष्टा च, क्वचित् कुत्रापि सीता न दृष्टा नावलोकिता, अतः सागरलङ्घने समुद्रलङ्घनकाले लङ्केशात् रावणात् या शङ्का भयं तया आकुला आर्त्ता सती निपतिता, सागरे इति शेषः, इति शङ्के मन्ये ; इति चिन्तित इति पूर्वेणान्वयः। शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

संक्षिप्येति। अथ चिन्तानन्तरं सः पवनजः हनुमान् तनुं शरीरं संक्षिप्य सङ्कोच्य शरच्चन्द्रिकया शारदीयया ज्योत्स्नया निर्धौतानां क्षालितानाम् अखिलानां सर्वेषां सौधमण्डलानां हर्म्यवृन्दानां महता उद्द्योतेन आलोकेन, "आलोको दर्शनोद्द्योतौ" इत्यमरः, प्रसन्नं विशदम् अन्तरं अवकाशः यस्याः तां

क्क नु कुलमकलङ्कमायताक्ष्याः ?
क्क नु रजनीचरसङ्गमापवादः ? ।
अयि ! खलु विषमः पुराकृतानां
प्रभवति जन्तुषु कर्म्मणां विपाकः ॥ ४१ ॥

अत्रान्तरे रावणः स्वयमागत्य सीतां प्रति ।

मुग्धे मैथिलि ! चन्द्रसुन्दरमुखि ! प्राणप्रदानौषधि !
प्राणान् रक्ष मृगाक्षि ! मन्मथनदि ! प्राणेश्वरि ! त्राहि माम् ।

---

सकलां लङ्कां निरीक्ष्य विचित्येति यावत्, अशोकवने न विद्यते शोको दुःखं यत्र तादृशं यत् वनं तस्मिन् अशोकाख्ये उद्याने राक्षसवधूभिः संवेष्टितां परिवृतां जानकीं दृष्ट्वा कङ्केल्लिभूमीरुहम् अशोकतरुम् आरूढ़ः निभृतं गूढ़ं स्थितः किमियं सेति निरूपणार्थमिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४० ॥

क्केति । आयते विशाले अक्षिणी यस्याः सा तस्याः सीताया अकलङ्कं विशुद्धं कुलं क्क नु ? कुत्र खलु ? रजनीचरसङ्गमापवादः राक्षससङ्गजनितकुत्सावादः क्क नु ? कुत्र खलु ? नोभयोरेतयोः सङ्गतिः, अतीवायुक्तेति भावः, इति चिन्तिते दैवमेवोत्तरमाह, अयीति—अयीति कोमलामन्त्रणे, अयि ! कोमलबुद्धे ! पुराकृतानां प्राक्तनानां कर्म्मणां विपच्यते इति विपाकः परिणामः, फलमिति यावत्, जन्तुषु प्राणिषु विषमः दारुणः सन् प्रभवति खलु प्रकर्षेण स्वसामर्थ्यं दर्शयत्येवेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । पुष्पिताग्रा वृत्तम् ॥ ४१ ॥

मुग्धे इति । हे मुग्धे मूढ़े ! निर्विवेके इत्यर्थः, मैथिलि ! चन्द्रसुन्दरमुखि चन्द्रानने ! प्राणप्रदानस्य सञ्जीवनदानस्य

रामश्चुम्बति ते मुखं सुललितं वक्त्रैकमात्रेण तत्
चुम्बिष्यामि दशाननैर्बहुविधं मुञ्च ग्रहं मानिनि ! ॥ ४२ ॥

अयि जनकतनूजे ! तापसेन त्वमेवं
ननु किमपि कुमन्त्रज्ञानिना शिक्षिताऽसि ।
नमदमरकिरीटोद्घृष्टपादारविन्दे
प्रणमति मयि तस्मिन् मर्त्त्यकीटेऽनुरागः ? ॥४३॥

सीते ! त्वं परिमुञ्च मानमधुना, राजादरो गृह्यतां
पश्य त्वं कनकोज्ज्वलां सुनगरीं लङ्केश्वरं जीवय ।

---

ओषधि ! भेषजभूते ! मृगाक्षि ! मृगनयने ! मन्मथनदि ! कामप्रवाहिणि ! प्राणान् रक्ष हे प्राणेश्वरि ! मां त्राहि जीवय, रामः वक्त्रैकमात्रेण एकेनैव वदनेनेत्यर्थः, ते तव सुललितं सुन्दरं मुखं चुम्बति, अहं दशभिराननैः तत् ते मुखं बहुविधं विचित्रं यथा तथा चुम्बिष्यामि, हे मानिनि कोपने ! ग्रहं निर्बन्धं, पातिव्रत्यरक्षणे इति भावः, मुञ्च त्यज । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४२ ॥

अयीति । अयीति कोमलामन्त्रणे । हे जनकतनूजे जानकि ! कुमन्त्रज्ञानिना कुत्सितो मन्त्रः परामर्शः तस्य ज्ञानं विद्यते अस्येति तथोक्तेन असदुपदेशदायिनेत्यर्थः, तापसेन रामेण त्वम् एवं किमपि कदाचाररूपमिति भावः, शिक्षितासि ननु शिक्षितास्येव । नमतां प्रणिपतताम् अमराणां देवानां किरीटैः मुकुटैः उद्घृष्टं सङ्घर्षमाप्तं पादारविन्दं चरणपद्मं यस्य तादृशे मयि प्रणमति तव चरणयोः पतति सत्यपीत्यर्थः, तस्मिन् मर्त्त्यकीटे मनुष्यापसदे इति यावत्, रामे अनुरागः आसक्तिः ? आश्चर्य्यमेषा तव कुबुद्धिरिति भावः । शालिनी वृत्तम् ॥४३॥

एकोनाश्च शतैकराजमहिषीस्त्यक्त्वा च मन्दोदरीं
सेवार्थं विनियुज्यते च सकलं लङ्काधिपत्याय ते ॥ ४४ ॥
सीते ! पश्य शिरांसि यानि शिरसा धत्ते महेशः पुरा
तानि त्वत्पदसंस्थितानि सुभगे ! कस्मादवज्ञायते ? ।
श्रुत्वैतत् परदारलम्पटवचः सीताऽऽह तं रावणं
निर्माल्यानि शिरांसि मूढ़ ! तव धिक्, सीतावचः पातु वः ॥४५॥

---

सीते इति । हे सीते ! त्वं मानं कोपं परिमुञ्च परित्यज, अधुना राजादरः राज्ञः मम आदरः गृह्यतां, त्वं कनकोज्ज्वलां सुवर्णोज्ज्वलां सुनगरीं लङ्कां पश्य लङ्केश्वरं, मामिति शेषः, जीवय आत्मप्रदानेन परिरचेत्यर्थः, एकोनाश्च एकया ऊनाः हीनाश्च शतैकराजमहिषीः नवनवतिसंख्याः राजपत्नीरित्यर्थः, मन्दोदरीञ्च सर्वप्रधानमहिषीञ्च त्यक्त्वा अनादृत्येति भावः, लङ्काधिपत्याय सकलं लङ्कैश्वर्य्यसमग्रमित्यर्थः, ते तव सेवार्थं विनियुज्यते विशेषेण नियुक्तं क्रियते, मयेति शेषः । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ४४ ॥

सीते इति । हे सीते ! पश्य, पुरा पूर्वं महेशः शम्भुः शिरसा यानि शिरांसि उपहारीकृतानीति भावः, मयेति शेषः, धत्ते गृह्णाति, हे सुभगे ! सौभाग्यशालिनि ! तानि शिरांसि तव पदयोः संस्थितानि, अतः कस्मात् अवज्ञायते ? अवहेलनं क्रियते ? भावे लट्प्रत्ययः । एतत् परदारलम्पटस्य परस्त्रीकामुकस्य वचः श्रुत्वा सीता तं रावणम् आह प्रोक्तवतीत्यर्थः. हे मूढ़ ! तव शिरांसि निर्माल्यानि देवोच्छिष्टानि, विशेषतः शिवोच्छिष्टानि अग्राह्या-णीति भावः, "अग्राह्यं शिवनिर्माल्यम्" इति वचनात्, अतएव धिक् निन्दामीत्यर्थः, "धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः । इति

कारौकसि त्वमुषितश्चिरमेव यस्य
निर्वापितो युधि स येन सहस्रबाहुः।
तस्यापि रे! पुरभिदाऽखिलमस्त्रवेद-
मध्यापितस्य विजयी मम जीवनाथः॥ ४६॥

अपतदथ दशास्यो जानकीपादपद्मे
करधृतपदयुग्मः कामुकस्तामुवाच।
सुरपतिरपि पादे चापतद् यस्य, तस्मिन्
पतति मयि (तव) न तुष्टिर्ब्रूहि किं वा करोमि? ॥४७॥

---

सीताया वचः वः युष्मान् पातु रक्षतु। नटोक्तिरियम्। शार्दूल-विक्रीड़ितं वृत्तम्॥ ४५॥

कारौकसीति। त्वं यस्य कारौकसि कारागारे चिरमेव दीर्घकालमेव उषितः स्थितः स सहस्रबाहुः कार्त्तवीर्य्यः युधि युद्धे येन निर्वापितः निर्वाणं गमितः, निहत इत्यर्थः, रे!, पापिन्! इति शेषः, मम जीवनाथः जीवितेश्वरः रामः पुरभिदा शम्भुना अखिलमस्त्रवेदं समग्रमस्त्रविद्याम् अध्यापितस्य तस्यापि परशु-रामस्यापि विजयी विजेता, किमधिकं ते वक्तव्यमिति भावः। वसन्ततिलकं वृत्तम्॥ ४६॥

अपतदिति। अथानन्तरं दशास्यो रावणः जानक्याः पाद-पद्मे अपतत् निपपात। तथा कामुकः अतएव करैः धृतं पद-युग्मं येन तथाभूतः सन् तां जानकीम् उवाच। (हे सुन्दरि!) सुरपतिरिन्द्रोऽपि यस्य पादे अपतत् तस्मिन् मयि पतति, तव चरणयोरिति शेषः, सत्यपि तुष्टिः सन्तोषः न, तवेति शेषः, ब्रूहि कथय, किं वा, अन्यदिति शेषः, करोमि? अन्यत् किं कृत्वा तव प्रसादं लभे तत् कथयेत्यर्थः। मयीत्यत्र

इत्थं निशम्य मधुरं नृपमाह वाक्यं
नम्राननना सपदि कोपवती च सीता ।
श्रीरामबाणहतरावणमस्तकेषु
गृध्राः पदं दधति चेन्मम तुष्टियोगः ॥ ४८ ॥

यदन्तरं वायस-वैनतेययोर्यदन्तरं सिंह-शृगालयोर्वने ।
खद्योत-मार्त्तण्डकयोर्यदन्तरं तदन्तरं ते रघुनन्दनस्य च ॥४९॥

सीते ! त्वं ननु कम्पिता मम भयेनाद्यैव, नान्ते तु तत्
रामं द्रक्ष्यसि नष्टरूपमचिरात्, आकारपूर्वं वद ।

---

तवेति पाठे मयीत्यध्याहार्य्यम् । मालिनी वृत्तम् ॥ ४७ ॥

इत्थमिति । इत्थं मधुरं नारीचित्तहरमिति भावः, वाक्यं निशम्य सीता सपदि सद्यः नम्राननना अवनतमुखी कोपवती च नृपं राजानं रावणम् आह उक्तवती, श्रीरामस्य बाणैः शरैः हतानि निकृत्तानि रावणस्य तवेति भावः, मस्तकानि तेषु गृध्राः क्रव्यादाः पक्षिविशेषाः पदं दधति न्यस्यन्ति चेत् यदि, तदा मम तुष्टियोगः सन्तोषलाभः, स्यादिति शेषः । वसन्ततिलकं वृत्तम् ॥ ४८ ॥

यदन्तरमिति । वायसः काकः वैनतेयः गरुड़ः तयोर्यत् अन्तरं प्रभेदः, वने सिंह-शृगालयोः यत् अन्तरं प्रभेदः, खे आकाशे द्योतते इति खद्योतः आलोकवान् कीटविशेषः, मार्त्तण्डः सूर्य्यः तयोः यत् अन्तरं ते तव रघुनन्दनस्य रामस्य च तत् अन्तरं प्रभेदः, त्वं काकः रामो वैनतेयः, त्वं शृगालः रामः सिंहः, त्वं खद्योतः रामः मार्त्तण्ड इति वाक्यार्थः । वंशस्थविलं वृत्तं "वदन्ति वंशस्थविलं जतौ जरौ" इति तल्लक्षणात् ॥ ४९ ॥

सीते इति । हे सीते ! त्वं मम भयेन अद्यैव इदानीमेव,

मानेनैव तनुः क्षयं ननु गता, सत्यं वचोव्याधिना,
श्रुत्वा रावण-सीतयोरिति वचो हास्यं हनूमान् ययौ ॥ ५० ॥

सीतया प्रतिक्षिप्ते (क) रावणे गते त्रिजटा-सीतयोः रहस्यम् ।

पृच्छामि त्रिजटे ! सुखेन भवतीं कस्मादयं रावणो
नीतिज्ञो ननु वाञ्छतीह किल मामन्याङ्गनां कानने ? ।
सीते ! मन्मथपुष्पसायकहते का नाम नीतिः कथा ?
यावत् कामशराहतो न पुरुषस्तावद् विशिष्टायते ॥ ५१ ॥

---

परत्र एवं न भविष्यतीति भावः । कम्पिता ननु कम्पिता एव, तु किन्तु तत् कम्पनं अन्ते न, भविष्यति इति शेषः । अचिरात् शीघ्रं रामं नष्टरूपं निहतत्वात् विरूपम् इत्यर्थः, द्रक्ष्यसि अवलोकयिष्यसि इति रावणोक्तौ आकारपूर्वम् आकारः पूर्वो यस्य तथोक्तं रामम् आराममित्यर्थः, तव उपवनमिति यावत्, "आरामः स्यादुपवनम्" इत्यमरः, नष्टरूपं वानरैः भग्नत्वात् विपर्यस्तसौन्दर्यं द्रक्ष्यसीति वद कथय । इति सीताप्रत्युक्तिः । मानेनैव ईर्ष्याजनितकोपेनैव, "मानः कोपः स तु द्वेधा प्रणयेर्ष्या-समुद्भवः" इत्युक्तेः, तनुः शरीरं, तवेति शेषः, क्षयं गता ननु क्षीणैव, इति रावणोक्तौ सत्यं क्षयं गता तनुर्ममेति अवितथं किन्तु वचोव्याधिना तव दुर्वचसेत्यर्थः, न तु मानेनेति भावः, इति सीताप्रत्युक्तिः । इतीत्थं रावणसीतयोः वचः उक्तिप्रत्युक्ति-रूपं वचनं श्रुत्वा हनूमान् हास्यं ययौ प्राप, जहासेत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५० ॥

(क) प्रतिक्षिप्ते निराकृते ।

पृच्छामीति । हे त्रिजटे ! भवतीं सुखेन इदानीं रावण-

वज्रं जीर्य्यति वज्रिणोऽपि च, हरेश्चक्रञ्च वक्रं तथा,
दण्डः खण्डशतं यमस्य, दलितः पाशोऽभवत् पाशिनः ।
लङ्केशोरसि तत्र मन्मथशरो मग्नो न भग्नस्ततः
कः शाखी सखि ! यस्य पुष्पमभवत् पुष्पायुधस्यायुधम् ? ॥ ५२ ॥

---

प्रतिगमनात् स्वच्छन्देनेत्यर्थः, पृच्छामि, अयं नीतिज्ञः राजनीतिविचक्षणः रावणः ननु अन्याङ्गनां परनारीं किल माम् इह कानने अशोकवने कस्मात् किमर्थं वाञ्छति अभिलषति ? । हे सीते ! मन्मथस्य कामस्य पुष्पसायकेन पुष्पेणैव शरेणेत्यर्थः, हते विद्धे, जने इति शेषः, नीतेः कार्य्याकार्य्यविचारनयस्य कथा का नाम ? नैव कार्य्याकार्य्यविवेको विद्यते इत्यर्थः, पुरुषः यावत् कामशरेण आहतः विद्धः न, भवतीति शेषः, तावत् विशिष्टायते विशिष्ट इवाचरति, सज्जनायते इत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥ ५१ ॥

वज्रमिति । वज्रिणः वज्रायुधस्य इन्द्रस्य वज्रमपि लङ्केशोरसि रावणवक्षसि जीर्य्यति जीर्णतां गच्छति, तथा हरेर्नारायणस्य चक्रं सुदर्शनाख्यमपि वक्रं कुटिलरूपं, विनष्टमिति यावत्, यमस्य दण्डः खण्डशतं तथा पाशिनः वरुणस्य, "प्रचेता वरुणः पाशी" इत्यमरः, पाशोऽपि पाशास्त्रमपि दलितः खण्डितः अभवत्, किन्तु तत्र लङ्केशोरसि मन्मथस्य शरः मग्नः निपतितः सन् ततः तस्मात् न भग्नः न खण्डितः, अतः हे सखि सीते ! यस्य पुष्पं पुष्पायुधस्य कामस्य आयुधम् अस्त्रम् अभवत्, स शाखी वृक्षः कः ? सर्वस्यापि अस्त्रं क्वचिदपि विहतं स्यात् किन्तु कामास्त्रं कुत्रापि न विहन्यते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

सीताया हृदये शिरीषकुसुमप्राये पफालोच्चकैः
पौलस्त्यस्य स एव कुण्ठकुलिशे वज्राधिके वक्षसि ।
आपुङ्खं निममज्ज मन्मथशरस्तत् किं न जानीमहे ?
व्यक्तं श्रीरघुनन्दनस्य महिमा यस्त्रायते स्वां तनुम् ॥ ५३ ॥

अथ सीतादर्शने हनूमान् ।

का त्वं पद्मपलाशाक्षि ! पीतकौषेयवासिनि ! ।
द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिता ? ॥ ५४ ॥

---

सीताया इति । यः मन्मथशरः सीतायाः शिरीषकुसुमप्राये अतिकोमले इति भावः, हृदये उच्चकैः अतिशयेन पफाल विभेद, भग्नतां गतवानित्यर्थः, स एव मन्मथशरः पौलस्त्यस्य रावणस्य कुण्ठं सङ्कुचितं, शीर्णमित्यर्थः, कुलिशं वज्रं यस्मिन् तथाभूते अतएव वज्रादपि अधिके अतिकठिने इत्यर्थः, वक्षसि आपुङ्खं पुङ्खपर्य्यन्तं निममज्ज, तत् किं न जानीमहे न जानीमः ? अवश्यमेव जानीमहे इत्यर्थः, श्रीरघुनन्दनस्य श्रीरामस्य महिमा व्यक्तं स्फुटम् अवभासते इति भावः, यः महिमा स्वां तनुम् अर्द्धाङ्गभूतां भार्य्यामित्यर्थः, "शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा" इति बृहस्पतिवचनात्, त्रायते रक्षति । रामशरेण अदृष्टस्थितेन सीताहृदयपतितः कामशरो विहन्यते इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५३ ॥

का त्वमिति । हे पद्मपलाशाक्षि ! पद्मपत्रनेत्रे ! हे पीतकौषेयवासिनि ! पीतं पीतवर्णं यत् कौषेयं क्रमिकोषोत्थं वसनं, "कौषेयं क्रमिकोषोत्थम्" इत्यमरः, तत् वस्ते आच्छादयतीति तथोक्ता तत्सम्बुद्धौ, अनिन्दिता त्वं, यद्वा अनिन्दिते इति

किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् ।
पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम ? ॥ ५५ ॥

सीता । दुहिता जनकस्याहं वैदेहस्य महात्मनः ।
सीतेति नाम तस्याहं भार्य्या रामस्य धीमतः ॥ ५६ ॥
रचिता रघुवंशस्य जनकस्य च रचिता ।
रचिता जीवलोकस्य धर्म्मस्य च परन्तपः ॥ ५७ ॥
धनुर्वेदे च वेदे च वेदाङ्गेषु च निष्ठितः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महामनाः ॥ ५८ ॥

---

सम्बुद्धिः, द्रुमस्य वृक्षस्य शाखाम् आलम्ब्य आश्रित्य, धृत्वेति यावत्, तिष्ठसि, का त्वम् ? ॥ ५४ ॥

किमर्थमिति । पुण्डरीकपलाशाभ्यां श्वेतपद्मपत्राभ्यां, "पुण्डरीकं सिताम्भोजम्" इत्यमरः, विप्रकीर्णं विगलितम् उदकमिव तव नेत्राभ्यां शोकजं वारि वाष्पं किमर्थं स्रवति चरति ? ॥ ५५ ॥

दुहितेति । अहं महात्मनः वैदेहस्य विदेहो निमिः तस्यापत्यं पुमान् वैदेहः तस्य जनकस्य सीतेति नाम दुहिता । तथा अहं तस्य प्रसिद्धस्य धीमतः महाबुद्धेः रामस्य भार्य्या पत्नी ॥ ५६ ॥

रचितेति । य इत्यध्याहार्य्यम् । यः परन्तपः शत्रुघाती रामः रघुवंशस्य रचिता, जनकस्य जनकवंशस्य च रचिता, जीवलोकस्य धर्म्मस्य च रचिता ॥ ५७ ॥

धनुर्वेदे इति । यस्य विपुलांसः वृहत्स्कन्धः महाबाहुः दीर्घभुजः कम्बुग्रीवः शङ्खग्रीवः महामनाः प्रशस्तचित्तः, उदारचेता इत्यर्थः, धनुर्वेदे च वेदे च वेदाङ्गेषु "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः । ज्योतिषञ्चेति विद्वद्भिः

अथ हनूमान् मुद्रां दर्शयति ।

सुवर्णस्य सुवर्णस्य सुवर्णस्य वरानने ! ।
प्रेषितं रामभद्रेण सुवर्णस्याङ्गुरीयकम् ॥ ५८ ॥

सीता-हनूमतोरुक्तिप्रत्युक्ती ।

मातर्जानकि ! को भवान् ? वनमृगः, केनात्र संप्रेषितः ?
त्वद्दौत्येन रघूत्तमेन, किमिदं हस्ते स्थितम् ? मुद्रिका ।
दत्ता तेन, तदैव तां निजकरेणादाय चालिङ्ग्य च
प्रेम्णाऽश्रूणि ससर्ज, शश्वदुदभून्गात्रेषु रोमोद्गमः ॥ ६० ॥

---

षड़ङ्गानि स्मृतानि च ॥" इत्युक्तेषु च निष्ठा उत्कर्षः जाताऽस्येति निष्ठितः लब्धप्रतिष्ठ इति यावत् ॥५८ ॥

सुवर्णस्येति । हे वरानने ! चारुवदने ! रामभद्रेण सुवर्णस्य शोभनो वर्णो यस्य तथोक्तस्य सुवर्णस्य शोभनाः वर्णा राम-नामाक्षराणि यत्र तथोक्तस्य सुवर्णस्य दशमाषकप्रमाणस्य, "सुवर्णं दशमाषकम्" इत्युक्तेः, सुवर्णस्य हेम्नः अङ्गुरीयकम् अङ्गुल्या-भरणं प्रेषितम् । चतुःपञ्चाशतमारभ्य एकोनषष्टिपर्य्यन्तेषु श्लोकेषु अनुष्टुप् वृत्तम् ॥ ५८ ॥

मातरिति । मातः ! जानकि ! इति हनूमदुक्तिः । भवान् कः ? इति सीताप्रत्युक्तिः । वनमृगः शाखामृग इति यावत् । हनूमदुक्तिः । केन जनेन अत्र सम्प्रेषितः ? त्वमिति शेषः । सीताप्रत्युक्तिः । रघूत्तमेन रघुश्रेष्ठेन रामेण तव दौत्येन वार्त्ता-वहत्वेन, प्रेषितोऽस्मीति शेषः । हनूमदुक्तिः । हस्ते इदं किं स्थितम् ? सीताप्रत्युक्तिः । मुद्रिका मुद्राङ्कितं सुवर्णाङ्गुरीय-मित्यर्थः, तेन रामेण दत्ता प्रहिता । हनूमदुक्तिः । सा सीता तदैव तच्छ्रवणमात्रक्षणे एव तां मुद्रिकां निजकरेण आदाय

सीतामुद्रयोरुक्तिप्रत्युक्ती ।

मुद्रे ! ते कुशलं प्रिये ! ? जनकजे ! क्षेमञ्च रामस्य मे,
सत्यं मां स्मरति ? प्रविह्वलमनाः किं भाषते प्रोषिताम् ? ।
क्वासौ मद्विरहात् कथञ्च नयतीत्युक्त्वा मुहूर्त्तानिमान्
शुष्यत्यालपति ह्यसावभिमृशत्यामुह्यति ध्यायति ॥ ६१ ॥
मुद्रे ! ब्रूहि सलक्ष्मणाः कुशलिनः श्रीरामपादाः स्वयं ?
सन्ति स्वामिनि ! मा विधेहि विधुरं चेतोऽनया चिन्तया ।

---

आलिङ्ग्य च प्रेम्णा प्रीत्या अश्रूणि वाष्पवारीणि ससर्ज मुमोच, तदा च तस्याः गात्रेषु शश्वत् सततं रोमोद्गमः लोमहर्षः, प्रियतमाङ्गुरीयस्पर्शादिति भावः, उदभूत् आविरासीच्च । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६० ॥

मुद्रे इति । हे प्रिये मुद्रे ! ते तव कुशलम् ? इति सीतोक्तिः । हे जनकजे ! जानकि ! मे मम रामस्य च क्षेमं कुशलम् । इति मुद्रोक्तिः । मां स्मरति सत्यम् ? प्रविह्वलं प्रकर्षेण विह्वलं व्याकुलं मनो यस्य तथाभूतः सन् प्रोषितां देशान्तरस्थां, मामिति शेषः, किं भाषते किं कथयति ? इति सीतोक्तिः । असौ सीता क्व ? कुत्र ? तिष्ठतीति शेषः, कथञ्च इमान् मुहूर्त्तान् समयान् नयति अतिवाहयति ? इति उक्त्वा असौ रामः शुष्यति शीर्य्यति आलपति त्वद्विषयं जल्पति अभिमृशति मन्त्रयति आमुह्यति मूर्च्छति ध्यायति चिन्तयति च, हिशब्दोऽवधारणार्थः । इति मुद्रोक्तिः । अत्रानेकासु क्रियासु एकस्यैव कर्त्तृत्वात् दीपकालङ्कारः, तदुक्तं दर्पणे—"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥" इति । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६१ ॥

मां वै व्याहर मैथिलेन्द्रतनये ! नामान्तरेणाधुना
रामस्त्वद्विरहेण कङ्कणपदं यस्यै चिरं दत्तवान् ॥ ६२ ॥

अथाङ्गुरीयकमणौ प्रतिविम्बमासीत्
रामस्य सादरमि(म)तीव विलोकयन्ती ।
मद्रूप एव किमभून्मम चिन्तयेति
मीमांसया जनकराजसुता मुमोह ॥ ६३ ॥

---

मुद्रे इति । हे मुद्रे ! सलक्ष्मणाः लक्ष्मणसहिताः श्रीरामपादाः स्वयं कुशलिनः क्षेमवन्तः ? ब्रूहि कथय । स्वयमित्यत्र सुखमिति पाठे सुखं तिष्ठन्तीत्यर्थः । हे स्वामिनि ! सन्ति, श्रीरामपादाः कुशलिनः इति शेषः, अनया चिन्तया चेतः चित्तं विधुरं व्याकुलं मा विधेहि न कुरु, हे मैथिलेन्द्रतनये ! जानकि ! मैथिलाधिपसुते इति पाठान्तरम् ; मां वै निश्चये अधुना नामान्तरेण अन्येन नाम्ना, कङ्कणेत्याख्ययेति भावः, व्याहर आलप, रामः तव विरहेण यस्यै, मह्यमिति शेषः, चिरं दीर्घकालं कङ्कणपदं वलयस्थानं दत्तवान्, तव विरहेण तथा कार्श्यमवाप रामः, यथा अङ्गुरीयकं वलयरूपेण दधारेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६२ ॥

अथेति । अथ अनन्तरं जनकराजसुता सीता अङ्गरीयकमणौ रामस्य प्रतिविम्बम् आसीत् इतीव इति धियेवेत्यर्थः, सादरं यथा तथा विलोकयन्ती पश्यन्ती सती मम चिन्तया, वीक्षयेति पाठे वीक्षया दर्शनेनेत्यर्थः, मद्रूप एव मत्सदृश एव कृश इति भावः, अभूत् किम् ? इति मीमांसया विचारणया मुमोह मोहं गतवती । वसन्ततिलकं वृत्तम् ॥ ६३ ॥

हनूमान्। अनुदिनमनुशीलं त्वामनालोक्य सीते!
प्रतिदिनमतिदीनं वीक्ष्य रामं विरामम्।
गिरिरशनिमयोऽसौ यत्ततो न द्विधाऽभूत्
क्षितिरपि न विदीर्णा सा हि सर्वं सहैव ॥ ६४ ॥

समाश्वास्य। किं दूरमिन्दुमुखि! रामशिलीमुखानां?
किं दुर्गमं बलभिदां हरियूथपानाम्?।
दैवं प्रसन्नमिव देवि! तवाद्य सत्यं
रक्षांसि कानि कुपितस्य च लक्ष्मणस्य?॥ ६५ ॥

---

प्रतिदिनमिति। असौ गिरिः पर्वतः, यत्र रामो वसतीति भावः, अशनिमयः वज्रमयः, यत् यतः ततः प्रतिदिनं रामम् अतिदीनम् अतएव विरमतीति विरामः तम् उपरतप्राय-मित्यर्थः, वीक्ष्य दृष्ट्वा द्विधा नाभूत्, क्षितिरपि पृथिव्यपि न विदीर्णा, हि यतः सा क्षितिः सर्वंसहैव सर्वमेव सहते इति तथाभूतैव, अन्यथा सा विदीर्य्येतेति भावः। मालिनी वृत्तम् ॥ ६४ ॥

किमिति। हे इन्दुमुखि चन्द्रवदने! रामस्य शिलीमुखानां शराणां दूरं किम्? न किमपि स्थानं दूरमित्यर्थः, रामशरा हि दूरभेदिनो दुर्लक्ष्यभेदिनश्चेति भावः, बलभिदां परसैन्यघातिनां हरियूथपानां वानरसेनापतीनां दुर्गमम् अगम्यं किम्? न किमपि स्थानं अगम्यमित्यर्थः, सर्वत्रैव ते गन्तुं क्षमा इति भावः, किं दुर्गमर्गलभिदामिति पाठे अर्गलं द्वारावरोधकदण्डविशेषं भिन्दन्तीति तथोक्तानां दुर्गं दुर्गम-स्थानमित्यर्थः। हे देवि! अद्य साम्प्रतं तव दैवम् अदृष्टं प्रसन्नमिव अनुकूलमिव सत्यं निश्चितं, मन्ये इति शेषः,

सीता। चन्द्रो यस्य दिनेशदीधितिसमस्तोयं स्फुलिङ्गायते,
कर्पूरं कुलिशोपमं, शशिकला शम्पासमा भासते।
वायुर्बाड़ववह्निवन्मलयजं दावाग्निवत् साम्प्रतं
सन्देशं नय रामसन्निधिमितो यात्रां द्रुतं कारय ॥६६॥

---

कुपितस्य क्रुद्धस्य लक्ष्मणस्य च रचांसि कानि? अतितुच्छा-नीति भावः। कुपितस्य सलक्ष्मणस्येति पाठे सलक्ष्मणस्य लक्ष्मणसहितस्य, रामस्येति शेषः। वसन्ततिलकं वृत्तम् ॥६५॥

चन्द्र इति। यस्य रामस्य, यत्रेति पाठान्तरं, चन्द्रः चन्द्रस्यायं चन्द्रः चन्द्रसम्बन्धी,किरण इति शेषः, दिनेशस्य सूर्य्यस्य दीधिति-समः किरणसमः, अतीव दुःसह इति भावः, तोयं जलं स्फुलिङ्गायते स्फुलिङ्गः अग्निकणः, "त्रिषु स्फुलिङ्गोऽग्निकणः" इत्यमरः, स इवाचरति, पद्मं स्फुलिङ्गोपममिति पाठान्तरम्। कर्पूरं कुलिशोपमं वज्रतुल्यं, कर्पूरः कुलिशोपम इति पुंलिङ्गपाठोऽपि। शशिकला चन्द्रकला शम्पासमा विद्युत्तुल्या भासते स्फुरति, वायुः बाड़ववह्निवत् बड़वानल इव, मलयजं चन्दनं दावाग्निवत् दावानल इव उद्दीपकत्वेनासह्यत्वादिति सर्वत्र योज्यम्। साम्प्रतम् अधुना तस्य रामस्य सन्निधिं सन्देशं मद्वाचिकं नय प्रापय, इतः अस्मात् स्थानात् द्रुतं शीघ्रं यात्रां कारय कुर्वित्यर्थः, करोतिरत्र स्वार्थे णिजन्तः। अत्र यस्येति यच्छब्देन तच्छब्दस्याकाङ्क्षितत्वात् तेनैवान्वयो युक्तः किन्तु रामसन्निधिमित्येकदेशरामेति शब्देन सम्बन्धो न घटते, उक्तञ्च "प्रतियोगिपदादन्यत् यदन्यत् कारकादपि। वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते ॥" इति। तदत्र भद्र! सन्निधिमिति पाठे, हे भद्र! इति सम्बोध्य सन्निधिमित्यस्य "यच्छब्देन तु तच्छब्दो

सीता धूमशिखा शत्रोः कालव्यालवधूरिव ।
उदस्य च शिरोरत्नं विज्ञानं स्वामिने ददौ ॥ ६७ ॥

तथा चित्रकूटे पर्वते ।

रक्षोऽभिचारचरुभाण्डमिव स्तनं यो
देव्या विदेहदुहितुर्विददार काकः ।
ऐषीकमस्त्रमधिकृत्य तदा तमक्ष्णा
काणीचकार चरमो रघुराजपुत्त्रः ॥ ६८ ॥

इति द्वितीयमभिज्ञानम् ।

मनःशिलायास्तिलकं तथा मे गण्डस्थले पाणितले च घृष्टम् ।
स्मरेति विज्ञानमिदं तृतीयं जीवाम्यहं राघव ! माससात्रम् ॥६९॥

---

बोद्धव्यः सततं बुधैः" इत्युक्तेः तस्येत्यध्याहृतेनान्वयः समीचीनतया सङ्गच्छते इति सुधीभिर्विभाव्यम् । शार्दूलविक्रीडितं वृत्तम् ॥६६॥

सीतेति । कालव्यालवधूरिव कृष्णसर्पकामिनीव शत्रोः रावणस्य धूमशिखा दहनाग्नेरिति भावः, सीता शिरोरत्नं शिरःस्थितं रत्नं स्वामिने रामाय विज्ञायते अनेनेति विज्ञानम् अभिज्ञानचिह्नं ददौ अर्पितवती, हनूमत्करे इति शेषः । अनुष्टुप् वृत्तम् ॥ ६७ ॥

रक्षोऽभिचारेति । १०० पृष्ठायां ३० श्लोके प्राग् व्याख्यातम् ॥ ६८ ॥

मनःशिलाया इति । हे राघव ! तथा पाणितले करतले, तवेति शेषः, घृष्टं मृदितं मनःशिलायाः धातुविशेषस्य तिलकं मे मम गण्डस्थले कपोलतले, त्वया रचितमिति शेषः, स्मर, इदञ्च तृतीयं विज्ञानम् । अहं माससात्रम् एकमेव मासं जीवामि । एतन्मध्ये मदुद्धारार्थं यत्नः करणीयः अतःपरं वृथा प्रयत्न इति भावः । उपजाति वृत्तम् ॥ ६९ ॥

फलान्यपि ददाति ।

श्रीमद्रामपदारविन्दयुगले दातव्यमेकं फलं
सैन्येभ्यो युगले फले, कपिपतावेकं सुरम्यं फलम् ।
एकञ्चापि फलं ततस्तदनुजे देयं शुभाशीःशतं,
पश्चात् सैन्यनिराकुलप्रकृतिना भोक्तव्यमेकं त्वया ॥ ७० ॥

समुद्रतरणे तव कीदृग्व्यवसाय इति पृष्टो हनूमान् ।

तव प्रसादात् पवनप्रसादात्तवैव भर्त्तुश्चरणप्रसादात् ।
त्रिभिः प्रसादैरनुकूलितोऽहं व्यलङ्घयं गोष्पदवत् समुद्रम् ॥ ७१ ॥

सीतासम्भाषणान्ते पवनसुतवरः काननं भङ्क्तुकामो
व्याजेनापि द्विजोऽभून्नलितरदनखः शीर्णकायोऽतिवृद्धः ।

---

श्रीमदिति । एकं फलं श्रीमतो रामस्य पदारविन्दयुगले दातव्यं, युगले फले फलद्वयमित्यर्थः, सैन्येभ्यः, दातव्ये इति शेषः, एकं सुरम्यं फलं कपिपतौ सुग्रीवे, ततोऽनन्तरं तदनुजे लक्ष्मणे एकञ्च फलं तथा शुभाशिषां शतमपि देयम् । पश्चात् सैन्येषु मध्ये निराकुला अव्याकुला,धीरेत्यर्थः,प्रकृतिः स्वभावो यस्य तथाभूतेन त्वया एकं फलं भोक्तव्यम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७० ॥

तवेति । तव प्रसादात् अनुग्रहात् पवनस्य पितुरिति भावः, प्रसादात्, तथा तव भर्त्तुः रामस्य चरणप्रसादात् इत्येवं त्रिभिरेव प्रसादैः अनुकूलितः आनुकूल्यं नीतः अहं समुद्रं गोष्पदवत् गोष्पदमिव व्यलङ्घयं लङ्घितवानस्मीत्यर्थः । उपेन्द्र-वज्रा वृत्तम् ॥ ७१ ॥

सीतेति । पवनसुतवरः हनूमान् सीतासम्भाषणान्ते सीतया संलपनानन्तरं काननं प्रमदवनं भङ्क्तुकामः भङ्क्तुमिच्छुः

श्वेतो मुण्डोऽपि भूत्वा वननिकटगतो भाषते मन्दमन्दं
भ्रातर्युष्मत्प्रसादात् पतदमृतफलं किञ्चिदभ्यर्थये च ॥ ७२ ॥

हनूमता भग्ने प्रमदवने रावणं प्रति उद्यानपालः ।

यत्रारण्ये वहति सततं मारुतो मन्दमन्दं
सूर्यो यत्र त्रसति, चकितस्तोयदस्तोयदाने ।
यत्प्राचीरे पतति सहसा याति वै विश्वकर्म्मा
तत्तेऽरण्यं ललितमधुना वानरेकेण भग्नम् ॥ ७३ ॥

---

सन्, अरण्यनिर्भङ्क्तुकाम इति पाठस्तु प्रामादिक इति परित्यक्तः, व्याजेन छद्मना गलितरदनखः पतितदन्तनखः शीर्णकायः कृशतनुः अतिवृद्धः श्वेतः शुभ्रवर्णः मुण्डोऽपि मुण्डितोऽपि द्विजो ब्राह्मणः अभूत्। वननिकटगतः काननसन्निहितश्च भूत्वा मन्दमन्दं शनैः शनैः भाषते कथयति, हे भ्रातः ! उद्यानपाल ! इति शेषः, युष्माकं प्रसादात् अनुग्रहात् पतत् स्वयं विगलत् अमृतफलं सुधासदृशं फलं किञ्चित् अल्पमात्रमित्यर्थः, अभ्यर्थये च प्रार्थये। स्रग्धरा वृत्तम् ॥ ७२ ॥

यत्रेति। यत्र अरण्ये उद्याने मारुतः वायुः सततं मन्दमन्दं न तु भङ्गभयात् सातिवेगमिति भावः, वहति, यत्र सूर्य्यः त्रसति बिभेति समधिकतापदाने वृक्षाणां शोषणादिति भावः, तोयदः मेघः तोयदाने जलवर्षणे चकितः संभ्रान्तः, भवतीति शेषः, अयथा वर्षणभयादिति भावः, यस्य अरण्यस्य प्राचीरे प्राकारे पतति भग्ने सति विश्वकर्म्मा सहसा झटिति याति, संस्कारार्थमिति शेषः, तव अविदित एवेति भावः, तत् ते तव ललितं सुन्दरम् अरण्यं प्रमोदकाननम् अधुना एकेन वानरेण भग्नं दलितम्। मन्दाक्रान्ता वृत्तम् ॥ ७३ ॥

देवाकर्णय कर्कशेन कपिना केनापि केलीवने
खेलद्वालधिचालिता विटपिनः साटोपमुत्पाटिताः ।
तत्रान्ये वनपालकाः सरभसं सर्वेऽपि निर्वापिता-
स्तद्वार्त्ताकथनाय केवलमहं दैवेन संरच्चितः ॥ ७४ ॥

इत्याकर्ण्य रावणचेष्टा ।

हन्तीति ज्वलितः क्रुधा, कपिरिति व्रीड़ानमत्कन्धरो
हेलोल्लङ्घितवाहिनीपतिरिति शङ्काचलत्कुण्डलः ।
रामस्यायमितीर्ष्यया कलुषितो, लङ्कामुपेत्योद्भटं
विक्रामत्यनिलात्मजे दशमुखः कां कां दशां नो गतः ? ॥ ७५ ॥

---

देवेति । हे देव ! आकर्णय शृणु, केनापि कर्कशेन निष्ठुरेण कपिना केलीवने क्रीड़ोद्याने खेलता चलता बालधिना लाङ्गूलेन चालिताः सञ्चालनं नीताः विटपिनः तरवः साटोपं सवेगं यथा तथा उत्पाटिताः उन्मूलिताः । तत्र तस्मिन् व्यापारे सर्वेऽपि वनपालकाः उद्यानपालाः सरभसं सवेगं निर्वापिताः निर्वाणं नीताः, निहता इति यावत्, अहं केवलं तद्वार्त्ताकथनाय तत्समाचारदानाय दैवेन भाग्येन संरच्चितः सञ्जीवितः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७४ ॥

हन्तीति । अनिलात्मजे हनूमति लङ्कामुपेत्य आगत्य उद्भटम् उत्कटं यथा तथा विक्रामति विक्रमं प्रकटयति सति दशमुखो रावणः कां कां दशाम् अवस्थां नो गतः ? न प्राप्तः ? तथाहि हन्ति, अरण्यपालानिति शेषः, इति हेतोः क्रुधा कोपेन ज्वलितः, कपिर्वानरः इति व्रीड़या लज्जया नमन्ती कन्धरा ग्रीवा यस्य तथोक्तः, वानरेण ममैतदरण्यमेवं कृतमिति लज्जया अधोवदन इत्यर्थः । हेलया अवलीलया उल्लङ्घितः

अत्रान्तरे सीताहनूमतो रहस्ये त्रिजटया उक्ता रावणचेष्टा ।

मुद्रा मर्कटकेन रामनिकटादागत्य दत्ता करे
सीताया इति सम्भ्रमात् त्रिजटया प्रोक्तैश्च लङ्केश्वरैः ।
किं किं किं किमिति ब्रुवद्भिरनिशं सिंहासनादुत्थितै-
रक्षोमुख्यसुतस्तमेव हि कपिं धर्त्तुं नियुक्तीकृतः ॥ ७६ ॥

रावणाज्ञया चलति अक्षे कुमारे पारिपार्श्विकः ।

प्राकारतोरणमयीं पुरमप्यलङ्घ्यां
लङ्कामिमां विशति कोऽपि कपिप्रवीरः ।

---

वाहिनीपतिः नदीनाथः, समुद्र इत्यर्थः येन तथाभूतः अयमिति हेतोः शङ्कया चलन्ति कुण्डलानि यस्य तथाभूतः । अयं वानरः रामस्य, दूत इति शेषः, इतीर्ष्यया विद्वेषेण कलुषितः अन्तर्व्यथित इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७५ ॥

मुद्रेति । मर्कटकेन वानरेण रामनिकटात् आगत्य सीतायाः करे हस्ते मुद्रा अभिज्ञानमङ्गुरीयकमित्यर्थः, दत्ता इति त्रिजटया तदाख्यया राक्षस्या सम्भ्रमात् सन्त्रासात् प्रोक्तैः अभिहितैः लङ्केश्वरैः रावणैः, बहुवचनं गौरवार्थम् ; किं किं किं किमिति अनिशं पुनः पुनः ब्रुवद्भिः सिंहासनात् उत्थितैः सद्भिः तमेव कपिं वानरं धर्त्तुं रक्षसां मुख्यः श्रेष्ठः सुतः पुत्रः, अक्षो नामेति शेषः, अनियुक्तः नियुक्तः कृतः नियुक्तीकृतः प्रेषित इत्यर्थः, अभूततद्भावे च्विप्रत्ययः ; शार्दूलविक्रीड़ितं वृत्तम् ॥ ७६ ॥

प्राकारेति । कोऽपि कपिप्रवीरः वानरमुख्यः प्राकार-तोरणमयीं प्राकारेण परिवेष्टितां तोरणैश्च परिशोभितामिति भावः, अलङ्घ्यां दुर्लङ्घ्यामपि इमां लङ्कां पुरं नगरीं विशति

तत्सम्मुखं प्रचलति स्वयमक्षनामा
नन्वेष राक्षसपतिः कुपितः कुमारः ॥ ७७ ॥

अथ अक्षे पतिते गच्छति च शक्रजिति पारिपार्श्विकः।

हत्वा कथञ्चिदधिराजकुमारमक्षं
रे वानरापसद! कुत्र पलायितोऽसि।
त्वां हन्तुमिच्छति दशाननशासनेन
दर्पोद्धतो धृतधनुर्ननु मेघनादः ॥ ७८ ॥

रामाभ्यागमनं निवेद्य सुचिरादाश्वास्य सीतां ततः
तत्सीमन्तमणिं तदा रघुपतिः प्रत्यायनायाददे।
भङ्क्त्वाऽशोकवनं निहत्य सहसा चाक्षादिकान् राक्षसान्
द्रष्टुं रावणमात्मबन्धविषये सौम्योऽभवन्मारुतिः ॥ ७९ ॥

---

लङ्घयति, ननु भोः एषः अक्षनामा राक्षसपतिः रावणस्य कुमारः कुपितः सन् स्वयं तत्सम्मुखं तदभिमुखं प्रचलति प्रधावति। वसन्ततिलकं वृत्तम् ॥ ७७ ॥

हत्वेति। रे वानरापसद! वानराधम! कथञ्चित् केनापि प्रकारेण अधिराजस्य रावणस्य कुमारम् अक्षं हत्वा विनाश्य कुत्र पलायितः प्रधावितः असि? ननु भोः दर्पेण अहङ्कारेण उद्धतः उग्रः मेघनादः दशाननस्य रावणस्य शासनेन आज्ञया धृतधनुः धनुर्धरः सन् त्वां हन्तुम् इच्छति उद्यच्छतीत्यर्थः। वसन्ततिलकं वृत्तम् ॥ ७८ ॥

रामेति। मारुतिर्हनूमान् रामस्य अभ्यागमनं युद्धार्थमत्र प्रयाणं निवेद्य सुचिरात् बहुक्षणमित्यर्थः, सीताम् आश्वास्य प्रबोध्य, सान्त्वयित्वेत्यर्थः, तदा तस्मिन् काले रघुपतेः रामस्य

( अत्र पाश्चात्यपुस्तकीयः पाठः )

इत्युक्तो रजनीचरस्य हनुमानुद्भिद्य लीलावनं
वीरं तत्सुतमक्षमात्तपरिघाघातैर्जघानागतम् ।
तत्कोपारुणलोचनेन्द्रजयिना प्राङ्निष्फलत्वात् धृत-
ब्रह्मास्त्रेण विगर्हितेन विधिना बद्धो विदग्धः कपिः ॥ ८० ॥

---

प्रत्यायनाय विश्वासार्थं तस्याः सीतायाः सीमन्तमणिं शिरोरत्नं आददे जग्राह । (ततः) सहसा अशोकवनं भङ्क्त्वा अक्षादिकान् राक्षसान् निहत्य च रावणं द्रष्टुम् आत्मनः स्वस्य बन्धविषये सौम्यः सुसाध्य इति भावः, अभवत् नागपाशबद्धः रावणसकाशं नीत इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७९ ॥

इतीति । इतीत्थम् उक्तः सम्भाषितः, सीतयेति शेषः, हनूमान् रजनीचरस्य रावणस्य लीलावनं क्रीड़ोद्यानम् उद्भिद्य उच्चैरतिशयेनेत्यर्थः, भङ्क्त्वा आत्तस्य गृहीतस्य परिघस्य अर्गलस्य आघातैः प्रहारैः आगतं वनभङ्गश्रवणात् कपिनिधनार्थमुपस्थितं वीरं तस्य रावणस्य सुतम् अक्षं जघान हतवान् । तत् तस्मात् कोपेन अरुणे रक्ते लोचने यस्य स चासौ इन्द्रजयी मेघनादश्चेति तेन प्राक् प्रथमं निष्फलत्वात् हनूमति विफलत्वात् विगर्हितेन विनिन्दितेन धृतब्रह्मास्त्रेण धृतेन ब्रह्मपाशेन विधिना हेतुना विदग्धः चतुरः, विज्ञ इत्यर्थः, कपिः बद्धः । अत्रेयं कथा, पूर्वं ब्रह्मणा मेघनादाय दत्तो ब्रह्मपाशः एतेन त्वं कपिं बध्नीहीति । रुद्रावतारे तु हनूमति स पाशो निष्फलो जातः । ततो मेघनादेन ब्रह्मणो गर्हा कृता, ततश्च ब्रह्मणा प्रार्थितो हनूमान् स्वयं तत्सम्मानार्थं बद्ध इति ॥ ८० ॥

राव । रे रे दूत कपे ! किमिव चरितं वारां निधिं दुस्तरं
लङ्घित्वा जलजन्तुभिः परिवृतं भीमं तरङ्गोत्करैः ? ।
आयातोऽसि विना रथं कथमिह प्रस्थापितः केन वा ?
ब्रूहि त्वं न हि वध्य एवमभयः, किंनामधेयो भवान् ? ॥८१॥

हनू । श्रीरामेण सलक्ष्मणेन जयिना श्रीचित्रकूटे स्थितः
सीतान्वेषणकार्य्यसाधनविधौ प्रस्थापितो यत्नतः ।
लब्ध्वा चैव वरं चिरात् पुरभिदः सर्वत्रगामी स्वयं
वेत्सि त्वं पवनात्मजो दशमुख ! श्रीमान् हनूमान् कपिः ॥८२॥

---

रे रे इति । रे रे इति अवज्ञासूचकसम्बोधनम् । रे रे दूत ! कपे ! वानर ! जलजन्तुभिः परिवृतं तरङ्गाणाम् उत्करैः समूहैः भीमं भीषणम् अत एव दुस्तरं दुर्लङ्घ्यमेव वारां निधिं समुद्रं लङ्घित्वा उत्तीर्य्य किं चरितम् ? किं कृतम् ? यदि च त्वया कथञ्चिल्लङ्घित एषः किन्तु कदाचित् मैवं साहसं कृथा इति निर्भर्त्सनोपदेशः । इह लङ्कायां रथं विना कथम् आयातः आगतः असि ? केन वा प्रस्थापितः प्रेषितः ? त्वमिति शेषः, भवान् किं-नामधेयः किमाख्यः ? न हि वध्यः नैव मया हन्तव्य एव, अतः त्वम् अभयः निर्भयः सन् ब्रूहि कथय । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

श्रीरामेणेति । सलक्ष्मणेन जयिना विजयता श्रीरामेण श्रीचित्रकूटे श्रीमद्विचित्रशृङ्गशालिनि, ऋष्यमूके इति शेषः, स्थितः पवनात्मजः वायुसुतः श्रीमान् हनूमान् नाम कपिरहं सीताया अन्वेषणमेव कार्य्यं तस्य साधनविधौ निर्वाहव्यापारे यत्नतः सादरमित्यर्थः, प्रस्थापितः प्रेषितः । हे दशमुख ! रावण ! त्वं चिरात् दीर्घकालं तपश्चरणादिति भावः, पुरभिदः

हत्वा वालिमहाबलं कपिचमूमाश्वास्य सुग्रीवकं
राजानं कृतिनं सदा विजयिनं सख्युः सदानन्दिनम् ।
कृत्वा चैव विशेषदेवनिवहाख्यानस्य चिन्तान्वितः ।
श्रीरामो जनकात्मजाहरणतः कालोपमो राजते ॥ ८३ ॥

रावणहनूमतोः उक्तिप्रत्युक्ती ।

रे रे वानर मारुते ! किमथवा वाली बली नेतरो ?
दूतो दाशरथेरहं, कथय मे वीरस्य किं रे कपे ! ? ।
देवालोड़नखेलने च चरितं किं तादृशं वालिनः ?
रे ! यत्रेह मतिर्मम प्रभवति, प्रेक्षा पुनस्तस्य किम् ॥ ८४ ॥

---

शम्भोः सकाशात् वरं लब्ध्वा सर्वत्रगामी सन् स्वयं वेत्सि जानासि, सर्वगामितया तव किमपि अगोचरं नास्ति तदवश्यं त्वयाहं विदित एवेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥८२॥

हत्वेति । श्रीरामः बाली महाबलः वालिमहाबलः तं महाबलं वालिनमित्यर्थः, यद्वा वालिनः महत् बलं महाबलं हत्वा विनाश्य कपिचमूं वानरसेनाम् आश्वास्य सान्त्वयित्वा सदा कृतिनं कार्य्यदक्षं विजयिनं सख्युः रामस्य, सख्ये इति वा पाठः, सदानन्दिनं सदानन्दविधायकं सुग्रीवं राजानं कृत्वा च विशेषात् देवनिवहस्य देववृन्दस्य यत् आख्यानं राक्षसवंशनिधनार्थप्रवृत्तिवचनमिति भावः, तस्य चिन्तया अन्वितः युक्तः, द्राक् कथं राक्षसवंशमुच्छिनद्मीति चिन्तित इति भावः, पुनश्च जनकात्मजायाः सीतायाः हरणतः हरणात् कालोपमः यमसदृशः राजते द्योतते । शार्दूलविक्रीड़ितं वृत्तम् ॥८३॥

रे रे इति । रे रे मारुते मरुत्तनय ! वानर ! किम् ?, उच्यते त्वयेति शेषः, अथवा पक्षान्तरे बाली बली बलवान्

रे रे वानर! को भवानहमरे! त्वत्सूनुहन्ताऽऽहवे
दूतोऽहं खरखण्डनस्य जगतां कोदण्डशि(दी)चागुरोः।
मद्दोर्दण्डकठोरताड़नविधौ कोऽसौ त्रिकूटाचलः
को मेरुः क्व च रावणौघगणना कोटिषु कीटायते ॥ ८५ ॥

---

कथमिव गण्यते इति भावः, इतरः, जनः इति शेषः, न गण्यते, वलवान् इति शेषः इति रावणोक्तिः। अहं दाशरथेः रामस्य दूतः। इति हनूमदुक्तिः। अथ रावण आह, रे कपे! वीरस्य मे मम किम्? तेनेति शेषः, कथय, यच्च बालिनो महा-बलत्वमुक्तं तत्र च वच्मि, देवानाम् आलोड़नं ध्वंसनमिव खेलनं क्रीड़नं, ममेति शेषः, तत्र तादृशं तथाविधं चरितं विचेष्टितं बालिनः किम्? अस्तीति शेषः, नास्त्येवेत्यर्थः। रे! वानर! यत्र विषये इह जगति मम स्मृतिः प्रभवति समर्था भवति तस्य बालिनः प्रेचा दूरदर्शिता किं पुनः तत्र, प्रभवति इति शेषः, बालिनो मम च महदन्तरमिति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ८४ ॥

रे रे इति। रे रे वानर! भवान् कः? अरे इति अवज्ञा-सूचकं सम्बोधनम्, अरे रावण! यद्वा हे अरे शत्रो! अहम् आहवे युद्धे तव सूनोः अक्षस्य हन्ता खरखण्डनस्य खर-राक्षसघातिनः जगतां कोदण्डशिक्षागुरोः धनुर्विद्याशिक्षाया-माचार्य्यस्य, शिक्षेत्यत्र दीक्षेति वा पाठः; रामस्येति शेषः, दूतः। मम दोर्दण्डयोः बाहुदण्डयोः कठोरं कर्कशं यत् ताड़नं प्रहारः तदेव विधिर्व्यापारः तत्र असौ त्रिकूटाचलः त्रिकूटपर्वतः यस्योपरि लङ्का वर्त्तते इति भावः, कः? मेरुः सुमेरुगिरिः कः? न गण्यते इति भावः, रावणानाम् ओघ-

एकोऽहं पवनात्मजो दशमुख ! त्वञ्चापि कोटीश्वर-
स्त्वां जित्वा समरे प्रभोः प्रणयिनीं सीताञ्च नेतुं क्षमः ।
किन्तु प्रौढ़तया पुरा भगवता रामेण सुग्रीवतो
दत्त्वा दक्षिणपाणिना वसुमतीं त्वां हन्तुमुक्तं वचः ॥ ८६ ॥
रे रे रावण ! राक्षसाधम ! पशो ! मूर्खोऽसि मूर्खाधम !
गर्वं वर्वर ! मुञ्च मुञ्च झटिति प्रीत्या वयं (हितं) ब्रूमहे ।
मूर्ध्ना सेवय रामचन्द्रचरणौ दत्त्वा पुरो जानकीं
तस्माद्राज्यमकण्टकं कुरु चिरं पुत्त्रेण पौत्त्रेण वै ॥ ८७ ॥

---

गणना समूहसंख्यानञ्च क्व ? रावणस्य गणनेति पाठान्तरं, कोटिस्तु, रावणानामिति शेषः, कीटायते कीट इवाचरति, एकस्तावद्रावणो दूरे तिष्ठतु बहवोऽपि न मया गण्यन्ते इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८५ ॥

एक इति । रे दशमुख ! पवनात्मजोऽहं एकः, त्वञ्च कोटीश्वरः कोटिसेनानायक इत्यर्थः, अहं त्वां समरे संग्रामे जित्वा प्रभोः स्वामिनः प्रणयिनीं सीतां नेतुञ्च क्षमः शक्तः । किन्तु भगवता सर्वशक्तिमता रामेण पुरा पूर्वं प्रौढ़तया प्रगल्भतया सुग्रीवतः सुग्रीवाय वसुमतीं पृथिवीं, राज्यमित्यर्थः, दत्त्वा दक्षिणपाणिना त्वां हन्तुं वचः उक्तं स्वयमिति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८६ ॥

रे रे इति । रे रे रावण ! राक्षसाधम ! पशो ! मूर्खाधम ! मूर्खः मूढ़ः असि, रे वर्वर ! बालिश ! झटिति शीघ्रं गर्वं मुञ्च त्यज, मुञ्च त्यज, प्रीत्या प्रणयेन वयं, हितमिति पाठान्तरं, ब्रूमहे कथयामः, पुरः अग्रतः जानकीं दत्त्वा प्रत्यर्प्य मूर्ध्ना शिरसा रामचन्द्रस्य चरणौ सेवय आराधय तस्मात्

आत्मानं परिरचितुं यदि भवान् पुत्त्रञ्च पौत्त्रादिकं
भ्रातुर्वर्गकुटुम्बकं परिजनञ्चान्यं तथा सैनिकम् ।
राज्यञ्चापि समुज्ज्वलं दशशिरः ! काङ्क्षत्यलं स्वेच्छया
श्रीरामाय महात्मने विजयिने तद्दीयतां मैथिली ॥ ८८ ॥
यावद्दाशरथेर्न पश्यसि मुखं यावन्न वारां निधिः
बद्धो यावदियञ्च वानरबलाक्रान्ता न लङ्कापुरी ।
यावत् सोदरबन्धुपुत्त्रसुहृदां मृत्युं न चालोकसे
तावद्रावण ! लोकनाथदयिता सीता स्वयं दीयताम्' ॥ ८९ ॥
किं बहुना ।

---

रामचन्द्रचरणसेवनात् चिरं पुत्रेण पौत्रेण वै सह अकण्टकं राज्यं कुरु भुङ्क्ष्वेति यावत् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८७ ॥

आत्मानमिति । हे दशशिरः ! रावण ! भवान् आत्मानं पुत्त्रं पौत्रादिकं च भ्रातुः वर्गस्य स्वजनस्य कुटुम्बकं परिजनं च तथा अन्यं सैनिकं सेनासंक्रान्तपुरुषवर्गं समुज्ज्वलं महासमृद्धं राज्यञ्चापि अलम् अतीव काङ्क्षति यदि, तत् तदा महात्मने विजयिने श्रीरामाय मैथिली सीता स्वेच्छया दीयताम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८८ ॥

यावदिति । यावत् दाशरथेः रामस्य मुखं न पश्यसि नावलोकयसि, यावच्च वारां निधिः समुद्रः न बद्धः, यावच्च इयं लङ्कापुरी वानराणां बलैः न आक्रान्ता, स्यादिति शेषः, यावत् सोदराणां बन्धूनां ज्ञातीनां पुत्राणां सुहृदां मित्राणाञ्च मृत्युं न आलोकसे च न पश्यसि च, हे रावण ! तावत् लोकनाथस्य रामस्य दयिता प्रिया सीता स्वयम् अप्रार्थनायामिति भावः, दीयताम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८९ ॥

तावल्लङ्केश्वरो राजा, यावन्नायाति राघवः ।
आयाते राघवे वीरे लङ्कां लङ्केश्वरः कुतः ? ॥ ९० ॥

अत्रावसरे क्रुद्धे रावणे विभीषणवाक्यम् ।

वैरूप्यमङ्गेषु कशानिपातो मौण्ड्यं तथा लक्षणसन्निवेशः ।
एतान् बधानर्हति रूक्षवादी शास्त्रेषु दूतस्य बधो न दृष्टः ॥ ९१ ॥

अपि च । कपीनां किल लाङ्गूलमिष्टमेकं विभूषणम् ।
तदस्य दीप्यतामाशु तेन दग्धेन गच्छतु ॥ ९२ ॥

---

तावदिति । तावत् राजा लङ्केश्वरः, शोभते इति शेषः, यावत् राघवः रामः न आयाति नागच्छति, राघवे वीरे लङ्काम् आयाते सति लङ्केश्वरः कुतः ? नेव स्थास्यतीति भावः । अनुष्टुप् वृत्तम् ॥ ९० ॥

वैरूप्यमिति । रूक्षवादी कर्कशवादी, कटुभाषीत्यर्थः, दूतः अङ्गेषु वैरूप्यं कशानिपातः, "अश्वादेस्ताड़नी कशा" इत्यमरः, तस्या निपातः तत्प्रहार इत्यर्थः, मौण्ड्यं सर्वकेशमुण्डनं तथा लक्षणस्य चिह्नस्य सन्निवेशः दुष्कृतसूचकचिरस्थायिशरीर-चिह्नीकरणमिति भावः, इत्येतान् बधान् दण्डानित्यर्थः, अर्हति प्राप्नोति, शास्त्रेषु दूतस्य बधः हननं न दृष्टः नावलोकितः । इन्द्रवज्रा वृत्तम् ॥ ९१ ॥

कपीनामिति । कपीनां वानराणां लाङ्गूलम् एकं केवलं मुख्यं वा, "एके मुख्यान्यकेवला" इत्यमरः । इष्टं प्रियं विभूषणम् अलङ्कारः, अस्य कपेः तत् लाङ्गूलम् आशु शीघ्रं दीप्यतां प्रज्वाल्यतां, तेन लाङ्गूलेन दग्धेन गच्छतु स्वदेशं प्रतीति शेषः । अनुष्टुप् वृत्तम् ॥ ९२ ॥

ईषत् सज्जनमैत्रीव नाभिद्यत कपेस्तनुः ।
निहता चन्द्रहासेन रावणेनातिरंहसा ॥ ८३ ॥

रावणस्तथाज्ञापयति ।

छेत्तुं तं जनितोद्यमः, चितिभुजां बध्यो न दूतो भवेत्
इत्याकर्ण्य विभीषणस्य वचनं क्रुद्धस्तदा रावणः ।
बद्ध्वा बालधिवल्लरीं बहुविधैर्वासोभिराज्यप्लुतै-
र्दत्त्वा वह्निमदीपयद्धनुमतः कर्त्तुं विरूपं वपुः ॥ ८४ ॥

वह्निर्बभौ वानरपुच्छजन्मा प्रदह्य लङ्कां खमिवोत्पतिष्णुः ।
रामाद् भयं प्राप्य किल प्रतापः पलायमानो दशकन्धरस्य ॥८५॥

रावणं प्रति हनूमान् कथयति ।

अग्निः प्रज्वलितः, समादिश भृशं वर्षन्तु धाराधराः,
वातो वाति, न वास्यति ध्रुवमसौ देवस्त्वदाज्ञावशः ।

---

ईषदिति । रावणेन अतिरंहसा अतिवेगेन चन्द्रहासेन असिना निहता कपेः हनूमतः तनुः सज्जनमैत्रीव साधुजन-सख्यमिव ईषत् अल्पमपि न अभिद्यत न भिन्ना ॥ ८३ ॥

छेत्तुमिति । तं हनूमन्तं छेत्तुं हन्तुं जनितोद्यमः समुद्यत इत्यर्थः, क्रुद्धो रावणः तदा दूतः चितिभुजां राज्ञां बध्यः न भवेत् इति विभीषणस्य वचनम् आकर्ण्य श्रुत्वा हनूमतो वपुः विरूपं कर्त्तुं बालधिवल्लरीं लाङ्गूलमञ्जरीं बहुविधैः आज्यप्लुतैः घृताक्तैः वासोभिः वस्त्रैः बद्ध्वा वह्निं दत्त्वा, तत्रेति शेषः, अदीपयत् ज्वालयामास । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८४ ॥

वह्निरिति । वानरस्य हनूमतः पुच्छजन्मा लाङ्गूलभवः वह्निः लङ्कां प्रदह्य प्रकर्षेण भस्मीकृत्य रामात् भयं प्राप्य पलाय-मानः दशकन्धरस्य रावणस्य खम् आकाशम् उत्पतिष्णुः प्रताप इव बभौ किल शुशुभे खलु । उपजाति वृत्तम् ॥ ८५ ॥

अग्निरिति । अग्निः प्रज्वलितः, समादिश आज्ञापय,

इत्थं सुव्यथकोक्तिभिर्हनुमतो लङ्कापतेर्मानसं
दग्धं यादृशमक्रमेण न तथा दग्धापि लङ्कापुरी ॥ ८६ ॥

पलानि भुक्त्वा चपलः पलाशिनां
हुताशनस्तृप्तिमुपागतः परम् ।
विराजते स्म प्रतियातनाच्छलात्
जलानि चाब्धौ तृषितः पिबन्निव ॥ ८७ ॥

रावणः स्वगतम् । यद्ययं रुद्रावतारो मारुतिस्तर्हि किमिति रुद्रभक्तस्य मे नगरीं दहति ? अहह ! ज्ञातम् ।

तुष्टः पिनाकी दशभिः शिरोभिस्तुष्टो न चैकादशमो हि रुद्रः ।
अतो हनूमान् दहतीव कोपात् पङ्क्तेर्हि भेदो न पुनः शिवाय ॥८८॥

---

धाराधरानिति शेषः, ते धाराधराः मेघाः भृशम् अत्यर्थं वर्षन्तु, वातो वाति वहति, ध्रुवं निश्चितं न वास्यति, पवन इति शेषः, कुतः ? असौ देवः वायुः तव आज्ञावशः आज्ञाधीनः इत्थं हनूमतः सुव्यथकोक्तिभिः सुष्ठु व्यथादायिनीभिः उक्तिभिः कथनैः लङ्कापतेः रावणस्य मानसं यादृशं यथा अक्रमेण अतिशयेनेत्यर्थः, दग्धं लङ्कापुरी नापि नैव तथा दग्धा । शार्दूलविक्रीडितं वृत्तम् ॥ ८६ ॥

पलानीति । चपलो हुताशनः पुच्छाग्निः पलाशिनां क्रव्यादानां राक्षसानां पलानि मांसानि भुक्त्वा परां तृप्तिं सौहित्यम् उपागतः प्राप्तः अतएव तृषितः तृषाकुलः प्रतियातनाच्छलात् प्रतिबिम्बव्याजेन अब्धौ जलधौ जलानि पिबन्निव विराजते स्म शुशुभे च ॥ ८७ ॥

तुष्ट इति । दशभिः शिरोभिः महद्भिरिति भावः, पिनाकी रुद्रः, दशसंख्यक इति भावः, तुष्टः, एकादशमः रुद्रः न चैव

अत्रान्तरे जनानां वितर्कः।

अब्धिः किं बड़वानलेन ? तरणेर्बिम्बेन किं वा वियत् ?
मेघः किं चपलाञ्चलेन ? शशिभृत् किं भालनेत्रेण वा ?।
कालः किं क्षयवह्निनेन्द्रधनुषा धाराधरः किं महान् ?
मेरुः किं ध्रुवमण्डलेन स ? कपिः पुच्छेन खे राजते ॥९९॥

हनू। रामाग्रे न च लक्ष्मणस्य पुरतः कृत्वा न चैवाहवं
सीता निस्त्रप ! वेपमानहृदया चौर्य्येण नीता त्वया।

---

तुष्टः तदप्राप्तेरिति भावः, अतः कारणात् हनूमान् एकादश-रुद्रावतार इति भावः, कोपात् दहतीव, हि यतः पङ्क्तेः सङ्घस्य सम्मुखवर्त्तिनामिति भावः, मध्ये भेदः अन्यतमस्य भेदकरणं पुनः शिवाय मङ्गलाय न, भवतीति शेषः। सामान्येन विशेषस्य उत्प्रेक्षितार्थस्य समर्थनादर्थान्तरन्यासः। तदनयोरुत्प्रेक्षार्था-न्तरन्यासयोरङ्गाङ्गिभावः सङ्करः। उपजाति वृत्तम् ॥ ९८ ॥

अब्धिरिति। अब्धिः समुद्रः बड़वानलेन किम् ? वियत् आकाशम्, अम्बरमिति पाठान्तरं, तरणेः सूर्य्यस्य बिम्बेन मण्डलेन किंवा ? मेघः चपला विद्युत् तस्या अञ्चलेन प्रान्त-देशेन किम् ? शशिभृत् शङ्करः भालनेत्रेण ललाटचक्षुषा किंवा ? कालः कल्पान्तः क्षयवह्निना युगान्तानलेन किम् ? महान् धाराधरः मेघः इन्द्रधनुषा किम् ? स प्रसिद्धः मेरुः सुमेरुगिरिः ध्रुवमण्डलेन उपरि दीप्यमानेनेति भावः, किम् ? कपिः पुच्छेन पुच्छलग्नानलेनेति भावः, खे आकाशे राजते द्योतते। अत्र निश्चयान्तः सन्देहः, तदुक्तं दर्पणे—"सन्देहः प्रकृते-ऽन्यस्य संशयः प्रतिभोत्थितः। शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा॥" इति। शार्दूलविक्रीडितं वृत्तम् ॥ ९९ ॥

प्रत्यक्षं तव दुर्म्मते ! वरगृहैः पूर्णा जनैरावृता
स्वर्णस्फाटिकरत्नमौक्तिकमयी लङ्का मया दह्यते ॥ १०० ॥

उल्कामुखानां भयविह्वलानां गृहे गृहे सञ्चरतां मुखेभ्यः
निर्गत्य वह्निर्द्विगुणप्रभावो ददाह लङ्कामनिवारितार्चिः ॥ १०१ ॥

राव । शीघ्रं रक्षत वाजिवारणगृहं शय्यागृहं श्रीगृहं
रत्नागारधनालयौ बलवता वातेन दीप्तोऽनलः ।
धूमव्याकुलनेत्रवक्त्रयुवतीवक्षःस्थलीताड़ना-
क्रन्दद्बालकवृद्धभीतवनिताहाहारवः श्रूयते ॥ १०२ ॥

---

रामाग्रे इति । रे निस्त्रप ! निर्लज्ज ! वेपमानहृदया भयात् कम्पमानचित्ता सीता त्वया चौर्य्येण तस्करवृत्त्या नीता लङ्कां प्रापिता, रामाग्रे लक्ष्मणस्य च पुरतः अग्रतः न चैव आहवं युद्धं कृत्वा नीतेत्यन्वयः । हे दुर्मते ! मया तव प्रत्यक्षं पुरतः वरगृहैः उत्तमभवनैः पूर्णा जनैः आवृता स्वर्णस्फाटिक-रत्नमौक्तिकमयी स्वर्णस्फटिकमणिमौक्तिकखचिता लङ्का दह्यते । शार्दूलविक्रीड़ितं वृत्तम् ॥ १०० ॥

उल्केति । वह्निः भयविह्वलानां भयार्त्तानां गृहे गृहे सञ्चरतां भ्रमताम् उल्कामुखानां शृगालविशेषाणां मुखेभ्यः निर्गत्य द्विगुणप्रभावः द्वैगुण्यप्राप्त इत्यर्थः, अत एव अनिवारि-तार्चिः दुर्वारज्वालः सन् लङ्कां ददाह भस्मीचकार । उपजाति वृत्तम् ॥ १०१ ॥

शीघ्रमिति । वाजिनाम् अश्वानां वारणानां हस्तिनाञ्च गृहं शय्यागृहं श्रीगृहं राजलक्ष्मीनिलयं राजकार्य्यालय-मित्यर्थः, रत्नागारधनालयौ रत्नभाण्डारं धनभाण्डारञ्च शीघ्रं रक्षत, यूयमिति शेषः । भृत्यान् प्रत्युक्तिः । बलवता प्रबलेन

श्रीलङ्कामवलोक्य घोरदहनैः सन्दह्यमानां भृशं
प्रोवाचेति वचांसि सर्ववदनैस्तोयार्थिलङ्केश्वरः ।
अग्रे नीरधिरम्बुधिर्निधिरपां पाथोनिधिः सम्भ्रमात्
अम्भोधिर्जलधिः पयोधिरुदधिर्वारां निधिर्वारिधिः ॥ १०३ ॥

निकुम्भ ! कुम्भोदर ! कुम्भकर्ण ! कुम्भैरलं केवलनामधेयैः ।
मन्दोदरीमन्दिरपावकोऽयं पानीयमानीय न कैर्विनीतः ॥१०४॥

---

वातेन वायुना अनलः दीप्तः प्रज्वलितः, तथेति शेषः, यथा धूमेन व्याकुले नेत्रे यस्य तादृशं वक्त्रं वदनं यस्याः तथाभूता या युवती तस्याः वक्षःस्थल्यां या ताड़ना तया क्रन्दतां बालकानां वृद्धानां भीतानां वनितानां स्त्रीणाञ्च हाहारवः हाहा किमिदमापतितमित्यार्त्तनादः श्रूयते । शार्दूलविक्रीड़ितं वृत्तम् ॥ १०२ ॥

श्रीलङ्कामिति । श्रीलङ्कां श्रीमतीं समृद्धामित्यर्थः, लङ्कां घोरैः महद्भिः, भीषणैरित्यर्थः, दहनैः अग्निभिः भृशमत्यर्थं सन्दह्यमानां सम्यक् पुनः पुनरतिशयेन वा भस्मीक्रियमाणाम् अवलोक्य तोयार्थी जलार्थी, पिपासाकुल इत्यर्थः, स चासौ लङ्केश्वरश्चेति तथोक्तः तृषार्त्तो रावण इत्यर्थः, सर्वैः दशभिरिति भावः, वदनैः सम्भ्रमात् भयजनितत्रासात् अग्रे पुरतः नीरधिः, अम्बुधिः, अपां निधिः, पाथोनिधिः, अम्भोधिः, जलधिः, पयोधिः, उदधिः, वारां निधिः वारिधिः, अस्ति किमिति शेषः, इति वचांसि प्रोवाच । शार्दूलविक्रीड़ितं वृत्तम् ॥१०३ ॥

निकुम्भेति । हे निकुम्भ ! हे कुम्भोदर ! हे कुम्भकर्ण ! केवलं नामधेयं कुम्भशब्दयुक्तमभिधानं येषां तैः कुम्भैः युष्माभिः अलं व्यर्थं, युष्मदाह्वानं विफलमिति यावत्, "अलं व्यर्थसमर्थयोः" इत्यमरः । कैरपि, मद्भृत्यैरिति शेषः, पानीयं जलम् आनीय अयं

मरुत्पुत्रस्त्वेकः कपिकटकरक्षामणिरसौ
समुद्यल्लाङ्गूलो ध्वज इव समाश्लिष्टगगनः ।
पुनः प्रत्यायास्यत्यहह कपिसैन्ये प्रचलिते
मुहुः प्रोचुर्नीचैर्भयचकितलङ्कापुरजनाः ॥ १०५ ॥

अत्रावसरे हनूमतश्चेष्टा ।

कापेयान्यकरोदसौ कवलितब्रध्नानि सद्यस्त्रुटद्-
बन्धानि प्रविमुग्धमैथिलसुताजीवातुभूतानि च ।
भग्नाशेषभटानि भर्त्सितदशग्रीवाणि बद्धानल-
ज्वालाप्रज्वलितस्वबालधिलतानिर्दग्धलङ्कानि च ॥ १०६ ॥

---

मन्दोदर्य्या मन्दिरं गृहं तस्य पावकः अग्निः न विनीतः ? न निर्वापितः ? । उपजाति वृत्तम् ॥ १०४ ॥

मरुदिति । असौ एकस्तु एक एव असहायो वा कपिकटकानां कपिसैन्यानां रक्षायां मणिः रत्नभूतः मरुत्पुत्रः पवनपुत्रः हनूमान् समाश्लिष्टगगनः आक्रान्तगगनः ध्वज इव समुद्यल्लाङ्गूलः ऊर्द्ध्वलाङ्गूलः सन् कपिसैन्ये वानरसैन्ये प्रचलिते युद्धयात्रासु आगते सति पुनः प्रत्यायास्यति प्रत्यागमिष्यति, अहह इति खेदे, भयचकिताः त्राससम्भ्रान्ताः लङ्कापुरजनाः इति वाक्यं नीचैः शनैः, अस्पष्टमिति यावत्, रावणभयादिति भावः, मुहुः वारं वारं प्रोचुः कथयामासुः । पदम् इति पाठे पदं वाक्यमिति वार्थः । शिखरिणी वृत्तम् ॥ १०५ ॥

कापेयानीति । असौ हनूमान् कवलितब्रध्नानि ग्रस्तसूर्य्यमण्डलानि सद्यः तत्क्षणं त्रुटन् बन्धः पूर्वोक्तब्रह्मपाशनियन्त्रणं येषु तानि प्रकर्षेण विमुग्धायाः राक्षसापचारात् मृतप्रायाया मैथिलसुतायाः सीतायाः जीवातुभूतानि जीवनौषधरूपाणि, समाश्वासकराणीति भावः, भग्नाः पलायिताः अशेषा भटाः

तथाऽशोकवने वायु-पुत्त्रः सीतान्तिकेऽब्रवीत्।
लङ्का दग्धा मया देवि! विदायो दीयतामिति॥ १०७॥

सीता। चन्द्रो यस्येत्यादिकं पुनः पठति।

वेलाद्रेरेष हेलाक्रमणपरिणतस्तुङ्गमाक्रम्य मौलिं
मौलिं पूर्वाचलस्य द्युमणिरिव नभो लङ्घयत्यम्बुराशिम्।
वेगप्रोद्भूतवातप्रतिहतसलिलोन्मुक्तगम्भीरगर्भ-
व्यक्तीभूतोरगेन्द्रप्रतिगलविलसत्कीर्त्तिहारो हनूमान्॥ १०८॥

---

यैः तथोक्तानि भर्त्सितः दशग्रीवः यैः तथाभूतानि प्रयुक्तरावण-भर्त्सनानीत्यर्थः, बद्धया अनलज्वालया अग्निशिखया प्रज्वलिता या स्वस्य वालधिलता पुच्छवल्ली तया निर्दग्धा लङ्का येषु तानि कपेरिमानि कापेयानि वानरोचितचेष्टितानि अकरोत् कृतवान्। शार्दूलविक्रीड़ितं वृत्तम्॥ १०६॥

लङ्का दग्धा वनं भग्नं लङ्घितश्च महोदधिः।
यत् कृतं रामदूतेन स रामः किं करिष्यति?॥

इति अतिरिक्तः पाठः अत्र दाक्षिणात्यपुस्तके दृश्यते।

तथेति। तथा, अनुष्ठिते इति शेषः, वायुपुत्रः अशोकवने सीताया अन्तिके समीपे, समागत्येति शेषः, अब्रवीत् उक्तवान्, हे देवि! मया लङ्का दग्धा, विदायः प्रस्थानानुमतिरित्यर्थः, दीयताम् इति। अनुष्टुप् वृत्तम्॥ १०७॥

वेलाद्रेरिति। हेलया अवलीलया यत् आक्रमणम् आरोहणं तत्र परिणतः परिपक्वः एषः हनूमान् पूर्वाचलस्य उदयगिरेः मौलिम् आक्रम्य नभः आकाशं द्युमणिरिव सूर्य्य इव "द्युमणिस्तरणिर्मित्रः" इत्यमरः, वेलाद्रेः सागरतटगिरेः तुङ्गम् उन्नतं मौलिं शिखरम् आक्रम्य आरुह्य वेगेन लङ्घनजवेन प्रोद्भूतः प्रकर्षेण उद्गतः, यः वातः वायुः तेन प्रतिहतैः ताड़ितैः,

दग्ध्वा लङ्कामशङ्कं जनकनृपसुतां तां समाश्वास्य भूयो
वायोः सूनुस्तरस्वी पुनरपि मिलितो जाम्बवन्मुख्ययूथैः।
तेभ्यः सर्वं निवेद्य प्रमुदितहृदयैस्तैः समं सन्निवृत्तः
सुग्रीवप्रेमपात्रं मधुवनमथ संसृत्य भोगं स चक्रे ॥ १०९ ॥

तैः पिबद्भिरभितो मधूच्चयं
वारयन् विनिहतो महाबलैः।
रक्षको दधिमुखोऽवधीरितः
स प्लवङ्गपतिसन्निधिं ययौ ॥ ११० ॥

---

सलिलैः उन्मुक्तः परित्यक्तः यो गम्भीरः गर्भः अभ्यन्तरभागः, पातालमित्यर्थः, तत्र व्यक्तीभूताः प्रकाशं गताः ये उरगेन्द्राः वासुकिप्रभृतयः तेषां प्रतिगलं प्रतिकण्ठं विलसन् स्फुरन् कीर्त्तिरिव हारो यस्य तथाभूतः, तादृशैः उरगेन्द्रैः संस्तुतकीर्त्तिः सन् इति भावः, अम्बुराशिं सागरं लङ्घयति, स्म इत्यध्याहार्य्यम्, उत्ततारेत्यर्थः। स्रग्धरा वृत्तम् ॥ १०८ ॥

दग्ध्वेति। तरस्वी महाजवः सः वायोः सूनुः हनूमान् अशङ्कं निःशङ्कं यथा तथा लङ्कां दग्ध्वा तां जनकनृपसुतां भूयः पुनः समाश्वास्य सान्त्वयित्वा पुनरपि जाम्बवान् मुख्यः येषां तैः यूथैः वानरसैन्यैः मिलितः सङ्गतः, अथानन्तरं तेभ्यः जाम्बवत्-प्रभृतिभ्यः सर्वं लङ्कावृत्तमिति भावः, निवेद्य प्रमुदितं हृष्टं, तद्-वार्त्ताश्रवणादिति भावः, हृदयं येषां तथोक्तैः तैः समं सह सन्निवृत्तः सन् सुग्रीवस्य प्रेमपात्रम् अतिप्रियमित्यर्थः, मधुवनं संसृत्य समागत्य भोगं विहारं चक्रे कृतवान्। स्रग्धरा वृत्तम् ॥ १०९ ॥

तैरिति। स रक्षकः उद्यानपालः दधिमुखः तदाख्यो वानरः वारयन् मधूनि मा भक्षयत इति प्रतिषेधन् अभितः मधूच्चयं मधुसमूहं पिबद्भिः महाबलैः तैः हनूमदादिभिः

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीर-श्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
सन्देशाहरणाभिधोऽत्र गतवानङ्को महान् पञ्चमः ॥ १११ ॥

---

## षष्ठोऽङ्कः ।

ततः प्रविशति दधिमुखः । जयति जयति सुग्रीवः । प्रणम्य ।

विन्ध्यं भूमिधरं तदन्तरवनं तद्भोक्तुमिच्छारुचिं
तत्राधिष्ठितदेवतापरिकरं तत्प्रीतिदत्तं फलम् ।
वैदेहीमभितो विचित्य हरयः सुग्रीव ! संप्रेषणात्
आरोहन्ति विशन्ति यान्ति दधति ध्यायन्ति खादन्ति च ॥ १ ॥

---

विनिहतः प्रहृतः अत एव अवधीरितः अवमतः सन् प्लवङ्गपतिः सुग्रीवस्य सन्निधिं समीपं ययौ गतवान् । रथोद्धता वृत्तं, "रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥ ११० ॥

एष इति । सन्देशाहरणाभिधः सन्देशो वाचिकं, वार्त्तेत्यर्थः, तस्य आहरणं हरणं वा आनयनमित्यर्थः, अभिधा आख्या यस्य सः । सुगमम् ॥ १११ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
महानाटकस्य पञ्चमाङ्कव्याख्या समाप्ता ॥ ५ ॥

---

विन्ध्यमिति । हे सुग्रीव ! सम्प्रेषणात् सन्नियोगात्, तवेति

हनूमदागमनमजानन् सुग्रीवं प्रति रामः।

मासमेकं गतो लङ्कां हनूमान्न निवर्त्तते।
चिरं दूतेषु कल्याणं यदि बद्धो न तिष्ठति॥ २॥

अथ दधिमुखात् हनूमतः आगमनं श्रुत्वा रामं प्रति सुग्रीवः।

अस्त्यस्माकं मधुवनमिह क्ष्माभुजामेकभोग्यं,
भङ्क्त्वा भुङ्क्ते पवनतनयश्चेदसौ लब्धकार्य्यः।

---

शेषः, हरयः वानराः अभितः समन्तात् वैदेहीं सीतां विचित्य अन्विष्य विन्ध्यं भूमिधरं पर्वतम् आरोहन्ति, तदन्तरवनं तस्य विन्ध्यस्य अन्तर्गतं काननं विशन्ति प्रविशन्ति, वनं भोक्तुं यान्ति गच्छन्ति, इच्छया रुचिम् अनुरागं दधति धारयन्ति, तत्र वने अधिष्ठिता या देवताः तासां परिकरः समूहः तं ध्यायन्ति चिन्तयन्ति, आराधयन्तीति भावः, तेन देवतापरिकरेण प्रीत्या दत्तं फलं खादन्ति च भक्षयन्ति च। अत्र विन्ध्यादीनामुद्दिष्टानां यथासंख्यम् आरोहन्त्यादिक्रियाभिरुद्देशात् यथासङ्ख्यमलङ्कारः "यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यत्" इति लक्षणात्। शार्दूलविक्रीड़ितं वृत्तम्॥ १॥

मासमिति। हनूमान् एकं मासं लङ्कां गतः, न निवर्त्तते, अद्यापीति शेषः, यदि बद्धः, शत्रुभिरिति शेषः, न तिष्ठति, तदा दूतेषु चिरं विलम्बनं कल्याणं शुभं, बहुकार्य्यसम्पादनसम्भवादिति भावः। अनुष्टुप् वृत्तम्॥ २॥

अस्तीति। इह अस्मिन् प्रदेशे क्ष्माभुजां राज्ञाम् एकभोग्यं केवलभोगस्थानं, न त्वन्येषामिति भावः, केवलं राजभोग्यमित्यर्थः, अस्माकं मधुवनम् अस्ति, क्ष्माभुजामस्माकमिति

सत्यं प्रत्यागत इति, तयोरित्थमालापभाजो-
स्तत्रायातः स्मितकिलकिलोन्नीतहर्षो हनूमान् ॥ ३ ॥

असौ मरुच्चुम्बितचारुकेसरः, प्रसन्नताराधिपमण्डलाग्रणीः।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनूमानिवागतः ॥ ४ ॥

अथ रामहनूमतोरुक्तिप्रत्युक्ती।

हंहो मारुतनन्दनाऽऽदिश विभो! दृष्टा त्वया जानकी?

---

वान्वयः। चेत् यदि पवनतनयः भङ्क्ता, तत् मधुवनमिति भावः, भुङ्क्ते भक्षयति, तदा असौ सत्यं लब्धकार्यः सम्पादितनियोगः सन् इत्यर्थः, प्रत्यागतः, इतीत्थम् इत्येवमालापभाजोः आलपतोरित्यर्थः, तयोः रामसुग्रीवयोः तत्र स्थाने हनूमान् स्मितेन मृदुहासेन यत् किलकिला स्वजातीयशब्दविशेषः तया उन्नीतः प्रकटितः हर्षः येन तथोक्तः सन् आयातः आगतः। मन्दाक्रान्ता वृत्तम् ॥ ३ ॥

असाविति। असौ हनूमान् मरुता वायुना चुम्बिताः स्पृष्टाः, आन्दोलिता इत्यर्थः, चारवः मनोज्ञाः केसराः लोमानि पुष्पकिञ्जल्काश्च यस्य तथोक्तः प्रसन्नः प्रीतः यस्ताराधिपः तारापतिः, सुग्रीव इत्यर्थः, तस्य मण्डलं चक्रं तस्य अग्रणीः श्रेष्ठः, अन्यत्र प्रसन्नम् अतिस्वच्छं ताराधिपमण्डलं चन्द्रमण्डलं तेन अग्रणीः रमणीयतया श्रेष्ठ इत्यर्थः, वियुक्तः विरही रामः तस्य आतुरया सिद्धार्थो न वेति व्याकुलया दृष्ट्या, अन्यत्र वियुक्ताभिर्विरहिणीभिः रामाभिर्नारीभिः आतुरया खिन्नया दृष्ट्या वीक्षितः निरीक्षितः अतएव वसन्तकाल इव आगतः उपस्थितः। समागतः श्रीहनुमान् वसन्तवदिति पाठान्तरम्। उपमालङ्कारः। वंशस्थविलं वृत्तम् ॥ ४ ॥

म—२१

दृष्टा, जीवति ? जीवति, प्रियतमा मां शोचते ? शोचते ।
मद्विच्छेदकृशा ? कृशा, वदति किं ? हा राम ! हा लक्ष्मणे-
त्येवं, तत्प्रहितं किमस्ति ? सुतरामस्त्येष चूड़ामणिः ॥ ५ ॥

इति प्रथमाभिज्ञानं चूड़ामणिमर्पयति ।

कण्ठे सन्तनुते चिरं चिरमुरःपीठे निवेश्य प्रिया-
स्पर्शोल्लासभरं समाकलयति, प्रेम्णा चिरं पृच्छति ।
स्वामिन्याः कुशलं तवेति, पुरतः पर्य्यश्रुणा संप्लुत-
निस्पन्देक्षणमीक्षते क्षणममुं चूड़ामणिं राघवः ॥ ६ ॥

---

हंहो इति । मारुतनन्दन ! हनूमन् ! हे विभो ! आदिश आज्ञापय, त्वया जानकी दृष्टा ? दृष्टा, जीवति ? जीवति प्राणितीत्यर्थः, प्रियतमा सा मां शोचते ? शोचते भवन्तमुद्दिश्य शोकं करोतीत्यर्थः । मम विच्छेदेन विरहेण कृशा ? कृशा, किं वदति ? हा राम ! हा लक्ष्मण ! इत्येवं वदतीत्यन्वयः । किमपि तया प्रहितं प्रेषितम्, अभिज्ञानरूपमिति भावः, अस्ति ? एषः चूड़ामणिः सुतरां सुष्ठुतराम् अस्ति, प्रेषित इति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५ ॥

कण्ठे इति । राघवो रामः अमुं चूड़ामणिं चिरं कण्ठे सन्तनुते सन्धत्ते, चिरम् उरःपीठे वक्षस्तटे निवेश्य प्रियायाः स्पर्शे इव य उल्लासभरः प्रमोदातिशयः तं समाकलयति अनुभवति, प्रेम्णा प्रीत्यतिशयेन तव स्वामिन्याः सीतायाः कुशलम् इति चिरं पृच्छति अनुयुङ्क्ते, पुरतः अग्रतः पर्य्यश्रुणा परिगतेन अश्रुणा संप्लुते आच्छन्ने निष्पन्दे ईक्षणे नेत्रे यस्मिन् तत् यथा तथा क्षणम् ईक्षते पश्यति । अत्र एकस्य राघव इति कर्त्तृकारकस्य अनेकासु क्रियासु सम्बन्धात् दीपकभेदः । उक्तञ्च

हनू। मनःशिलायास्तिलकं स्मर गण्डस्थले त्वया।
संघृष्टं, जानकीवक्षःस्पर्शात् काणीकृतः खगः॥ ७॥
इत्यभिज्ञानद्वयं कथयति।
तत आलिङ्गितुमुपक्रान्तं रामं प्रति हनूमान्।
पीतो नाम्बुनिधिर्न रावणपुरी निःशेषचुर्णीकृता,
नानीतानि शिरांसि राक्षसपतेर्नानायि सीता मया।
आश्लेषार्पणपारितोषिकमहं नार्हामि वार्त्ताहरः,
संजल्पत्यनिलात्मजे स जयति स्मेराननो राघवः॥ ८॥

---

दर्पणे—"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते। अथ कारकमेकं स्यादनेकासु क्रियासु चेत्॥" इति। शार्दूलविक्रीड़ितं वृत्तम्॥६॥

मन इति। त्वया गण्डस्थले संघृष्टं सम्यक् घर्षणं प्राप्तं, संमृष्टमिति वा पाठः, मनःशिलायाः द्रव्यविशेषस्य तिलकं तथा जानक्याः वक्षःस्पर्शात् स्तनविदारणादिति भावः, काणीकृतः अकाणः काणः कृतः खगः पक्षी,काक इत्यर्थः, एतत् द्वयं स्मर। काणीकृतं खगमिति पाठान्तरम्। अनुष्टुप् वृत्तम्॥ ७॥

पीत इति। (हे राघव! मया अम्बुनिधिः समुद्रः न पीतः, रावणपुरी लङ्का न निःशेषं यथा तथा चूर्णीकृता, कौणपपुरी निष्पिष्य चुर्णीकृतेति पाठे कौणपा राक्षसाः, "राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः" इत्यमरः, तेषां पुरी लङ्केत्यर्थः। राक्षसपतेः शिरांसि न आनीतानि, सीता न आनायि नानीता, अतः वार्त्ताहरः वार्त्तामात्रहारी अहम् आश्लेषस्य आलिङ्गनस्य अर्पणमेव पारितोषिकं पुरस्कारं न अर्हामि नाधिकरोमि इति संजल्पति संकथयति अनिलात्मजे

अहो! किं न विहितं भवता, यदियमदाहि लङ्का इत्युक्ते,
हनूमान्। त्वत्प्रतापानलेनैव नाथ! श्रीरघुनन्दन!।
दग्धा पुरैव लङ्केयं पश्चाद्वह्निर्मयार्पितः॥ ९॥
अहो! किन्न विहितं यदयं लङ्घितः समुद्र इत्युक्ते, हनूमान्।
देव! त्वत्प्रबलप्रतापतपनैरम्भोनिधिः शोषित-
स्तेनेत्थं स्थलवर्त्मनैव गतवान् लङ्कामशङ्कामहम्।
रक्षोनायकनागरीनयनजैर्नीरैरयं पूरित-
श्चेत्स्यान्नो जलधिस्तदा मम कृतोत्फालेन किं वा फलम्?॥१०॥

---

हनूमति, स्मेराननः मृदुहसन्मुखः राघवः जयति। शार्दूल-विक्रीड़ितं वृत्तम्॥ ८॥

त्वदिति। हे नाथ श्रीरघुनन्दन! इयं लङ्का पुरैव प्रागेव तव प्रतापानलेन दग्धैव भस्मीकृतैव, पश्चात् मया वह्निः अर्पितः। अनुष्टुप् वृत्तम्॥ ९॥

देवेति। हे देव! अम्भोनिधिः सागरः तव प्रबलाः प्रतापा एव तपनाः सूर्य्याः तैः शोषितः शोषं नीतः, तेन हेतुना अहम् इत्थं स्थलवर्त्मनैव स्थलीभूतेनैव समुद्रेणेति भावः, अशङ्कां निःशङ्कां, प्रागिति शेषः, लङ्कां गतवान्। अयं जलधिः रक्षोनाथस्य रावणस्य नागर्य्यः नगरवासिन्यः तासां नयनजैः नेत्रजैः नीरैः वाष्पवारिभिरित्यर्थः, नो पूरितः स्यात् चेत् यदि, साम्प्रतमिति शेषः, तदा मम कृतोत्फालेन कृतेन लङ्घनेन किं वा फलम्? नैव किञ्चित् फलमित्यर्थः। अचिरादेव राक्षसगण-विध्वंसनेन भवता राक्षसीनां पतिपुत्रविरहिणीनाम् अश्रु-स्रोतोभिः सागरः पूरयितव्य इति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥ १०॥

अथ उपविश्य रामहनूमतोरुक्तिप्रत्युक्ती।

क्वास्ते सीता ? वसति विपिने देव ! लङ्केशगुप्ते,
कीदृक् पन्थाः ? जलधिपिहितस्तीर्य्यते दैवयोगात्।
इत्याख्याति पवनतनये व्रीड़विभ्रान्तनेत्रे
हर्षव्रीड़ाभयसचकितो विह्वलो रामचन्द्रः॥ ११॥

क्षणं स्थित्वा, सीता किमाहेति प्रश्ने।

श्रीराम ! राम ! रघुनन्दन ! राम ! राम !
श्रीराम ! राम ! भरताग्रज ! राम ! राम !।
श्रीराम ! राम ! रणकर्कश ! राम ! राम !
श्रीराम ! राम ! शरणं भव राम ! राम !॥ १२॥

कीदृशी सीता इति प्रत्ययार्थं हनूमान्।

---

क्वेति। सीता क्व कुत्र आस्ते वसति ? हे देव ! लङ्केशेन रावणेन गुप्ते रक्षिते विपिने वने, अशोकवने इत्यर्थः, आस्ते इत्यन्वयः। पन्थाः मार्गः कीदृक् कथम्भूतः ? जलधिना समुद्रेण पिहितः वेष्टितः दैवयोगात् शुभादृष्टसम्बन्धात् तीर्य्यते लङ्घ्यते। पवनतनये हनूमति व्रीड़ेन लज्जया, स्वसामर्थ्य-प्रकटनजनितेनेति भावः, विभ्रान्ते विघूर्णिते नेत्रे यस्य तथाभूते इतीत्थम् आख्यातं कथितं येन तस्मिन् सति रामचन्द्रः हर्षेण सीतावार्त्तालाभजेनेति भावः, व्रीड़या भार्य्याहरणजनितया क्रमागतयेति भावः, भयेन अन्तरा समुद्रादिमहान्तरायचिन्ता-जनितेनेति भावः, सचकितः विभ्रान्तः विह्वलः कर्त्तव्यविमूढ़ इति यावत्, आसीदिति शेषः। मन्दाक्रान्ता वृत्तम्॥ ११॥

श्रीरामेति। स्पष्टम्॥ १२॥

इन्दुर्लिप्त इवाञ्जनेन, जड़िता दृष्टिर्मृगीणामिव,
प्रम्लानारुणिमेव विद्रुमदलं, श्यामेव हेमप्रभा।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं,
सीतायाः पुरतश्च हन्त! शिखिनां बर्हाः सगर्हा इव ॥ १३ ॥

विरहे सीतायाः कीदृशमङ्गसौष्ठवमिति प्रश्ने। हनूमान्।

कार्श्यञ्चेत् प्रतिपत्कला हिमरुचः स्थूलाऽथ चेत्पाण्डिमा
नीला चैव मृणालिका, यदि पुनर्वाष्पः कियान् वारिधिः।
सन्तापो यदि शीतलो हुतवहस्तस्याः कियद्वर्ण्यते
राम! त्वत्स्मृतिमात्रमेव हृदयं लावण्यशेषं वपुः ॥ १४ ॥

---

इन्दुरिति। सीतायाः पुरतः अग्रतः, सन्निधावित्यर्थः, इन्दुश्चन्द्रः अञ्जनेन कज्जलेन लिप्त इव, मृगीणां हरिणीनां दृष्टिः जड़ितेव मन्थरेव, निर्व्यापारेवेत्यर्थः। विद्रुमदलं प्रवालपत्रं प्रम्लाना प्रकर्षेण म्लानिं गता अरुणिमा रक्तिमा यस्य तथोक्तम् इव, हेम्नः काञ्चनस्य प्रभा श्यामेव कृष्णेव, कोकिलवधूनां कोकिलानां कण्ठेषु कलया अंशक्रमेण कार्कश्यं कर्कशत्वं प्रस्तुतमिव प्रसक्तमिव शिखिनां मयूराणां बर्हाः पिच्छानि च सगर्हा इव कुत्सिता इव हन्त हर्षे। अत्र मुखनयनोष्ठाङ्गवचनकेशानां निगीर्णतयोत्कर्षातिशयद्योतनाय इन्द्वादीनाम् अञ्जनलिप्तत्वादिसम्भावनात् उत्प्रेक्षालङ्कारः, "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति लक्षणात्। शार्दूलविक्रीड़ितं वृत्तम् ॥ १३ ॥

कार्श्यमिति। तस्याः सीतायाः कार्श्यं कृशता चेत्, स्यादिति शेषः, तदा हिमरुचः चन्द्रस्य, हिमनिधेरिति पाठान्तरं, प्रतिपत्कला प्रतिपदि तिथावुदयमाना कला षोड़शभागैकभागः, "कला तु षोड़शो भागः" इत्यमरः, स्थूला, प्रतीयते इति

स्वभावादेव तन्वङ्गी त्वद्वियोगाद्विशेषतः।
प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥ १५ ॥

कथं समुद्र उत्तीर्ण इति प्रश्ने।

शाखामृगस्य शाखायाः शाखां गन्तुं पराक्रमः।
यत्त्वया लङ्घितोऽम्भोधिः प्रभावोऽयं तव प्रभो ! ॥ १६ ॥

---

शेषः। अथ पाण्डिमा विरहजनिता पाण्डुता चेत्, तदा मृणालिका मृणालमेव मृणालिका नीलैव नीलवर्णैव, प्रतीयते इति शेषः। वाष्पः अश्रुभरः पुनः यदि, स्यादिति शेषः, तदा वारिधिः समुद्रः कियान् ? अत्यल्प एवाभातीति भावः, सन्तापः, विरहज इति शेषः, यदि, स्यादिति शेषः, तदा हुतवहः अग्निः शीतलः, प्रतीयते इति शेषः, हे राम ! कियत्, वृत्तमिति शेषः, वर्ण्यते ? हृदयं तव स्मृतिरेव मात्रा जीवनाधानहेतुर्यस्य तादृशं वपुः शरीरञ्च लावण्यशेषं लावण्यं "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्तलक्षणं शेषो यस्य तथाभूतम्। सर्वथातीव कातरा क्षीणाङ्गी सा दृष्टेति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

स्वभावादिति। स्वभावादेव निसर्गत एव विशेषतः तव वियोगात् तन्वङ्गी कृशाङ्गी सा प्रतिपत्पाठशीलस्य प्रतिपदि स्वाध्यायनिषेधात् तत्र पाठरतस्य विद्येव, तनुतां कृशतां, स्वभावादप्यधिकतरामिति भावः, गता प्राप्ता। उपमालङ्कारः। अनुष्टुप् वृत्तम् ॥ १५ ॥

शाखेति। शाखामृगस्य वानरस्य शाखायाः वृक्षविटपात् शाखाम्, अन्यामिति शेषः, गन्तुं पराक्रमः शक्तिः, अस्तीति

राम ! राम ! तव नाम जपन्तः पामरा अपि तरन्ति भवाब्धिम् ।
अङ्गसङ्गिभवदङ्गुलिमुद्रः किन्नु चित्रमतरत्कपिरब्धिम् ? ॥ १७ ॥

रामः । त्रिदशैरपि दुर्धर्षा लङ्का नाम महापुरी ।
कथं वीर ! त्वया दग्धा विद्यमाने दशानने ॥ १८ ॥

हनू । निश्वासेनैव सीताया राजन् ! कोपानलेन ते ।
दग्धा पुरैव लङ्केयं, निमित्तमभवं त्वहम् ॥ १९ ॥

---

शेषः, हे प्रभो ! यत् मया अम्भोधिः समुद्रः लङ्घितः, अयं लङ्घन-व्यापारः इत्यर्थः, तव प्रभावः सामर्थ्यम् । अनुष्टुप् वृत्तम् ॥१६॥

रामेति । हे राम ! राम ! पामरा अपि पापिनोऽपि तव नाम जपन्तः उच्चरन्तः सन्तः भवाब्धिं संसारसागरं तरन्ति, अङ्गस्य सङ्गिनो भवतः अङ्गुलिमुद्रा यस्य तथाभूतः कपिः वानरः अब्धिं सागरं यत् अतरत् तत् किं चित्रं नु ? न आश्चर्यं खलु । तव नाम्नः निरवयवस्यापि महासमुद्रस्य संसारस्य तरणे सामर्थ्यं सावयवस्य तु त्वदङ्गुरीयस्य ततोऽपि तुच्छ-सागरतरणे सामर्थ्यं किमु वक्तव्यमित्याश्चर्यमेवेति भावः । अत्रार्थापत्तिरलङ्कारः, "दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते" इति लक्षणात् । स्वागता वृत्तं, "स्वागता रनभगैर्गुरुणा च" इति लक्षणात् ॥ १७ ॥

त्रिदशैरपीति । हे वीर ! दशानने विद्यमाने सति त्रिदशै-रपि देवैरपि दुर्धर्षा दुरतिक्रमा, का कथा अन्यैरिति भावः, लङ्का नाम महापुरी महानगरी त्वया कथं केन प्रकारेण दग्धा ? अनुष्टुप् वृत्तम् ॥ १८ ॥

निश्वासेनेति । हे राजन् ! सीतायाः निश्वासेनैव तथा ते तव कोपानलेन इयं लङ्का पुरैव प्रागेव दग्धा, अहन्तु केवलं

रावणजये भवतः कीदृग्व्यवसाय इति प्रश्ने ।

रक्षस्तद्बहुकन्धरं बहुभुजं बह्वाननं दीप्तिमद्-
दंष्ट्रारौद्रमहं विलोक्य सहसा दध्रे मनो हिंसितुम् ।
देव ! त्वत्कृपया विजृम्भितधियां किं किं भवेत् दुष्करं
भर्त्तुः कर्म्म भटस्य नोचितमिति त्यक्तो मया रावणः ॥२०॥

रामः । साधु वानर ! वीर्य्यं ते श्लाघनीयोऽसि मे पुरः ।
धिगस्तु मे बाहुबलं यत्तु जीवति रावणः ॥ २१ ॥

---

निमित्तरूपं सामान्यकारणम् अभवम् । अभवन्त्वहमित्यत्र अभवत् कपिरिति पाठान्तरम् । अनुष्टुप् वृत्तम् ॥ १८ ॥

रक्ष इति । हे देव ! बहुकन्धरं बहुग्रीवं, दशकन्धरमित्यर्थः, बहुभुजं विंशतिभुजमित्यर्थः, बह्वाननं दशाननं दीप्तिमतीभिः समुज्ज्वलाभिः दंष्ट्राभिः दशनैः रौद्रं भीषणं तत् रक्षः रावणमित्यर्थः, विलोक्य अहं सहसा हिंसितुं हन्तुं मनः दध्रे कृतवानित्यर्थः । ननु कथं त्वया तथाविधः देवैरपि दुरासदो रिपुर्हन्यते इत्यत्राह, त्वदिति । तव कृपया अनुग्रहेण विजृम्भितधियां विस्फुरितमतीनां किं किं दुष्करं भवेत् ? न किमपीत्यर्थः । भर्त्तुः स्वामिनः कर्म्म कार्य्यं भटस्य दूतस्य सैनिकस्य वा न उचितम् इति हेतोः मया रावणः त्यक्तः परिहृतः, न हिंसित इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २० ॥

साध्विति । हे वानर ! ते तव वीर्य्यं पराक्रमः साधु समीचीनं प्रशस्तमित्यर्थः, मे मम पुरः अग्रतः श्लाघनीयः प्रशंसनीयः असि भवसि, मे मम बाहुबलं भुजवीर्य्यन्तु धिक् अस्तु, यत् यतः रावणः जीवति, अद्यापीति शेषः । अनुष्टुप् वृत्तम् ॥ २१ ॥

एकैकैवोपकारेण प्राणान् दास्याम्यहं कपे ! ।
अन्येनैवोपकारेण शेषेण ऋणिनो वयम् ॥ २२ ॥

हनू । मद्विधा बहवो भृत्यास्तव तिष्ठन्ति राघव ! ।
त्वद्विधो गुणसम्पन्नः स्वामी नैव च लभ्यते ॥ २३ ॥

अथ प्रयाणम् ।

अथ विजयदशम्यामाश्विने शुक्लपक्षे
दशमुखनिधनाय प्रस्थितो रामचन्द्रः ।
द्विविदगयसहायैर्यूथनाथैस्तथान्यैः
कपिभिरपरिमाणैर्व्याप्तदिक्चक्रवालः ॥ २४ ॥

---

एकैकेति । हे कपे ! अहम् एकैकैव उपकारेण सीतावार्त्तानयनेनेति भावः, तुभ्यं प्राणान् दास्यामि, निष्क्रयत्वेनेति भावः, शेषेण अवशिष्टेन अन्येन उपकारेण लङ्कादाहादिनेति भावः, वयम् ऋणिनः चिरऋणबद्धा इत्यर्थः, तिष्ठाम इति शेषः । अनुष्टुप् वृत्तम् ॥ २२ ॥

मद्विधा इति । हे राघव ! तव मद्विधाः मत्तुल्याः बहवः भृत्याः किङ्कराः तिष्ठन्ति, त्वद्विधः तव सदृशः गुणसम्पन्नः स्वामी प्रभुः नैव च लभ्यते नैव तु प्राप्यते । अनुष्टुप् वृत्तम् ॥ २३ ॥

अथेति । अथ सीताप्रवृत्तिलाभानन्तरम् आश्विने मासि शुक्लपक्षे विशेषेण जयो यत्र प्रयाणे सा विजया, सा चासौ दशमी चेति तस्यां विजयदशम्यां रामचन्द्रः द्विविदो नाम वानरः गयः वानरः तौ सहायौ सहचरौ येषां तैः यूथनाथैः दलपतिभिः तथा अन्यैः अपरिमाणैः असंख्यैः कपिभिः व्याप्तं दिशां चक्रवालं मण्डलं येन तथाभूतः सन् दशमुखस्य रावणस्य निधनाय प्रस्थितः प्रचचाल । द्विविदगयसहायैरित्यत्र

उत्फालैः स्थगयन्नभः, किलकिलाशब्दैर्दिशो नादयन्,
भञ्जन् पर्वतकाननानि, धरणीमुद्धूनयन् सर्वतः ।
प्रस्थाने रघुनन्दनस्य स तदा सुग्रीवसम्पालितो
लङ्कासम्मुखमुच्चचाल सहसा हृष्टः कपीनां चयः ॥ २५ ॥

नमत्कमठकर्परं स्खलदनन्तदन्तावलि
त्रुटत्कपटशूकरोद्भटविशालदन्ताङ्कुरम् ।
स्फुरत्सुरकरीश्वरप्रकटकुम्भमुक्ताफलं
चलद्गुरुकुलाचलं किल चचाल सा वाहिनी ॥२६॥

---

द्विरदविधुमहाजैरिति पाठे द्विरदः विधुः महाजः तत्तदाख्या वानराः तैरित्यर्थः । मालिनी वृत्तम् ॥ २४ ॥

उत्फालैरिति । सुग्रीवेण सम्पालितः संरचितः, सञ्चालित इति पाठान्तरं, सः कपीनां वानराणां चयः समूहः रघुनन्दनस्य प्रस्थाने प्रयाणे हृष्टः अत एव उत्फालैः उल्लम्फनैः नभः आकाशं स्थगयन् आच्छादयन्, स्थलयन्निति वा पाठः, किलकिलाशब्दैः दिशः नादयन् शब्दाययन्, पर्वतकाननानि भञ्जन् भग्नानि कुर्वन्, सर्वतः समन्तात् धरणीं पृथ्वीम् उद्धूनयन् कम्पयन्, उद्धूलयन्निति पाठे उन्नतधूलीकुर्वन्, सहसा वेगेन लङ्कासम्मुखम् उच्चचाल प्रतस्थे । शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

नमदिति । सा वाहिनी हरिचमूः नमन् अवनतिं गच्छन् कमठस्य कूर्मराजस्य कर्परः शिरोऽस्थि यस्मिन् तत्, स्खलन्ती अनन्तस्य शेषनागस्य दन्तावलिः दशनपङ्क्तिः यस्मिन् तत्, त्रुटन् भज्यन् कपटशूकरस्य आदिवराहस्य उद्भटः विशालः महान् दन्ताङ्कुरः दशनप्ररोहः यस्मिन् तत्, स्फुरन्ति विनिःसृत्य

विजेतव्या लङ्काऽचरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्येको रामः सकलमपि हन्ति प्रतिबलं
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ २७ ॥

अथ समुद्रतीरावस्थितो रामः स्वगतम् ।

पारेसिन्धु पुरी, पुरीपरिसरे प्राचीरमभ्रंलिहं,
सिंहद्वेषि बलं, रिपुञ्जयबलास्ते कुम्भकर्णादयः ।

---

राजन्ति सुरकरीश्वरस्य सुरगजस्य प्रकटात् विशालात् कुम्भात् मुक्ताफलानि यस्मिन् तत् तथा चलन्तः गुरवः महान्तः कुलाचलाः कुलपर्वताः, "महेन्द्रो मलयः सह्यः शुक्तिमानृक्ष-पर्वतः । विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः ॥" इत्युक्ताः यस्मिन् तत् यथा तथा चचाल किल, समुद्रतं प्रस्थितेति भावः । पृथ्वी वृत्तं, "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ २६ ॥

विजेतव्येति । लङ्का या सुरैरपि दुर्जयेति भावः, विजेतव्या विशेषेण जयनीया, जलनिधिः समुद्रः अचरणतरणीयः न पदैरुत्तार्य्यः । पौलस्त्यो रावणः, यस्त्रिलोकविजयीति भावः, विपक्षः शत्रुः रणभुवि संग्रामे कपयः वानराः, कार्य्याकार्य्य-विवेकरहिता इति भावः, सहायाः । तथापि एवं जयसाधन-वैगुण्येऽपीति भावः, एको रामः सकलमपि प्रतिबलं विपक्ष-सैन्यं हन्ति हन्तुं शक्नोतीति भावः, तथा हि महतां जनानां क्रियासिद्धिः कार्य्यसिद्धिः सत्त्वे स्वस्य शक्तावेवेत्यर्थः, वसति, उपकरणे सहायाद्युपायसामग्र्यां न । शिखरिणी वृत्तम् ॥ २७ ॥

पारे इति । सिन्धोः समुद्रस्य पारे पारेसिन्धुः, "पारे मध्ये

शात्तीकः स रिपुः स्तनन्धय इव भ्राता, सखा वानरो,
मत्वैवं रघुवंशकेशरियुवा कोदण्डमुद्वीक्षते ॥ २८ ॥

सागरं दृष्ट्वा विषण्णं रामं प्रति सुग्रीवः।

देवाज्ञां देहि राज्ञां त्वमसि कुलगुरुः, शोषये किं पयोधिं ?
किं वा लङ्कामशङ्कामिह समुपनये जानकीमानकीर्णाम् ?।
सेतुं बध्नामि किं वा स्फुटितगिरितटीसङ्कटीभूतभङ्गात्
उद्भ्राम्यन्नक्रचक्रं मकरजलकरिग्राहचीत्कारघोरम् ? ॥ २९ ॥

---

इत्यव्ययीभावः। पुरी लङ्केति यावत्, पुर्य्यां लङ्कायाः परिसरे प्रान्तदेशे प्राचीरं प्राकारः अभ्रंलिहं गगनस्पर्शीत्यर्थः, दुर्लङ्घ्यमिति भावः, बलं राक्षससैन्यं सिंहद्वेषि सिंहमपि द्वेष्टि हिनस्तीति तथोक्तं महावीर्य्यमिति भावः, ते प्रसिद्धाः कुम्भकर्णादयः, रिपून् शत्रून् जयतीति रिपुञ्जयं बलं येषां तादृशाः शत्रुघातिसामर्थ्या इत्यर्थः, स रिपुः रावणः शक्त्या युध्यति इति शात्तीकः अमोघशक्त्यस्त्रयोधीत्यर्थः, भ्राता लक्ष्मणः स्तनन्धय इव स्तन्यपायी शिशुरिव, वानरः मूढ़ः सदसद्विवेकरहित इति भावः, सहायः। एवं मत्वा रघुवंशकेशरियुवा रघुवंशतरुणसिंहः, राम इत्यर्थः, कोदण्डं धनुः उद्वीक्षते विजयसाधनत्वेन पश्यतीत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २८ ॥

देवेति। हे देव! आज्ञां देहि, त्वं राज्ञां क्षत्रियाणां कुलगुरुः स्ववंशश्रेष्ठः; यद्वा कुलानाम् अस्मत्सङ्घानां गुरुः उपदेष्टा, असि, पयोधिं समुद्रं शोषये किम्? इह भवत्सन्निधौ अशङ्कां शङ्कारहितां जानकीमानेन जानकीकोपेन कीर्णां व्याप्तां, आकुलेति यावत् तां लङ्कां समुपनये किं वा? स्फुटिताभिः खण्डिताभिः गिरीणां पर्वतानां तटीभिः सङ्कटीभूतः सङ्कुलीभूतः यो भङ्गः

हनू। देवाज्ञापय किं करोमि? सहसा लङ्कामिहैवानये?
जम्बूद्वीपमितो नये? किमथवा वारां निधिं शोषये?।
हेलोत्तोलितविन्ध्यमन्दरगिरिस्वर्णत्रिकूटाचल-
क्षेपक्षोभविवर्द्धमानसलिलं बध्नामि वारां निधिम्? ॥३०॥

तत्रैव चन्द्रोदये रामचेष्टा।

सुग्रीवे प्रणयोन्मुखाः शशधरे बद्धाभ्यसूयाश्चिरं
साश्चर्य्याः पवनात्मजे धृतरुषः पौलस्त्यवल्यां दिशि।
सोत्साहाश्च शरासने सकरुणाः सौमित्रिवक्त्रे तदा
रामस्याब्धिनियन्तुराविरभवन्नानारसा दृष्टयः ॥ ३१ ॥

---

तरङ्गः तस्मात् हेतोः उद्भ्राम्यन्ति नक्राणां जलजन्तुभेदानां चक्राणि सङ्घाः यस्मिन् तत् तथा मकराणां जलकरिणां जलहस्तिनां ग्राहाणां जलजन्तुविशेषाणां चीत्कारैः घोरं भीषणं यथा तथा सेतं बध्नामि किं वा?। स्रग्धरा वृत्तम् ॥ २८ ॥

देवेति। हे देव! आज्ञापय आदिश, किं करोमि? सहसा इह भवत्सन्निधावित्यर्थः, लङ्काम् आनये? इतः अस्मिन् स्थाने जम्बूद्वीपं नये? आहरामि किम्? अथवा वारां निधिं सागरं शोषये? वा वारां निधिं हेलया उत्तोलितानाम् उन्मूलितानां विन्ध्यः मन्दरगिरिः स्वर्णत्रिकूटाचलौ सुमेरुत्रिकूटपर्वतौ तेषां क्षेपेण पातनेन यः क्षोभः विलोड़नं तेन विवर्द्धमानानि उद्गच्छन्ति सलिलानि यस्मिन् तद् यथा तथा बध्नामि?। शार्दूलविक्रीड़ितं वृत्तम् ॥ ३० ॥

सुग्रीवे इति। अब्धिनियन्तुः सागरं बध्नतः रामस्य दृष्टयः तदा तस्मिन् समये सुग्रीवे विषये प्रणयोन्मुखाः सद्भावप्रवणाः

अथ समुद्रदक्षिणतीरे लङ्कावृत्तान्तः।

रावणमात्रा निकषया, व्यसनाद्रावणो निवार्य्यतामित्युक्तो विभीषणो लङ्कानाथपदं प्रणिपत्याह—राजन्! सेयं राक्षसकालरात्रिः सीता परित्यज्यताम्।

यस्य वानरमात्रेण पुरीयं व्याकुलीकृता।
कस्तेन सह युध्येत बुद्धिमान् राक्षसेश्वर!॥ ३२॥
लङ्का दग्धा वनं भग्नं लङ्घितश्च महोदधिः।
यत् कृतं रामदूतेन, स रामः किं करिष्यति?॥ ३३॥

---

शशधरे चन्द्रे चिरं बद्धा अभ्यसूया ईर्ष्या याभिः ताः विरहोद्दीपकत्वादिति भावः, पवनात्मजे हनूमति साश्चर्य्याः विस्मयावहाः, पौलस्त्यवत्यां रावणाधिष्ठितायामित्यर्थः, दिशि दक्षिणस्यामित्यर्थः, धृतरुषः सक्रोधाः शरासने धनुषि सोत्साहाः उत्साहवत्यः तथा सौमित्रेर्लक्ष्मणस्य वक्त्रे वदने सकरुणाः सदयाः अतएव नाना विविधा रसाः भावविशेषाः यासां तथाभूताः आविरभवन् अजायन्तेत्यर्थः। अत्र विषयभेदादेकस्या दृष्टेर्भेदात् उल्लेखाख्योऽयमलङ्कारः, तदुक्तं दर्पणे—"क्वचिद् भेदाद् ग्रहीतॄणां विषयाणां तथा क्वचित्। एकस्यानेकधोल्लेखो यः स उल्लेख इष्यते॥" इति। शार्दूलविक्रीडितं वृत्तम्॥ ३१॥

यस्येति। हे राक्षसेश्वर! यस्य वानरमात्रेण एकेनैव वानरेण, दूतेनेति शेषः, इयं पुरी लङ्का व्याकुलीकृता विपर्य्यस्ता, बुद्धिमान् को जनः तेन सह युध्येत? न कोऽपीत्यर्थः। अनुष्टुप् वृत्तम्॥ ३२॥

दग्धेति। महोदधिः समुद्रः लङ्घितः, वनम् अशोककाननं भग्नं लङ्का दग्धा च, रामदूतेन यदिदं प्रागुक्तं कार्य्य-

त्यज प्रकोपं कुलकीर्त्तिनाशनं
भजस्व रामं कुलकीर्त्तिवर्द्धनम् ।
अलं विरोधेन शमो विधीयतां,
प्रदीयतां दाशरथाय मैथिली ॥ २४ ॥

यावन्न लङ्कां समभिद्रवन्ति,
बलीमुखाः पर्वतकूटमात्राः ।
दंष्ट्रायुधाश्चैव नखायुधाश्च
प्रदीयतां दाशरथाय सीता ॥ २५ ॥

---

त्वयं कृतं स रामः किं करिष्यति ? अत्र किमु वक्तव्यमिति भावः । अनुष्टुप् वृत्तम् ॥ २३ ॥

त्यजेति । कुलस्य कीर्त्तिश्च तयोर्नाशनं संहारकं प्रकोपं विद्वेषं त्यज, स्वकोपमिति वा पाठः, कुलस्य कीर्त्तेश्च वर्द्धनम् अभ्युन्नतिकरं रामं भजस्व प्रीणय, विरोधेन विवादेन अलं विवादं मा कुरु, शमः शान्तिः विधीयताम् अवलम्ब्यतां, प्रसीद जीवेम सबान्धवा वयमिति तृतीयचरणस्य पाठान्तरम् ; दाशरथाय रामाय मैथिली सीता प्रदीयतां प्रत्यर्प्यतामित्यर्थः । वंशस्थविलं वृत्तम् ॥ २४ ॥

यावदिति । पर्वतकूटमात्राः गिरिशृङ्गप्रमाणाः, "दघ्नमात्र द्वयसम्माने" इति मात्रप्रत्ययः ; दंष्ट्रायुधाः नखायुधाश्च नखदन्त-प्रहारिण इत्यर्थः, बलीमुखाः वानराः यावत् लङ्कां न समभि-द्रवन्ति उत्पीड़यन्ति तावत् दाशरथाय सीता प्रदीयताम् । सीता इत्यत्र मैथिलीति पाठः प्रामादिकः चतुर्थपादे एका-क्षरबाहुल्येन छन्दोभङ्गादिति ध्येयम् । एवं परत्र श्लोके च । उपजाति वृत्तम् ॥ २५ ॥

यावन्न गृह्णन्ति शिरांसि बाणा
रामेरिता राक्षसपुङ्गवानाम्।
वज्रोपमा वायुसमानवेगाः
प्रदीयतां दाशरथाय सीता ॥ ३६ ॥

न कुम्भकर्णेन्द्रजितौ च राजन्!
तथा महापार्श्वमहोदरौ वा।
निकुम्भकुम्भौ च तथातिकायः
स्थातुं समर्था युधि राघवस्य ॥ ३७ ॥

ततः कुम्भकर्णसुतः।

तथानेनोद्धृत्य स्फटिकशिखरो वै हि विदधे
समन्तादामूलत्रुटितवसुधाबन्धविधुरः।
असुं येनाद्यापि त्रिपुरहरनृत्यव्यतिकरः
समन्तादामूलं खलु चलनकादुल्ललयति ॥ ३८ ॥

---

यावदिति। यावत् वज्रोपमाः कुलिशसमाः वायुसमानवेगाः वातजवाः रामेण ईरिताः क्षिप्ताः बाणाः राक्षसपुङ्गवानां राक्षसवीराणां शिरांसि न गृह्णन्ति न कृन्तन्तीत्यर्थः, तावत् दाशरथाय सीता प्रदीयताम्। उपजाति वृत्तम् ॥ ३६ ॥

नेति। हे राजन्! कुम्भकर्णेन्द्रजितौ, तथा महापार्श्वमहोदरौ वा निकुम्भकुम्भौ च तथा अतिकायः एते राघवस्य रामस्य युधि संग्रामे स्थातुं न समर्थाः न क्षमाः। उपजाति वृत्तम् ॥ ३७ ॥

तथेति। स्फटिकशिखरो कैलासगिरिः अनेन राक्षस-

राव । शूराः श्रोत्रपथे पुनः कति कति प्राञ्चः पदं चक्रिरे
तेषां वै हि विलङ्घ्य साम्यपदवीं जागर्त्ति लङ्काभटः ।
यद्दोर्मण्डलचण्डपीड़नवशान्निस्यन्दिरक्तच्छटा-
शङ्कामङ्कुरयन्ति शङ्करगिरेरद्यापि धातुद्रवाः ॥ ३८ ॥

---

राजेन वै हि निश्चितम् उद्धृत्य, तथा तेन प्रकारेण समन्तात् आमूलं त्रुटितेन विच्छिन्नेन वसुधाबन्धेन विधुरः विश्लथः विदधे कृतः येन कैलासविश्लथीकरणेन अद्यापि त्रिपुरहरस्य शम्भोः नृत्यव्यतिकरः नर्त्तनकेलिः समन्तात् आमूलं मूलपर्य्यन्तं खलु निश्चये चलनकात् प्रकम्पनात् अमुं कैलासम् उल्ललयति कम्पयति । यस्य एतावान् प्रभावः तस्य रामाद् भयमित्युक्तिरयुक्तैव भवत इति भावः । शिखरिणी वृत्तम् ॥ ३८ ॥

शूरा इति । कति कति द्वित्राः पञ्च षड् वेति भावः, प्राञ्चः प्राचीनाः हिरण्याक्षादय इति भावः, शूराः वीर्य्यवन्तः श्रोत्रपथे श्रवणेन्द्रियमार्गे पदं स्थानं चक्रिरे कृतवन्तः, किन्तु लङ्काभटः लङ्कावीरः तेषां प्राचां वीराणां वै हि निश्चितं साम्यपदवीं सादृश्यं विलङ्घ्य अतिक्रम्य जागर्त्ति तानप्यतिशय्य राजते इत्यर्थः । यस्य लङ्काभटस्य दोर्मण्डलेन भुजसमूहेन यत् चण्डं प्रखरं पीड़नम् उन्मूलनमिति यावत्, तदेव वशः हेतुः तस्मात् शङ्करगिरेः कैलासस्य धातुद्रवाः गैरिकादिधातुनिस्रवाः अद्यापि निस्यन्दते इति निस्यन्दिनो या रक्तच्छटा रक्तधारा तस्याः शङ्काम् अङ्कुरयन्ति उत्पादयन्ति । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३९ ॥

इन्द्रं माल्यकरं, सहस्रकिरणं द्वारि प्रतीहारकं,
चन्द्रं छत्रधरं, समीरवरुणौ सम्मार्ज्जयन्तौ गृहान् ।
पाचक्ये परिनिष्ठितं हुतवहं किं मद्गृहे नेक्षसे ?
रक्षोभक्ष्यमनुष्यमात्रवपुषं तं राघवं स्तौ ष किम् ? ॥४०॥

विभी । जातिं मानय मानुषीमतिबली दृष्टस्त्वया हैहयः
स्मृत्वा बालिभुजौ च साम्प्रतमवज्ञातुं न ते वानराः ।
तत् पौलस्त्य ! महाग्निहोत्रिणमहं त्वामेवमभ्यर्थये
सीतामर्पय मुञ्च च क्रतुभुजः काराकुटुम्बीकृतान् ॥४१॥

---

इन्द्रमिति । मम गृहे इन्द्रं देवराजं माल्यकरं, सहस्रकिरणं सूर्य्यं द्वारि प्रतीहारकं द्वाररक्षकमित्यर्थः, चन्द्रं छत्रधरं, समीरवरुणौ गृहान् सम्मार्जयन्तौ समीरं मार्जनकरं वरुणं जलधौतकरमिति भावः, हुतवहम् अग्निं पाचकस्य कर्म्म पाचक्यं तस्मिन् पाककर्म्मणीत्यर्थः, परिनिष्ठितं नियुक्तं न ईक्षसे किम्? न पश्यसि किम् ? रक्षसां भक्ष्यो यो मनुष्यः तन्मात्रवपुषं मनुष्यशरीरमात्रमित्यर्थः, तं राघवं रामं किं कथं स्तौषि प्रशंससि ? । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४० ॥

जातिमिति । हे पौलस्त्य ! रावण ! मानुषीं मनुष्यसम्बन्धिनीं जातिं मानय मा अवमन्यस्वेति भावः, त्वया हैहयः कार्त्तवीर्य्यः अतिबलो अतिवीर्य्यवान् दृष्टः, कार्त्तवीर्य्यात् पराजयं प्राप्य तत्कारागारे उषितत्वादिति भावः, बालिनो वानरस्य भुजौ बाहू, तद्बलमित्यर्थः, स्मृत्वा यस्त्वां कक्षे निक्षिप्य समस्तु सागरेषु सन्ध्यामुपासितवानिति भावः, वानराः ते तव अवज्ञातुं न साम्प्रतं न युक्तं, "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । तत् तस्मात् महात्मम् अग्निहोत्रिणं साग्निकं, वेदविदुषमिति

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्
अस्मद्भाग्यविपर्ययाद्यदि पुन (पर) र्देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुत् यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥ ४२ ॥

अजनि रजनिमध्ये मण्डलं चण्डरश्मेः
धनुरुदयमनभ्रं बिभ्रती द्यौश्चकास्ति ।

---

भावः, त्वाम् अहम् एवम् अभ्यर्थये याचे, सीताम् अर्पय, रामायेति शेषः, काराकुटम्बीकृतान् कारानिरुद्धान् क्रतुभुजो देवांश्च मुञ्च त्यज । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४१ ॥

राम इति । असौ रामः विक्रमगुणैः विक्रमाश्च गुणाश्च शीलदाक्षिण्यादयश्च तैः भुवनेषु परां महतीं प्रसिद्धिं ख्यातिं, प्रतिष्ठामित्यर्थः, प्राप्तः, अस्माकं भाग्यविपर्ययात् दुर्दैववशात् इत्यर्थः, देवः महाराजः पुनः तं रामं यदि न जानाति, पुनरित्यत्र परमिति पाठे परं केवलमित्यर्थः, सर्व एव भुवनलोकास्तं जानन्ति केवलं भवान् न जानातीति महदस्माकं दुर्दैवमिति भावः, एष मरुत् वायुः वन्दीव स्तुतिपाठक इव एकस्य बाणस्य आहत्या आघातेन श्रेणीभूतानां विशालानां तालानां विवरात् छिद्रात् उद्गीर्णैः उत्थितैः सप्तभिः स्वरैः "निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः" इत्यमरोक्तैः, यस्य यशांसि गायति । एकबाणाहतश्रेणीभूतेति पाठान्तरम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४२ ॥

लङ्कायां दुर्निमित्तमाह, अजनीति ।—रजनिमध्ये रात्रौ चण्डरश्मेः मण्डलम् अजनि उदभूत् । द्यौः अन्तरीक्षम् अनभ्रं

अहह ! विधिरिदानीं दृश्यते वाम एव,
प्रदिश जनकपुत्रीं, मित्रतामेतु रामः ॥ ४३ ॥
यस्यैकः कपिशावकः समतरद्दुर्लङ्घ्यमम्भोनिधिं,
दुर्भेद्यामपि देवदैत्यनिवहैर्लङ्कापुरीं प्राविशत् ।
क्षिप्त्वा तान् वनरक्षकान् जनकजां दृष्ट्वा च भङ्क्त्वा वनं
हत्वाऽक्षं प्रदहन् पुरीं गत इतो रामः कथं मानुषः ? ॥४४॥
सुवर्णपुङ्खाः सुखगाः सुतीक्ष्णा वज्रोपमा वायुसमानवेगाः ।
यावन्न गृह्णन्ति शिरांसि बाणाः प्रदीयतां दाशरथाय सीता ॥ ४५ ॥

---

निर्मेघं धनुषः शक्रचापस्य उदयं बिभ्रती दधाना सती चकास्ति राजते । अहह ! खेदे, इदानीं साम्प्रतं विधिः वामः प्रतिकूल एव दृश्यते, अतः जनकपुत्रीं प्रदिश प्रत्यर्पय, रामः मित्रतां सख्यम् एतु गच्छतु, प्राप्नोत्वित्यर्थः । मालिनी वृत्तम् ॥ ४३ ॥

यस्येति । यस्य रामस्य एकः कपिशावकः वानरशिशुः दुर्लङ्घ्यं केनापि लङ्घितुमशक्यम् अम्भोनिधिं समतरत् समुत्तीर्णवान् देवदैत्यनिवहैः सुरासुरवृन्दैरपि दुर्भेद्यां दुर्लङ्घ्यां, दुष्प्रवेशामिति यावत्, लङ्कापुरीं प्राविशत्, तथा तान् वनरक्षकान् उद्यानपालान् क्षिप्त्वा निपात्य जनकजां सीतां दृष्ट्वा (वनम् अशोकं भङ्क्त्वा विमथ्य अक्षं तव कुमारमिति भावः, हत्वा विनाश्य च पुरीं लङ्कां प्रदहन् भस्मीकुर्वन् इतो लङ्कायाः गतः प्रतिनिवृत्तः, स रामः कथं मानुषः ? सामान्यमानव इव कथमवज्ञायते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४४ ॥

सुवर्णेति । सुगमम् ॥ ४५ ॥

गतायुषं त्वां विपरीतबुद्धिं
निःसंशयं राक्षस ! लक्षयामि ।
यो मां हितं तथ्यमपि ब्रुवन्तं
न मन्यसे राक्षसवीरमध्ये ॥ ४६ ॥

अथ चरणहतो दशाननेन
प्रकृतिविपर्य्ययमस्य लक्षयित्वा ।
सपदि च परिहृत्य तं स मन्त्री
परिकुपितो मनसा जगाम रामम् ॥ ४७ ॥

तथापि सानुनयम् ।

प्रगृह्य रत्नानि विभूषणानि
वासांसि दिव्यानि मणींश्च मुख्यान् ।

---

गतायुषमिति । हे राक्षस ! त्वां गतायुषम् आयुःशेषशालिनम् अतएव विपरीतबुद्धिम् 'आसन्नकाले विपरीतबुद्धिः' इति शास्त्रात् निःसंशयं निश्चितं लक्षयामि अवधारयामि, यस्त्वं हितं तथ्यं सत्यं ब्रुवन्तमपि मां राक्षसानां मध्ये वीराः राक्षसवीराः तेषां मध्ये न मन्यसे ? न गणयसि ? रामगुणकीर्त्तनेन वीर्य्यशून्यं भीतं मां कथयसीति भावः । उपजाति वृत्तम् ॥ ४६ ॥

अथेति । अथ एवं कथनानन्तरं स मन्त्री विभीषणः दशाननेन रावणेन चरणहतः पादताड़ितः अतएव अस्य रावणस्य प्रकृतिविपर्य्ययं स्वभाववैपरीत्यं लक्षयित्वा परिकुपितः सन् सपदि झटिति तं रावणं परिहृत्य परित्यज्य च मनसा रामं जगाम सस्मारेत्यर्थः । पुष्पिताग्रा वृत्तम् ॥ ४७ ॥

सीताञ्च रामाय निवेद्य देवीं
वसाम लङ्कामपयातु शङ्का ॥ ४८ ॥

रावणः ।

जानामि सीतां जनकप्रसूतां जानामि रामं मधुसूदनञ्च ।
वधञ्च जानामि निजं मनुष्यात्तथापि सीतां न समर्पयामि ॥४९॥

विभो । यस्य त्र्यम्बकमौलिखेलदमलस्वर्लोककल्लोलिनी-
लीलालङ्घनलम्पटेन यशसा दिग्भित्तयः चालिताः ।
सोऽपि त्वं जनकाधिराजतनयालब्धाभिलाषः कथं
हा ! जातोऽसि पुलस्त्यसन्ततियशःशीतद्युतेर्लाञ्छनम् ॥५०

---

प्रगृह्येति । रत्नानि विभूषणानि रत्नालङ्कारान् दिव्यानि वासांसि वसनानि मुख्यान् उत्कृष्टान् मणींश्च रत्नानि च देवीं सीताञ्च रामाय निवेद्य अर्पयित्वा रामेण सह सन्धिं कृत्वेति भावः, लङ्कां वसाम शङ्का भयम् अपयातु नश्यतु । उपजाति वृत्तम् ॥ ४८ ॥

जानामीति । जनकप्रसूतां सीतां जानामि, लक्ष्मीमिति भावः, रामञ्च मधुसूदनं जानामि । मनुष्यात् निजं वधञ्च जानामि, मनुष्यादित्यत्र दशास्य इति पाठे दशास्योऽहमित्यर्थः । तथापि सीतां न समर्पयामि निहतो गन्तुमिच्छामि तद्विष्णोः परमं पदमिति भावः । उपजाति वृत्तम् ॥ ४९ ॥

यस्येति । यस्य तव त्र्यम्बकस्य मौलौ शिरसि खेलन्ती क्रीड़न्ती अमला निर्म्मला या स्वर्लोककल्लोलिनी मन्दाकिनीत्यर्थः, तस्या लीलया यत् लङ्घनं तस्मिन् लम्पटः लुब्धः तेन सुरलोकव्यापिनेति भावः, यशसा दिग्भित्तयः दिश एव कुड्यानि चालिताः शोधिताः, दिगन्ताः व्याप्ता इति भावः,

ज्ञात्वासौ वत ! रावणानुजबली लङ्कां कलङ्काङ्किताम्
आशामस्य विचारयन् बहुविधं न्यक्कुर्वतः श्रेयसाम् ।
इत्यन्विष्य विसृज्य मानमधुना त्यक्त्वाग्रजं नग्नवद्
यातः सानुचरस्तथैव झटिति श्रीरामसान्निध्यकम् ॥ ५१ ॥
ततश्चतुर्भिः सह मन्त्रिपुत्रैरुपेत्य रक्षःकुलधूमकेतुम् ।
लङ्कामहातङ्क इवाम्बरेण विभीषणो राघवमन्वियाय ॥ ५२ ॥

---

सोऽपि तादृशकीर्त्तिशाली अपि त्वं जनकाधिराजतनयायां सीतायां लब्धाभिलाषः जाताभिलाषः सन् इत्यर्थः, हा खेदे, पुलस्त्यस्य ब्रह्मर्षेः सन्ततीनां सन्तानानां यश एव शीतद्युतिः चन्द्रः तस्य लाञ्छनं कलङ्कः कथं जातोऽसि ? । एतादृशं महत् पुलस्त्यकुलं कलङ्कयसीति भावः । रूपकालङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५० ॥

ज्ञात्वेति । वत खेदे, असौ रावणस्य अनुजो बली बलवान् विभीषणः लङ्कां कलङ्काङ्कितां दूषितामित्यर्थः, ज्ञात्वा श्रेयसां मङ्गलानाम् आशां न्यक्कुर्वतः अगृह्णत इति यावत्, अस्य रावणस्य इति इत्थम् अन्विष्य अनुसन्धाय बहुविधं विचारयन्, श्रेयसामाशा नास्तीति विवेचयन्नित्यर्थः, अधुना मानं विसृज्य त्यक्त्वा, स्वगौरवत्यागेन पराश्रयणादिति भावः, नग्नवत् बौद्धक्षपणकवत् अग्रजं ज्येष्ठं रावणं प्राक्तनधर्म्मम् अग्रवर्त्तिपित्रादिपरिजनं वा त्यक्त्वा तथैव नग्नवदेव सानुचरः ससहचरः सन् झटिति सपदि श्रीरामस्य सान्निध्यकं सन्निधिं यातः गतवान् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५१ ॥

तत इति । ततः अनन्तरं विभीषणः चतुर्भिः मन्त्रिपुत्रैः सह उपेत्य लङ्काया महान् आतङ्क इव भयमिव अम्ब-

विभीषणे समायाते सूर्य्यप्रतिमतेजसि।
तदादौ रावणभ्रान्त्या भङ्गः कपिकुलेऽभवत् ॥ ५३ ॥

रामं प्रति दौवारिकः।

देव! द्वारि नभःपथेषु मिलिताः पञ्च त्रियामाचराः,
एकस्तत्र विभीषणो दशमुखभ्राता, परे मन्त्रिणः।
याचन्ते शरणं भयापहरणं, किन्तन्न जानीमहे
कृत्याकृत्यविचारणैकनिपुणस्तत्र प्रमाणं प्रभुः ॥ ५४ ॥

---

रेण आकाशेन रक्षःकुलधूमकेतुं राक्षसकुलदाहकमग्निं राघवं रामम् अन्विष्याय शरणं जगामेत्यर्थः। उपजाति वृत्तम् ॥ ५२ ॥

विभीषणे इति। तदा तस्मिन् काले सूर्य्यप्रतिमतेजसि विभीषणे समायाते सति आदौ प्रथमतः रावणभ्रान्त्या रावणोऽयमिति भ्रमेण कपिकुले वानरवृन्दे भङ्गः भयात् प्रद्रवः अभवत्। अनुष्टुप् वृत्तम् ॥ ३ ॥

देवेति। हे देव! द्वारि द्वारदेशे नभःपथेषु आकाशमार्गेषु पञ्च त्रियामाचराः निशाचराः मिलिताः समागता इत्यर्थः। तत्र तेषु मध्ये दशमुखस्य रावणस्य भ्राता विभीषणः एकः, परे चत्वारः, मन्त्रिणः तस्येति शेषः; शरणं रक्षकं, त्वामिति शेषः, भयापहरणम् अभयमित्यर्थः, याचन्ते प्रार्थयन्ते, तत् तेषामभिमतमिति भावः, किम्? न जानीमहे नावधारयामः, तत्र तस्मिन् विषये कृत्यस्य कर्त्तव्यस्य अकृत्यस्य अकर्त्तव्यस्य च विचारणे अवधारणे एकः मुख्यः निपुणः दक्षः प्रभुः देवः प्रमाणं देवो यदाज्ञापयतीति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ५४ ॥

श्रीरामेण वीक्षितो हनूमान् ।

सत्यं दाशरथे ! विभीषण इति भ्राताऽस्ति लङ्कापतेः
निद्रासिन्धुतिमिङ्गिलस्य चरमः श्रीकुम्भकर्णस्य यः ।
दाक्षिण्याद्युपलक्षितः पितृकुलापेक्षावलक्षाशयो
रक्षोलोकविलक्षणां कलयति प्रत्यक्षलक्ष्मीमयम् ॥ ५५ ॥

सुग्रीवः लक्ष्मणं प्रति ।

यस्य न स्वजने प्रीतिः कुतस्तस्य परे जने ।
शङ्कितव्यो हि सौमित्रे ! दूरस्थोऽपि विभीषणः ॥ ५६ ॥

---

सत्यमिति । हे दाशरथे ! विभीषण इति लङ्कापतेः रावणस्य भ्राता अस्ति सत्यं यः निद्रा एव सिन्धुर्नदी सागरो वा, "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः, तस्य तिमिङ्गिलः तिमिं मत्स्यविशेषं गिलतीति तथोक्तः, "अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः ॥" इत्युक्तेः ; तस्य सततनिद्रासमुद्र-विराजमानस्येति भावः, श्रीकुम्भकर्णस्य चरमः कनीयान् । दाक्षिण्यादिभिः गुणैः उपलक्षितः युक्तः पितृकुलापेक्षया पुलस्त्य-वंशापेक्षया वलक्षः अवदातः, विशुद्ध इत्यर्थः, "अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः" इत्यमरः, आशयो यस्य तथाभूतः, अयं विभीषणः रक्षोलोकविलक्षणां राक्षसकुलविपरीतां प्रत्यक्षलक्ष्मीं परिदृश्यमानश्रियं कलयति धारयति । शार्दूल-विक्रीडितं वृत्तम् ॥ ५५ ॥

यस्येति । हे सौमित्रे ! लक्ष्मण ! यस्य जनस्य स्वजने आत्मीयजने, सहोदरे इति भावः, न प्रीतिः, अस्तीति शेषः, तस्य परेऽन्यस्मिन् जने कुतः ? प्रीतिरिति शेषः, अतः दूरस्थोऽपि

अथ रामलक्ष्मणयोरुक्तिप्रत्युक्ती ।

धर्मात्मा दशकन्धरात् वहिरभूत् कस्मादयं रावणात् ?
सम्भ्रान्तोऽविनयेन किं न कुरुते सुग्रीववद्वालिनः ।
रक्षोराजसहोदरस्य निभृतारम्भोऽपि सम्भाव्यते ?
किं कुर्मः शरणागतं रिपुमपि द्रुह्यन्ति नेक्ष्वाकवः ॥ ५७ ॥
दृष्ट्वा वानरवाहिनीमनिभृताहङ्कारहुङ्कारिणीं
शङ्कावान् स विभीषणः क्षणमभूद्दुर्वारदोर्विक्रमः ।

---

दूरवर्त्ती अपि, समीपस्थे किं वक्तव्यमिति भावः, दूरस्थितत्वात् सहसा किमप्यनिष्टं कर्त्तुमक्षमोऽपीति तात्पर्य्यं, शङ्कितव्यः हि शङ्कास्थानमेवेत्यर्थः । अनुष्टुप् वृत्तम् ॥ ५६ ॥

धर्मात्मेति । अयं धर्म्मात्मा धार्मिकः,यदीति शेषः, तदा दशकन्धरात् रावणात्, भ्रातुरिति शेषः, रावणादित्यत्र सोदरादिति पाठान्तरम् ; कस्मात् किमर्थं वहिरभूत् विपदि बन्धुं तत्याजेति भावः । इति लक्ष्मणोक्तिः । अविनयेन दुराचारेण, रावणस्येति भावः, सम्भ्रान्तः सम्यक् त्रस्तः वालिनः सुग्रीववत् किं न कुरुते ? सुग्रीवो यथा वालिनस्त्रस्तः तं परित्यज्य माम् आश्रितः तथायमपि सम्भवतीति भावः । इति रामोक्तिः । रक्षोराजस्य राक्षसपतेः सहोदरस्य विभीषणस्यास्य निभृतारम्भः कूटकरणोपक्रमः अपि सम्भाव्यते छलेनास्मासु प्रविश्य गूढमनिष्टार्थमस्य एष समुद्यमः सम्भवत्यपीति भावः । इति लक्ष्मणोक्तिः । किं कुर्म्मः ? इक्ष्वाकवः इक्ष्वाकुवंश्याः रिपुमपि शत्रुमपि शरणागतं न द्रुह्यन्ति न हिंसन्ति । इति रामोक्तिः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५७ ॥

दृष्ट्वेति । दुर्वारः दुर्लङ्घ्यः दोर्विक्रमः भुजबलं यस्य तथोक्तः स विभीषणः वानराणां वाहिनीं सेनाम् अनिभृतेन प्रकटिते-

पश्यन् दाशरथिं प्रमोदलहरीगम्भीर उज्जृम्भित-
स्तम्भः संवृतविक्रमो न चलितुं स्थातुं न चायं क्षमः ॥ ५८ ॥

सुग्रीवस्य श्रियं दृष्ट्वा लक्ष्मणस्य च सेवनम् ।
विभीषणस्य दोलेव मतिरायाति याति च ॥ ५९ ॥

दृष्ट्वा वानरवाहिनीमनिभृताहङ्कारहुङ्कारिणीं

---

नेत्यर्थः, अहङ्कारेण हुङ्कारः सिंहनादः तद्वती तां दृष्ट्वा क्षणं शङ्कावान् शङ्कितः, एते मां प्रति किमाचरिष्यन्तीति सञ्जातशङ्कः अभूत् । ततश्च दाशरथिं रामं पश्यन् अवलोकयन् प्रमोदानाम् अन्तःप्रसादजनितानन्दानां लहरीभिः तरङ्गैः गम्भीरः परिपूर्ण इति भावः, उज्जृम्भितस्तम्भः विस्फुरितस्तब्धीभावः संवृतः सङ्कोचितः विक्रमः तेजः येन तथोक्तः सन् निष्प्रताप: इत्यर्थः, चलितुं न स्थातुञ्च न क्षमः न शक्तः, आसीदिति शेषः । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ५८ ॥

सुग्रीवस्येति । विभीषणस्य मतिः सुग्रीवस्य श्रियं शोभां, समृद्धिमिति भावः, लक्ष्मणस्य सेवनञ्च दृष्ट्वा दोलेव आयाति याति च मया एषा श्रीः प्राप्यते न वा, मया ईदृशः सेवाधिकारो लभ्यते न वेति संशयदोलाकृष्टचेता आसीत्, विभीषण इति भावः । अथवा सुग्रीवेण यथा भ्रातुर्वालिनस्त्यागात् रामाश्रयणेन श्रीः समासादिता तथा मयापि रामाश्रयणेन श्रीः लभ्या इति हेतोः राम एव आश्रयणीय इति एका चिन्ता, अथवा लक्ष्मण इव स्वकीयम् अग्रजं रावणम् एव सेवे, अतः मम रामः न आश्रयणीय इति द्वितीया चिन्ता, इति चिन्ताद्वयेन विभीषणस्य चित्तमाकुलितमभूत् इति भावः । अनुष्टुप् वृत्तम् ॥ ५९ ॥

पौलस्त्यः प्रविवेश विस्मित इव प्रत्येकमालोकयन्।
सुग्रीवप्रमुखैरयं प्रतिपथं प्रत्युद्गमात् पूजितो
निर्व्याजं रघुनन्दनस्य चरणे चिक्षेप हस्तं शिरः॥ ६०॥

नृपतिमुकुटरत्न! त्वत्प्रयाणप्रशस्तिं
प्लवगभरनिमज्जद्भूभराक्रान्तभोगः।
लिखति दशनटङ्कैरुत्पतद्भिः पतद्भिः
जरठकमठभर्त्तुः कर्परे सर्पराजः॥ ६१॥

---

दृष्ट्वेति। अयं पौलस्त्यो विभीषणः वानरवाहिनीम् अनिभृताहङ्कारहुङ्कारिणीं दृष्ट्वा लिखित इव चित्रित इव प्रत्येकम् आलोकयन् पश्यन् प्रविवेश, शिविरमिति शेषः। ततः सुग्रीवप्रमुखैः सुग्रीवादिभिः प्रतिपथं प्रतिपदक्षेपमिति भावः, प्रत्युद्गमात् एह्येहीति पूजितः सन् निर्व्याजम् अकपटं यथा तथा रघुनन्दनस्य चरणे हस्तं शिरश्च चिक्षेप अर्पयामास। शार्दूलविक्रीडितं वृत्तम्॥ ६०॥

नृपतीति। हे नृपतिमुकुटरत्न! राजचूडामणे! सर्पराजः शेषनागः प्लवगानां वानराणां भरेण निमज्जन् अधोगच्छन् यो भूभरः पृथ्वीभरः तेन आक्रान्तः भोगः देहः फणमण्डलं वा यस्य तथाभूतः सन्, "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः, उत्पतद्भिः भूभारोद्धरणार्थम् उन्नमद्भिः किन्तु पतद्भिः अतिभारधारणाक्षमतया निपतद्भिः दशनटङ्कैः दन्तरूपपाषाणदारणास्त्रभेदैः जरठः अतिजीर्णः यः कमठभर्त्ता कूर्मराजः, तदधःस्थित इति भावः, तस्य कर्परे पृष्ठफलके तव प्रयाणस्य युद्धार्थं प्रस्थानस्य प्रशस्तिं प्रशंसावादं लिखति, यथा कोऽपि कस्यापि महात्मनो राज्ञश्चरितं चिरस्थायि भवितेति पाषा-

भ्रान्त्वा दिग्वलयं दशास्यदलन ! त्वत्कीर्त्तिहंसी दिवं
याता ब्रह्ममरालसङ्गमवशात्तत्रैव गर्भिण्यभूत् ।
पश्य, स्वर्गतरङ्गिणीपरिसरे कुन्दावदातं तया
मुक्तं भाति विशालमण्डकमिदं शीतत्विषो मण्डलम् ॥ ६२ ॥
कृत्वा मेरुमुदूखलं प्रहसता वृन्देन दिग्योषितां
स्वर्गङ्गामुषलेन शालय इव त्वत्कीर्त्तयः कण्डिताः ।
तासां राशिरसौ तुषारशिखरी, तारागणास्तत्कणाः,
किञ्चान्यच्छशिखण्डसूर्पविसरज्ज्योत्स्नाश्च तत्पांशवः ॥ ६३ ॥

---

णादिफलके खोदित्वा चर्णेन लिखति तद्वदिति भावः । मालिनी वृत्तम् ॥ ६१ ॥

भ्रान्त्वेति । हे दशास्यदलन ! रावणारे ! तव कीर्त्तिरेव हंसी दिग्वलयं दिङ्मण्डलं भ्रान्त्वा पर्य्यटित्वा, व्याप्येति भावः, दिवं स्वर्गं याता गता तत्र ब्रह्मणो यो मरालः राजहंसः, वाहनभूत इति भावः, तेन सङ्गमः तस्मात् गर्भिणी एव गर्भवत्येवाभूत्, तत्र परिपुष्टासीदिति भावः । पश्य अवलोकय, स्वर्गतरङ्गिण्याः मन्दाकिन्याः परिसरे परितः प्रदेशे तया कीर्त्तिहंस्या मुक्तं परित्यक्तं, प्रसूतमिति यावत्, कुन्दावदातं कुन्दवत् धवलं विशालं प्रकाण्डम् इदम् अण्डकं डिम्बं शीतत्विषो मण्डलं चन्द्रमण्डलं, व्यस्तरूपकम्; भाति राजते । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६२ ॥

कृत्वेति । दिश एव योषितः दिग्योषितः तासां वृन्देन समूहेन, दिगङ्गनाभिरित्यर्थः, प्रहसता सता मेरुं सुमेरुगिरिम् उदूखलं कण्डनपात्रं कृत्वा स्वर्गङ्गा मन्दाकिनी एव मुषलं तेन तव कीर्त्तयः शालय इव धान्यानीव कण्डिताः निस्तुषीकृता

वीर ! क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषः
त्वत्कीर्त्तेस्तुलनां कलङ्कमलिनो धत्ते कथं चन्द्रमाः ? ।
स्यादेवं त्वदरातिसौधशिखरप्रोद्भूतशष्पाङ्कुर-
ग्रासव्यग्रमनाः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ ६४ ॥

---

इत्यर्थः, असौ तुषारशिखरी हिमगिरिः तासां निस्तुषीकृत-कीर्त्तीनां राशिः स्तोमः, तारागणा नक्षत्रवृन्दानि तासां त्वत्-कीर्त्तीनां कणाः क्षुद्रांशाः, किञ्च अन्यत् अपरं शशिखण्ड एव सूर्पः तस्मात् विसरन्त्यः निःसरन्त्यः ज्योत्स्नाः चन्द्रिकाः तासां त्वत्कीर्त्तीनां पांशवः रजांसि, कण्डनरेणवश्चेत्यर्थः । अत्र शालय इवेत्युपमा अन्यत् सर्वं रूपकमित्यनयोरङ्गाङ्गिभावः सङ्करः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६३ ॥

वीरेति । हे वीर ! कलङ्केन मलिनः चन्द्रमाः क्षीरसमुद्रस्य सान्द्रा घना या लहरी तरङ्गः तस्याः लावण्यलक्ष्मीं कान्ति-शोभां मुष्णाति हरतीति तथोक्तायाः तव कीर्त्तेः तुलनां साम्यं कथं केन प्रकारेण धत्ते ? धारयति ? न कथमपीत्यर्थः । यदि पुनः किन्तु यदीत्यर्थः, तस्य चन्द्रमसः अङ्कशायी उत्सङ्गवर्त्ती मृगः तव अरातिः शत्रुः तस्य सौधशिखरं हर्म्योपरिभागः, तस्मिन् प्रोद्भूताः प्रकर्षेण जाताः ये शष्पाणां तृणानाम् अङ्कुराः प्ररोहाः, शत्रुनिधनात् शून्यतत्सौधशिखरेषु मार्जनादिसंस्कारा-भावात् शष्पोत्पत्तिरिति भावः, तेषां ग्रासे कवलने व्यग्रम् आसक्तं मनो यस्य तथाभूतः सन् पतेत्, तदा एवं त्वत्कीर्त्ति-साम्यमित्यर्थः, स्यात् भवेत् । निष्कलङ्कश्चन्द्रस्तव कीर्त्तिसाम्यं लभते इति भावः । अत्र यद्यर्थबलादाहृतसाम्यसम्बन्धाध्यव-सायादतिशयोक्तिरलङ्कारः, "सिद्धत्वेऽध्यवसायस्यातिशयोक्ति-र्निगद्यते" इति लक्षणात् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६४ ॥

कोदण्डमण्डलविनिःसृतचण्डबाण-
तुण्डोरुखण्डितदशाननबाहुदण्डः ।
आखण्डलारिगलखण्डनचन्द्रहासः
श्रीजानकीपरिवृढः सुदृढप्रतिज्ञः ॥ ६५ ॥

पातुं त्रीणि जगन्ति सन्ततमकूपारात् समभ्युद्धरन्
धात्रीं कोलकलेवरो हरिरभूद्यस्यैकदंष्ट्राङ्कुरात् ।
कूर्म्मः कन्दति, नालति द्विरसनः, पत्रन्ति दिग्दन्तिनो,
मेरुः कोषति, मेदिनी जलजति, व्योमापि तोलम्बति ॥ ६६ ॥

---

कोदण्डेति । सुदृढा प्रतिज्ञा यस्य सः सुदृढप्रतिज्ञः सत्यसन्ध इत्यर्थः, कोदण्डमण्डलात् धनुर्मण्डलात् विनिःसृतस्य विनिर्गतस्य चण्डस्य तीक्ष्णस्य बाणस्य तुण्डेन अग्रेण उरु दृढं यथा तथा खण्डिताः निकृत्ताः दशाननस्य रावणस्य बाहुदण्डाः येन तथोक्तः आखण्डलस्य इन्द्रस्य अरीणां शत्रूणां गलखण्डनः कण्ठकृन्तनः चन्द्रहासः असिः यस्य तथाभूतः श्रीजानकीपरिवृढः श्रीमान् सीतापतिः, जयतीति शेषः । वसन्ततिलकं वृत्तम् ॥ ६५ ॥

पातुमिति । हरिः विष्णुः अकूपारात् प्रलयसागरात् धात्रीं पृथ्वीं समभ्युद्धरन् समुत्तोलयन् सन्ततं सततं त्रीणि जगन्ति भुवनानि पातुं रक्षितुं कोलकलेवरः वराहमूर्त्तिः अभूत्, यस्य कोलकलेवरस्य हरेः एक एव दंष्ट्राङ्कुरः दशनप्ररोहः तस्मात् कूर्म्मः कमठराजः कन्दति कन्दो मूलं तदिवाचरति, द्वे रसने जिह्वे यस्य स द्विरसनः नागराजोऽनन्त इत्यर्थः, नालति नालमिवाचरति, दिग्दन्तिनः दिशागजाः पत्रन्ति पत्राणीवा-

कूर्म्मः पादोऽस्य, यष्टिर्भुजगपतिरसौ, भाजनं भूतधात्री,
तैलोत्पूराः समुद्राः कनकगिरिरयं दीप्तवर्त्तिप्ररोहः।
अर्चिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना
शत्रुश्रेणी पतङ्गाः, ज्वलति रघुपते ! त्वत्प्रतापप्रदीपः॥ ६७ ॥

तुलाधारो धाता, वहति वसुधा शूर्पपदवीं,
फणीशः स्यात्सूत्रं कनकशिखरी मानपलिका।
तुलादण्डः सत्यं यदि भवति दामोदरगदा,
तथाप्येषोऽशक्यस्तव गुणसमूहस्तुलयितुम्॥ ६८ ॥

---

चरन्ति, मेरुः सुमेरुगिरिः कोषति कोषो मुकुलं स इवाचरति, मेदिनी पृथ्वी जलजति जलजं पद्मं."जलजं शङ्खपद्मयोः" इत्यमरः, तदिवाचरति, व्योम आकाशमपि रोलम्बति रोलम्बो भ्रमरः स इवाचरति, स हरिस्त्वमिति भावः। उपमालङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्॥ ६६ ॥

कूर्म्म इति। हे रघुपते ! तव प्रताप एव प्रदीपः ज्वलति दीप्यते। अस्य प्रदीपस्य पादः कूर्म्मः कमठपतिः, असौ भुजगपतिः अनन्तनागः यष्टिः दण्डः, भूतधात्री पृथिवी भाजनम् आधारः, समुद्राः तैलोत्पूराः तैलनिवहाः, अयं कनकगिरिः सुमेरुः दीप्तः वर्त्तिप्ररोहः दशाङ्कुरः, चण्डांशुरोचिः सौरालोकः अर्चिः शिखा, "अर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः, गगनस्य मलिनिमा मालिन्यं कज्जलं, तथा दह्यमाना शत्रुश्रेणी शत्रुसमूहः पतङ्गाः शलभाः। रूपकमलङ्कारः। स्रग्धरा वृत्तम्॥६७॥

तुलाधार इति। धाता ब्रह्मा तुलाधारः तोलनस्तम्भ इत्यर्थः, स्यात् यदि, वसुधा पृथ्वी शूर्पपदवीं तोलनपात्ररूपशूर्पतामित्यर्थः, वहति यदि, फणीशः अनन्तनागः सूत्रं रज्जुः

का शृङ्गारकथा कुतूहलकथा गोतादिकानां कथा
माद्यद्दन्तिकथा तुरङ्गमकथा कोदण्डदोक्षाकथा ।
एकैवास्ति परं पलायनकथा त्वद्वैरिभूमीभुजां
देव ! श्रीरघुनाथ ! नाथ ! जगति स्वप्नेऽपि नान्या कथा ॥ ६९ ॥

अत्युक्तौ यदि न प्रकुप्यसि, मृषावाचं न चेन्मन्यसे,
तद्ब्रूमोऽद्भुतवस्तुवर्णनविधौ व्यग्राः कवीनां गिरः ।

---

स्यात् यदि, कनकशिखरो सुमेरुगिरिः मानपलिका परिमाण-साधनभूतं पलमित्यर्थः, स्यात् यदि, दामोदरस्य विष्णोः गदा तुलादण्डः तोलनयष्टिः सत्यं भवति यदि, तथापि तव एष गुणानां समूहः तुलयितुं समीकर्त्तुं मातुं वा अशक्यः असाध्यः । अत्रापि पूर्ववत् यद्यर्थबलादाहृतेन सम्बन्धेन अध्यवसायादतिशयोक्तिः । शिखरिणी वृत्तम् ॥ ६८ ॥

केति । हे देव ! श्रीरघुनाथ ! नाथ ! जगति तव वैरिणः शत्रवः ये भूमीभुजः राजानः तेषां शृङ्गारकथा सुरतप्रसङ्गवार्त्ता का ? कुतूहलकथा उत्सवकथा का ? गीतादिकानां कथा का ? माद्यतां मदस्राविणां दन्तिनां हस्तिनां कथा तुरङ्गमाणाम् अश्वानां कथा, कोदण्डदीक्षायाः धनुर्वेदशिक्षायाः कथा च का ? नैवास्तीत्यर्थः, परं केवलम् एकैव पलायनकथा अस्ति, स्वप्नेऽपि अन्या कथा न, अस्तीति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६९ ॥

अत्युक्ताविति । हे देव ! अत्युक्तौ अतिशयोक्तौ न प्रकुप्यसि न कोपं करोषि यदि, मृषावाचं मिथ्यावाक्यं न मन्यसे चेत् न बुध्यसे यदि, तत् तदा ब्रूमः कथयामः अद्भुतवस्तुनः आश्चर्य्येतिवृत्तस्य वर्णनविधौ व्यग्राः तत्पराः कवीनां गिरः वाचः तव

देव ! त्वत्तरुणप्रतापतप( दह )नज्वालावलीशोषिताः
सर्वे वारिधयस्तवारिवनितानेत्राम्बुभिः पूरिताः ॥ ७० ॥

हनूमच्चरितमपि स्तौति ।

रथः कृत्स्नो लोको, धनुरगपतिर्ज्या फणिपतिः,
स्मरोन्माथी योधः, सरसिजभवः सारथिरपि ।
शरं शौरिर्देव ! त्रिपुरपुरदहने परिकराः
कृता दग्धैकेन प्रभटमयलङ्का हनुमता ॥ ७१ ॥

---

तरुणः प्रचण्डः प्रताप एव तपनः सूर्यः, दहनेति पाठे दहनः अग्निः, तस्य ज्वालावलीभिः किरणराजिभिः शिखाश्रेणीभिर्वा शोषिताः शोषं नीताः, तव प्रतापः कविभिर्वर्णयितुमशक्य इति भावः ; तथा तव तरुणप्रतापतपनज्वालावलीशोषिताः सर्वे वारिधयः समुद्राः तव अरिवनितानां शत्रुनारीणां नेत्राम्बुभिः पतिवियोगजनिताश्रुभिः एव पूरिताः पुनः पूर्णतां नीताः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७० ॥

रथ इति । हे देव ! त्रिपुरपुरदाहे त्रिपुरासुरनगरदाहे कृत्स्नः समग्रः लोकः भुवनं रथः, अगपतिः शैलराजः धनुः, फणिपतिरनन्तनागः ज्या मौर्वी, स्मरोन्माथी मदनान्तकः हर इत्यर्थः, योधः योद्धा, वीर इत्यर्थः, सरसिजभवः ब्रह्मापि सारथिः, शौरिः विष्णुः शरम् एते परिकरा उपकरणानि, आसन्निति शेषः, किन्तु एकेन हनुमता साधनरहितेनैवेति भावः, प्रभटमयलङ्का प्रकृष्टवीरयुता लङ्का दग्धा भस्मीभूता कृता इत्यर्थः । अत्रोपमानात् त्रिपुरदाहिनो हरादुपमेयस्य हनूमतः आधिक्यमिति व्यतिरेकालङ्कारः, "आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेकः—" इति लक्षणात् । शिखरिणी वृत्तम् ॥७१॥

ततो राम-विभीषणयोरुक्तिप्रत्युक्ती ।

अये रक्षोनाथानुज ! कुशलमद्यैव कुशलं
यतो यौष्माकीणं चरणकमलं दृक्पथमगात् ।
किमुद्देश्यं ? युष्मत्पदकमलसेवैव, विदितं,
भवानद्यैवाभून्निजनगरलङ्कापरिवृढः ॥ ७२ ॥

तस्यातिभक्तिमधिगम्य विभीषणस्य
सौमित्रिणा च रजनीचरचक्रराज्ये ।
प्रीतोऽभ्यषिचयदमुं प्रवरो रघूणां
प्रायः प्रपन्नकरुणावशगा महान्तः ॥ ७३ ॥

---

अये इति । अये रक्षोनाथस्य अनुज !, रक्षोराजानुज इति पाठान्तरं, कुशलं मङ्गलं, नु ? इति शेषः । अद्यैव कुशलं मङ्गलं, ममेति शेषः, यतः यौष्माकीणं भवदीयं चरणकमलं दृक्पथं दृष्टिपथम् अगात् दृष्टं मयेत्यर्थः । उद्देश्यम् अभिमतं किम् ? तवेति शेषः । युष्माकं पदकमलसेवैव चरणपङ्कजाराधनमेव, उद्देश्यं ममेति शेषः । विदितं ज्ञातं भवान् अद्यैव निजनगर-लङ्कायाः परिवृढः अधिपतिः, प्रभुरित्यर्थः, अभूत्, अद्यारभ्य तव लङ्काधिपत्यं जातमिति भावः । शिखरिणी वृत्तम् ॥७२॥

तस्येति । रघूणां प्रवरः श्रेष्ठः रामः तस्य विभीषणस्य अतिभक्तिम् अत्यनुरक्तताम् अधिगम्य बुद्ध्वा प्रीतः सन् सौमित्रिणा लक्ष्मणेन अमुं विभीषणं रजनीचरचक्रराज्ये राक्षस-सङ्घाधिपत्ये अभ्यषेचयत् अभिषेचयामास । तथाहि महान्तः महापुरुषाः प्रायः प्राचुर्य्येण प्रपन्नेषु आश्रितेषु या करुणा कृपा तद्वशगाः तदधीनाः, भवन्तीति शेषः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । वसन्ततिलकं वृत्तम् ॥७३॥

परस्परं वानराः ।

अद्यैवास्य विभीषणस्य शरणापन्नस्य मूर्ध्न्यानते
हर्षादत्र ददात्ययं रघुपतिर्लङ्काधिपत्यश्रियम् ।
एतस्यैव भुजाविह प्रतिभुवौ सुग्रीवराज्यार्पण-
त्रैलोक्यप्रथमानसत्यचरितौ, सर्वे वयं साक्षिणः ॥ ७४ ॥
दृष्ट्वा दाशरथेर्विभीषणमनु प्रेमाणमाकस्मिकं
सानन्दञ्च सविस्मयञ्च कपयः श्लाघासहस्रं जगुः (दधुः) ।
सुग्रीवाङ्गदजाम्बवत्प्रभृतिभिः सार्द्धं हनूमानथ
प्राज्ञस्तस्य विभीषणस्य कथनैः सौहार्दमारब्धवान् ॥ ७५ ॥

---

अद्येति । अयं रघुपतिः हर्षात् प्रीत्या अद्यैव अस्य शरणापन्नस्य शरणं गतस्य विभीषणस्य अत्र आनते मूर्ध्नि शिरसि लङ्काधिपत्यस्य श्रियं लक्ष्मीं ददाति । एतस्य रघुपतेः सुग्रीवाय यत् राज्यार्पणम् अस्मदाधिपत्यदानमित्यर्थः, तेन त्रैलोक्ये त्रिभुवने प्रथमानं प्रचरत् सत्यचरितं ययोः तौ भुजाविव बाहू एव इह विभीषणाधिराज्यदाने इति भावः, प्रतिभुवौ लग्नकौ, वयञ्च सर्वे साक्षिणः साक्षाद्द्रष्टारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७४ ॥

दृष्ट्वेति । कपयः वानराः विभीषणम् अनु विभीषणेन सहेत्यर्थः, सहार्थानुशब्दयोगे द्वितीया, "अनुस्तेषु सहार्थे च" इति वोपदेवः ; दाशरथेः रामस्य आकस्मिकं सहसोत्पन्नं प्रेमाणम् अनुरागं दृष्ट्वा सानन्दञ्च अनेन शत्रोः रावणस्य अन्तर्वार्त्तोपलम्भेन सुजयत्वसम्भव इति धियेति भावः, तथा सविस्मयञ्च श्लाघासहस्रं प्रशंसातिशयमित्यर्थः, रामस्येति भावः, जगुः कीर्त्तयामासुः, दधुरिति पाठेऽपि स एवार्थः । अथ प्राज्ञः धीमान् हनूमान्

या विभूतिर्दशग्रीवे शिरश्छेदेन शङ्करात्।
दर्शनादेव रामस्य सा विभूतिर्विभीषणे॥ ७६॥

समुद्रं प्रति श्रीरामः।

त्वमसि कुलगुरुर्मे मुञ्च वर्त्माम्बुराशे!
शिरसि विनिहितोऽयं भक्तिपूर्णोऽञ्जलिस्ते।
दशवदनहृता ते सा स्नुषा मेऽभ्युपेया
दशमुखनिधनेन चीयतां मे कलङ्कः॥ ७७॥

---

सुग्रीवाङ्गदजाम्बवत्प्रभृतिभिः सार्द्धं सह तस्य विभीषणस्य कथनैः आलापैः सौहार्दं सख्यभावम् आरब्धवान्, हनूमदादयो वानराः सर्वे विभीषणं प्रति सख्यभावमातेनिरे इति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥ ७५॥

येति। शिरसां छेदेन शङ्करतुष्ट्यर्थं कर्त्तनेन शङ्करात्, परितुष्टादिति शेषः, दशग्रीवे रावणे या विभूतिरैश्वर्य्यं, लङ्कैश्वर्य्यम् इति भावः, आसीदिति शेषः, सा विभूतिः रामस्य दर्शनादेव विभीषणे, सङ्गतेति शेषः, अचिरेणैव कालेन विभीषणस्य लङ्काधिपतित्वं भविष्यति इति भावः। अनुष्टुप् वृत्तम्॥ ७६॥

त्वमिति। हे अम्बुराशे! त्वं मे मम कुलगुरुः मत्पूर्व्वजस्य सगरस्य सन्तानत्वेनेति भावः, अतः वर्त्म पन्थानं मुञ्च देहीत्यर्थः। अयं भक्तिपूर्णः भक्त्या पूर्णः ते तव, प्रीत्यर्थमिति शेषः, अञ्जलिः शिरसि, ममेति शेषः, विनिहितः कृतः, कृताञ्जलिस्त्वां शिरसा वन्दे इति भावः। ते तव सा स्नुषा वधूः सीता दशवदनेन रावणेन हृता, मे मम अभ्युपेया अधिगन्तव्या, उद्धरणीयेति यावत्, दशमुखस्य रावणस्य निधनेन विनाशनेन मे मम कलङ्कः अपवादः चीयतां चयं गच्छतु। मालिनी वृत्तम्॥ ७७॥

प्रायोपविष्टः रामः मार्गमत्यजति सिन्धौ लक्ष्मणं प्रति।

याञ्चा दैन्यपराभवप्रणयिनी नेक्ष्वाकुभिः शिक्षिता,
सेवासंवलितः कदा रघुकुले मौलौ निबद्धोऽञ्जलिः ?।
तस्मात् लक्ष्मण! दुर्मदस्य जलधेर्दण्डार्थमभ्युद्यतः
पाणिस्तं प्रति सम्प्रति प्रतिपदं त्यक्तुं शरं वाञ्छति॥ ७८॥

सरोषम्। चापमानय सौमित्रे! शरान् कालानलोपमान्।
समुद्रं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः॥ ७९॥

दम्भोलितीव्रैर्विशिखैरनेकैरम्भोनिधिं पांशुनिधिं करिष्ये।
स्थलीकरिष्ये मरुभूमयिष्ये भस्मीकरिष्ये मृगतृष्णयिष्ये॥ ८०॥

---

याञ्चेति। हे लक्ष्मण! इक्ष्वाकुभिः इक्ष्वाकुवंश्यैः दैन्येन यः पराभवः अवमानना तस्य प्रणयिनी सहचारिणी याञ्चा प्रार्थना न शिक्षिता, रघुकुले सेवार्थं संवलितः सङ्कल्पितः अञ्जलिः कदा कस्मिन् काले मौलौ शिरसि निबद्धः कृतः ? न :कदापीति भावः; तस्मात् दुर्मदस्य दुर्विनीतस्य जलधेः दण्डार्थं दमनार्थम् अभ्युद्यतः पाणिः तं जलधिं प्रति शरं बाणं त्यक्तुं प्रतिपदं प्रतिक्षणं सम्प्रति वाञ्छति अभिलषति। शार्दूलविक्रीडितं वृत्तम्॥ ७८॥

चापमिति। हे सौमित्रे! चापं धनुः, कालानलोपमान् अन्तकाग्निनिभान् शरांश्च आनय, समुद्रं शोषयिष्यामि, प्लवङ्गमाः वानराः पद्भ्यां यान्तु गच्छन्तु। अनुष्टुप् वृत्तम्॥ ७९॥

दम्भोलितीव्रैरिति। दम्भोलिर्वज्रं तद्वत् तीव्राः उग्राः तैः अनेकैः बहुभिः विशिखैः शरैः अम्भोनिधिं सागरं पांशुनिधिं धूलिराशिमित्यर्थः, करिष्ये, स्थलीकरिष्ये अस्थलं स्थलं करिष्ये, मरुभूमयिष्ये मरुभूमिं करिष्ये, भस्मीकरिष्ये तथा

श्रीरामचन्द्रे दशवक्त्रपुर्य्या मार्गाय पाथोनिधिबद्धकोपे ।
आग्नेयमस्त्रं प्रतिसंदधाने मैनाकसिन्धू चकितावभूताम् ॥ ८१ ॥

दिशो धूमायन्ते, ज्वलितमभवत् सागरजलं,
परिभ्रेमुर्नक्राः, स्फुटनमगमन् शङ्खमणयः ।
परित्यक्ते बाणे रघुपरिवृढ़ेनाथ सहसा
दधन्मूर्त्तिं सिन्धुर्जलदमलिनां प्रादुरभवत् ॥ ८२ ॥

अथ सूर्य्योदये सूर्य्यसमुद्रयोरुक्तिप्रत्युक्ती ।

भोः सिन्धो ! भण भानुमन् ! चलसि किं ? श्रीरामभद्राशुगो-
दञ्चद्भूरिभयैः, कुतस्तव भयं, त्वत्सूनवस्तत्र हे ।

---

मृगतृष्णायिष्ये मृगतृष्णां करिष्ये । अत्रानेकक्रियास्वेककर्त्तृत्वाद्दीपकभेदः । उपजाति वृत्तम् ॥ ८० ॥

श्रीरामचन्द्रे इति । श्रीरामचन्द्रे दशवक्त्रस्य रावणस्य पुर्य्या लङ्कायाः मार्गाय पथे, पन्थानं कर्त्तुमित्यर्थः, पाथोनिधौ समुद्रे बद्धः कोपो येन तथाभूते आग्नेयमस्त्रं प्रतिसन्दधाने धनुषि योजयति सति मैनाकः सिन्धुः सागरश्च तौ चकितौ भयसम्भ्रान्तौ, "चकितं भयसम्भ्रमे" इत्युक्तेः; अभूतां बभूवतुः । इन्द्रवज्रा वृत्तम् ॥ ८१ ॥

दिश इति । अथानन्तरं रघुपरिवृढ़ेन रघुनाथेन बाणे आग्नेये परित्यक्ते सति सहसा हठात् दिशः धूमायन्ते धूममुद्गिरन्ति, सागरस्य जलं ज्वलितम् अभवत्, नक्राः कुम्भीराः परिभ्रेमुः परितो भ्रमन्ति स्म, शङ्खमणयः शङ्खरत्नानि स्फुटनं विदारणम् अगमन्, (किमधिकेन) सिन्धुः सागरः जलदमलिनां मेघश्यामलां मूर्त्तिं दधत् दधानः सन् प्रादुरभवत् आविर्बभूव । शिखरिणी वृत्तम् ॥ ८२ ॥

भो इति । भोः सिन्धो ! सागर ! इति सूर्य्यस्योक्तिः ।

तस्येन्दुर्वदने, रमा च सदने, पीयूषमाभाषणे,
बाहौ कल्पतरुर्निशातविशिखश्रेणीषु हालाहलम् ॥ ८३ ॥

अथ समुद्रः सानुनयम् ।

प्रलयदहनतीव्रं क्वाऽमितं ते शरौजः ?
क्व च मितसलिलोऽहं ? देव ! कोपं जहीहि ।

---

हे भानुमन् ! भण कथय, इति समुद्रस्य उक्तिः । किं कथं चलसि ? चलितो भवसि ? इति सूर्यस्य उक्तिः । श्रीरामभद्रस्य आशुगात् शरात् उदञ्चत् उद्गच्छत् यत् भूरि महत् भयं तैः अहं चलितोऽस्मि इति समुद्रोक्तिः । त्वत्सूनवः तव प्रसूताः चन्द्रादयः तत्र रामचन्द्रे सदा वै, तिष्ठन्ति इति शेषः, अतः कारणात् कुतः तव भयं सम्भवति ? यतः तस्य रामचन्द्रस्य वदने इन्दुश्चन्द्रः, तव पुत्र इति भावः, सदने गृहे रमा लक्ष्मीः, तव कन्या इति शेषः, आभाषणे वचने पीयूषम् अमृतं, बाहौ कल्पतरुः, यो यत् तं वाञ्छति, तद्बाहुस्तस्मै तत् ददातीति भावः । एते चन्द्रादयः तव प्रसूताः सदा रामचन्द्रे तिष्ठन्ति अतः कुतः तव भयं सम्भवति ? इति सूर्यस्य उक्तिः । अथ समुद्र आह—निशातासु तीक्ष्णासु विशिखश्रेणीषु शरनिचयेषु, रामचन्द्रस्येति शेषः, हालाहलं विषं, प्राणहरं वस्त्विति भावः, अस्तीति सर्वशेषः । यथा कुपुत्रात् पिता बिभेति तथा अहं हालाहलरूपात् कुपुत्रात् बिभेमि इति भावः, अतोऽहं तस्मात् भीतस्तत्सकाशं गच्छामीति निष्कर्षः । शार्दूलविक्रीडितं वृत्तम् ॥ ८३ ॥

प्रलयेति । हे देव ! प्रलयदहनः कल्पान्ताग्निः तद्वत् तीव्रं दारुणम् अमितम् अपरिच्छेद्यं ते तव शरौजः शरतेजः

नलकरतलकीलैर्वानरानीतशैलैः
विरचय मयि सेतुं, सुष्ठु पारं प्रयाहि ॥ ८४ ॥

नलः सेतुबन्धारम्भे रामं स्तौति ।

राममरत्नमहं वन्दे चित्रकूटकपेटकम् ।
कौशल्याशुक्तिसम्भूतं जानकीकण्ठभूषणम् ॥ ८५ ॥

अथ सेतुबन्धः ।

उत्पाट्योत्पाट्य शैलानतिबहलतलप्राप्तपातालमूलान्
उत्तुङ्गोत्तुङ्गशृङ्गानतिकलितनभोमण्डलान् दिग्विकीर्णान् ।

---

क्व ? मितसलिलः परिमितजलश्चाहं क्व ? नोभयोर्वैरभावो घटते इति भावः, तत् कोपं जहीहि त्यज, नलस्य विश्वकर्म्मतनयस्य करतलमिव कीलाः सङ्घट्टसाधनानि लौहशलाकारूपाणि द्रव्याणि येषां तैः वानरानीताः शैलाः तैः मयि सेतुं विरचय बध्नीहि, सुष्ठु सुखेन पारं प्रयाहि गच्छ । पुरा नलोत्पत्तिकाले विश्वकर्म्मा नलमातृे वरं ददौ—तव पुत्रो मम तुल्यो भविता, तेन च सागरे करतलेन प्रक्षिप्तं शैलादिकं जले न निमज्जति उपर्य्येव स्थास्यतीति रामायणवार्त्तानानुसन्धेया । मालिनी वृत्तम् ॥ ८४ ॥

राममरत्नमिति । अहं चित्रकूट एव चित्रकूटकः स्वार्थे कन्प्रत्ययः, स पेटकः समुद्गकः निभृतस्थानपात्रविशेषः यस्य तं, कौशल्या एव शुक्तिः मुक्तास्फोटः, "मुक्तास्फोटः स्त्रियां शुक्तिः" इत्यमरः, रत्नखनिरिति भावः, तस्मात् सम्भूतम् उद्भूतं जानक्याः सीतायाः कण्ठभूषणं कण्ठशोभनालङ्कारभूतं कण्ठहारभूतमिति यावत्, राम एव रत्नं तत् वन्दे प्रणमामि । रूपकमलङ्कारः । अनुष्टुप् वृत्तम् ॥ ८५ ॥

दुर्धार्य्यानाञ्जनेयप्रभृतिकपिभटास्ते समानिन्युरन्तः
सिन्धोः सन्धाय दोर्भ्यां विरचयति नलो निर्भरं सेतुबन्धम् ॥८६॥

तदवसरे रामं प्रति लक्ष्मणः।

कपीन्द्रसेनाप्लवगैः पुरोगैः पयोमयं भूवलयं व्यलोकि।
तत्पृष्ठगैः पङ्कमयं, तदन्यैरासीदिहाम्भोनिधिरेवमूचे ॥ ८७ ॥

---

उत्पाट्येति। ते आञ्जनेयप्रभृतिकपिभटाः हनूमदादि-महाकपयः अतिबहलेन अतिमहता तलेन तलभागेन प्राप्तं पातालमूलं यैः तान् उत्तुङ्गोत्तुङ्गानि अत्युन्नतानि शृङ्गाणि येषां तथोक्तान् अतिकलितम् अत्याक्रान्तं नभोमण्डलम् आकाश-मार्गः यैः तान् दिक्षु विकीर्णान् विस्तृतान् दुर्धार्य्यान् धर्त्तु-मशक्यान् शैलान् पर्वतान् उत्पाट्य उत्पाट्य सिन्धोः सागरस्य अन्तः मध्यदेशे समानिन्युः प्रचिक्षिपुः। नलः दोर्भ्यां बाहुभ्यां सन्धाय संयोज्य, तानिति शेषः, निर्भरं निरतिशयो भरो भार-सहनसामर्थ्यमित्यर्थः यस्य तादृशं सेतुबन्धं विरचयति करोति। अत्रातीते वर्त्तमानोपचारः। स्रग्धरा वृत्तम् ॥ ८६ ॥

कपीन्द्रेति। पुरोगैः अग्रगामिभिः कपीन्द्रसेनासु ये प्लवगाः उल्लम्फनगामिनः तैः भूवलयं भूमण्डलं पयोमयं जलमयं, तत्-पृष्ठगैः तेषां पृष्ठगामिभिः पङ्कमयं कर्दमबहुलं व्यलोकि दृष्टम्। तदन्यैः शेषैः पश्चाद्वर्त्तिभिरित्यर्थः, इह अम्भोनिधिः सागरः आसीत् एवम् इत्थम् ऊचे उक्तम्। एवमूचे इत्यत्र इत्यवादीत् इति पाठान्तरम्। प्रथमगामिनां प्राक् सेतुबन्धात् सागरस्य विस्तारमालोक्य भूमण्डलस्य जलमयत्वबोधः, तत्-पृष्ठगामिनां सेतोरल्पायतनत्वदृष्ट्या निक्षिप्तशैलानां कृष्णवर्ण-त्वेन पङ्कमयत्वबोधः, सर्वशेषवर्त्तिनान्तु सम्यक् सेतुबन्धदृष्ट्या

सुग्रीवः । क्रमचतुरकपोन्द्रैर्नीयमाने नगेन्द्रे
गिरिकुहरनिवासा राघव ! त्वत्प्रसादात् ।
सुरकरिकर(परि)पेयां प्राप्य मन्दाकिनीं खे
सुवलितकरदण्डाः कुम्भिनोऽम्भः पिबन्ति ॥ ८८ ॥

विभी । ये मज्जन्ति जले कियत्यपि चिरं ते प्रस्तरा दुस्तरे
सिन्धौ हन्त ! तरन्ति राक्षसभयं सम्पादयन्तो भृशम् ।
नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः
श्रीमद्दाशरथेरियं हि सहजा शक्तिः समुन्मीलति ॥८९॥

---

सागरस्य तव प्राग्वर्त्तित्वबोध इति निष्कर्षः । अनुष्टुप् वृत्तम् ॥ ८७ ॥

क्रमेति । हे राघव ! क्रमचतुराः उत्पतनपटवः कपीन्द्राः वानरवीराः तैः नगेन्द्रे पर्वतश्रेष्ठे नीयमाने सति गिरिकुहरनिवासाः तत्पर्वतगुहावर्त्तिन इत्यर्थः, कुम्भिनः दन्तिनः सुवलितः सुचालितः करदण्डः शुण्डादण्डः यैः तथाभूताः सन्तः तव प्रसादात् अनुग्रहात् खे आकाशे सुरकरिणां सुरगजानां करपेयां शुण्डादण्डपानीयां मन्दाकिनीं प्राप्य अम्भः जलं पिबन्ति । मालिनी वृत्तम् ॥ ८८ ॥

ये इति । ये कियत्यपि स्वल्पेऽपीत्यर्थः, जले मज्जन्ति ते प्रस्तराः दुस्तरे सिन्धौ भृशमत्यर्थं राक्षसानां भयं सम्पादयन्तः सूचयन्तः सन्तः इत्यर्थः, चिरं तरन्ति प्लवन्ते हन्त खेदे, एते ग्राव्णां प्रस्तराणां गुणा न, वारिधेः समुद्रस्य गुणा न, वानराणाञ्च गुणा न, इयं हि श्रीमतो दाशरथेः रामस्य सहजा स्वाभाविकी शक्तिः सामर्थ्यं समुन्मीलति समुज्जृम्भते । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८९ ॥

सुग्रीवः। दुर्वृत्तसङ्गतिरनर्थपरम्परायाः
हेतुः सतां भवति, किं वचनीयमत्र।
लङ्केश्वरो हरति दाशरथेः कलत्रं,
प्राप्नोति बन्धनमसौ किल सिन्धुराजः॥ ८० ॥

खलः करोति दुर्वृत्तं नूनं फलति साधुषु।
दशाननोऽहरत् सीताम् अभूत् बद्धो महोदधिः॥ ८१ ॥

जाम्ब। उत्तुङ्गं निजमानसादपि, दृढं सुग्रीवसख्यादपि
श्लिष्टं लक्ष्मणभक्तितोऽप्यविचलं सीताचरित्रादपि।
दीर्घं रावणमोहतोऽपि, गिरिभिस्तैस्तैरहो वानरैः
सेतुं क्षीणपथमकेतुमकरोद्रत्नाकरे राघवः॥ ८२ ॥

---

दुर्वृत्तेति। दुर्वृत्तैः दुराचारैः जनैः सह सङ्गतिः सङ्गः सतां साधूनाम् अनर्थपरम्परायाः अनिष्टसमूहस्य हेतुः कारणं भवति, अत्र विषये वचनीयं वक्तव्यं किम्? अस्तीति शेषः, न किमपीत्यर्थः, लङ्केश्वरो रावणः दाशरथेः रामस्य कलत्रं भार्य्यां हरति, असौ सिन्धुराजः सागरः बन्धनं प्राप्नोति किल। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। वसन्ततिलकं वृत्तम्॥ ८० ॥

खल इति। खलो दुर्जनः दुर्वृत्तं दुष्कृतं करोति, साधुषु तत् दुर्वृत्तं फलति, साधव एव तस्य फलं भुञ्जते इति यावत्। तथाहि दशाननः सीतामहरत्, महोदधिः समुद्रः बद्धः अभूत्। बन्धनं स्यात् महोदधौ इति च पाठः। अत्रापि पूर्ववदर्थान्तरन्यासः। अनुष्टुप् वृत्तम्॥ ८१ ॥

उत्तुङ्गमिति। अहो आश्चर्य्यं राघवः रामः वानरैः प्रयोज्यकर्त्तृभिः तैः तैः गिरिभिः पर्वतैः करणभूतैः निजमानसादपि

समुद्रबन्धनं श्रुत्वा प्रहस्तः ।

विषमजलधिमध्ये सेतुबन्धं विधाय
निशितशरनिपातैः राक्षसेन्द्रं निहत्य ।
यदि नयति स सीतां रामनामा तपस्वी,
मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ॥ ८३ ॥

---

स्वाभिलाषादपि उत्तुङ्गम् उन्नतं सुग्रीवसख्यादपि दृढ़म् अविनश्वरमिति भावः, लक्ष्मणस्य भक्तितोऽपि श्लिष्टं चिरलग्नं सीताचरित्रादपि अविचलम् अचलं, स्थिरमित्यर्थः, रावणस्य मोहतः अज्ञानादपि दीर्घं कौणपानां राक्षसानां धूमकेतुं दुर्निमित्तसूचकमुत्पातविशेषमिवेत्यर्थः, रत्नाकरे सागरे सेतुम् अकरोत् । निजमानसादित्यादिषु अपेक्षार्थे पञ्चमी । यथा स्वं चित्तम् उन्नतं, सुग्रीवसख्यं दृढ़ं, लक्ष्मणभक्तिः चिरसङ्गता, सीताचरित्रम् अचलं रावणमोहः अतिदीर्घश्च ततोऽपि सागरसेतोरुन्नतता दृढ़ता सुश्लिष्टता अचलता दीर्घता चेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८२ ॥

विषमेति । रामनामा स तपस्वी विषमजलधिमध्ये दुस्तरसागरमध्ये सेतुबन्धं विधाय कृत्वा निशितशरनिपातैः तीक्ष्णशरनिक्षेपैः राक्षसेन्द्रं रावणं निहत्य सीतां नयति यदि उद्धरति चेत् तदा मशकस्य गलकरन्ध्रे कण्ठविवरे हस्तियूथं प्रविष्टं, भवतीति शेषः । अत्र सागरबन्धनपूर्वकरावणनिधनं मशकगलरन्ध्रे हस्तियूथप्रवेश इवेति विम्बानुविम्बप्रत्यायनात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना । तदुक्तं दर्पणे—"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शना ॥" इति । मालिनी वृत्तम् ॥ ८३ ॥

अत्रावसरे रावणचेष्टा।

आदौ जहास बहुविस्मयमाप मध्ये,
सेतोः समाप्तिसमये स निशाचरेन्द्रः।
उद्भूतघर्म्मघननिर्झरसिच्यमान
उत्पातवातहृतपर्वतवच्चकम्पे ॥ ८४ ॥

पाषाणाः पयसि प्रबद्धवपुषस्तिष्ठन्ति सेतुं गताः
श्रुत्वैवं वदतां दशाननधरः क्रुद्धः समुद्रं प्रति।
धिक् त्वां नाम तवाम्बुधिः सलिलधिः पानीयधिस्तोयधिः
पाथोधिर्जलधिः पयोधिरुदधिर्वारां निधिर्वारिधिः ॥ ८५ ॥

---

आदाविति। स निशाचरेन्द्रः रावणः आदौ सेतुबन्धात् प्रागित्यर्थः, जहास, न कथमपि सागरः बन्धुं शक्यति वृथा प्रयास एषामिति धियेति भावः, मध्ये कथं जले प्रस्तरप्लवनमिति बहुरत्यन्तः विस्मयः तम् आप अतीव विस्मितवान् इत्यर्थः। सेतोः समाप्तिसमये सम्पूर्णतायां सत्यामिति भावः, उद्भूताः घर्म्माः स्वेदा एव घनाः सान्द्रा निर्झराः तैः सिच्यमानः अतएव उत्पातवातेन हृतः सञ्चालितः यः पर्वतः तद्वत् चकम्पे कम्पितवान्। उपमालङ्कारः। वसन्ततिलकं वृत्तम् ॥८४॥

पाषाणा इति। पाषाणाः प्रस्तराः पयसि जले प्रकर्षेण बद्धं संश्लिष्टं वपुः शरीरं येषां तथाभूताः सेतुं गताः सेतुभावेन परिणता इत्यर्थः, तिष्ठन्ति, वदतां कथयतां जनानां, मुखादिति शेषः, एवं श्रुत्वा इत्यमाकर्ण्य दशाननधरः रावणः समुद्रं प्रति तव अम्बुधिः, सलिलधिः, पानीयधिः, तोयधिः, पाथोधिः, जलधिः, पयोधिः, उदधिः, वारां निधिः, वारिधिः इति नाम, त्वाम् एतन्नामधरमिति भावः, धिक् क्षुद्रेण तापसेन

माध्वीके विधुमण्डले वरवधूवक्त्रे च गीतान्तरे
सक्ते वक्त्रचतुष्टये दशमुखो विज्ञापितस्तच्चरैः ।
बद्धोऽसाविति चेतरैर्भयवशादूचे वचः सम्भ्रमात्
अम्भोधिर्जलधिः पयोधिरुदधिर्वारां निधिर्वारिधिः ॥ ८६ ॥
पीतस्त्वं कलशोद्भवेन मुनिना ध्वस्तोऽसि देवासुरैः
आबद्धोऽसि च राघवेण मृदुना शाखामृगैर्लङ्घितः ।
नाम्नाम् आरभटी वृथैव भवतो लोकैरियं घुष्यति
पाथोधिर्जलधिः पयोधिरुदधिर्वारां निधिर्वारिधिः ॥ ८७ ॥

---

त्वं बध्यते इति निन्दामीत्यर्थः, "धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः । शार्दूलविक्रीडितं वृत्तम् ॥ ८५ ॥

माध्वीके इति । वक्त्राणां वदनानां चतुष्टयं वक्त्रचतुष्टयं तस्मिन् माध्वीके मधुपानव्यापारे इति भावः, विधुमण्डले चन्द्रमण्डलनिरीक्षणोत्सवे इत्यर्थः, वरवधूः उत्तमा कामिनी तस्या वक्त्रं वदनं तस्मिन्, गीतान्तरे सङ्गीतविशेषव्यापारे इति यावत्, सक्ते व्यापृते सति, एकैकक्रमेणेति भावः, तच्चरैः तस्य दशमुखस्य चरैः गूढ़पुरुषैः तत् समुद्रबन्धनमित्यर्थः, विज्ञापितः दशमुखः रावणः भयवशादितरैरन्यैः, प्रागुक्तचतुष्टयव्यतिरिक्तैरिति यावत्, इतरैः षड्भिर्वदनैरिति भावः, सम्भ्रमात् सम्यक् व्यग्रतयेत्यर्थः, असौ अम्भोधिः जलधिः, पयोधिः, उदधिः, वारां निधिः, वारिधिः बद्ध इति वचः ऊचे अभिहितः । कर्मणि लिट् । शार्दूलविक्रीडितं वृत्तम् ॥ ८६ ॥

पीत इति । त्वं कलसोद्भवेन कुम्भयोनिना मुनिना अगस्त्येन पीतः, देवासुरैः ध्वस्तः विमथितः असि, मृदुना क्षुद्रेण राघवेणापि आबद्धः संयतः असि, शाखामृगैर्वानरैः लङ्घितश्च

श्रुत्वा सागरबन्धनं दशशिराः सर्वैर्मुखैरेकदा
तूर्णं पृच्छति वार्त्तिकं सचकितं भीत्याकुलः सम्भ्रमात् ।
बद्धः सत्यमपां निधिर्जलनिधिः कीलालधिस्तोयधिः
पाथोधिर्जलधिः पयोधिरुदधिर्वारां निधिर्वारिधिः ? ॥ ९८ ॥

सेतुबन्धं श्रुत्वा लङ्कापुरोवृत्तान्तः ।

मरुत्पुत्रस्त्वेकः कपिकटकरक्षामणिरसौ
समुद्यल्लाङ्गूलो ध्वज इव समाश्लिष्टगगनः ।
पुनः प्रत्यायास्यत्यहह ! कपिनाथे प्रचलिते
मुहुः प्रोचुर्नीचैर्भयचकितलङ्कापुरजनाः ॥ ९९ ॥
अष्टादशमहापद्म-संख्याऽध्यक्षाधिपालिता ।
सा वानरचमूस्तेन सेतुना गन्तुमुद्यता ॥ १०० ॥

---

अस्मि, लोकैः पाथोधिः जलधिः पयोधिः उदधिः वारां निधिः, वारिधिः इयं भवतः नाम्नाम् आरभटी रचना वृथैव जड़-प्रकृतित्वेनैवेति भावः, घुष्यते कीर्त्यते। शार्दूलविक्रीड़ितं वृत्तम् ॥ ९७ ॥

श्रुत्वेति। दशशिराः रावणः सागरबन्धनं श्रुत्वा सम्भ्रमात् त्वरातिशयात् भीत्याकुलः भयविह्वलः सन् एकदा युगपत् सर्वैः मुखैः सचकितं भयसम्भ्रान्तं वार्त्तिकं वार्त्ताहरं तूर्णं शीघ्रं पृच्छति, अपां निधिः, जलनिधिः, कीलालधिः, तोयधिः, पाथोधिः, जलधिः, पयोधिः, उदधिः वारां निधिः, वारिधिः सत्यं बद्धः ?। शार्दूलविक्रीड़ितं वृत्तम् ॥ ९८ ॥

मरुत्पुत्र इति। व्याख्यातं प्राक् ॥ ९९ ॥

अष्टादशेति। अष्टादश महापद्मानि अयुतकोटीति संख्या

कृतकलकलशब्दं त्रासिताशेषलोकं
प्लवगनृपतिसैन्यं सेतुना तेन नीत्वा ।
मृदितविपिनदुर्गे पर्वतेऽसौ सुवेले
शिविरमकृत लङ्कानाथनाशाय रामः ॥ १०१ ॥

आयातौ शुकसारणौ दशमुखप्रस्थापितौ द्वौ चरौ
देहं वानरमाश्रितौ च कटकं सङ्ख्यातुमभ्युद्यतौ ।
विज्ञायाऽथ विभीषणेन ग्रसितौ रामाय दत्तौ च तौ
मुक्तौ च प्रभुणा विलोक्य कटकं रामाज्ञया तौ गतौ ॥ १०२ ॥

---

यस्याः सा अध्यक्षाधिपालिताः सेनापतिभिः संरक्षिता सा वानरचमूः कपिसेना तेन सेतुना गन्तुम् उद्यता । अनुष्टुप् वृत्तम् ॥ १०० ॥

कृतेति । असौ रामः तेन सेतुना कृतः कलकलशब्दः, किलकिलाशब्द इति पाठान्तरं, येन तत्, त्रासिताः भीषिता अशेषा लोका भुवनानि येन तथोक्तं प्लवगनृपतेः सुग्रीवस्य सैन्यं नीत्वा लङ्कानाथस्य रावणस्य नाशाय मृदितं दलितं विपिनमेव दुर्गं दुर्गमस्थानं यस्य तादृशे सुवेले पर्वते शिविरं सेनानिवेशम् अकृत कृतवान् । मालिनी वृत्तम् ॥ १०१ ॥

आयाताविति । अथानन्तरं दशमुखेन रावणेन प्रस्थापितौ प्रेषितौ आयातौ आगतौ वानरं देहम् आश्रितौ कपिदेहधारिणौ कटकं कपिसेनां सङ्ख्यातुं गणयितुम् अभ्युद्यतौ शुकसारणौ नाम द्वौ चरौ विज्ञाय विभीषणेन ग्रसितौ निगड़ितौ रामाय दत्तौ अर्पितौ च । अथ तौ प्रभुणा रामेण मुक्तौ बन्धनात् भ्रंशितौ । ततश्च तौ रामस्य आज्ञया कटकं विलोक्य गतौ । शार्दूलविक्रीड़ितं वृत्तम् ॥ १०२ ॥

अथ शुकसारणौ रावणाय निवेदयतः ।

आकाशे दिशि कानने जलनिधौ शैले तटे गह्वरे
न स्थानं तिलधारणेऽपि कलितं, संख्या कथं कथ्यताम् ।
भ्रात्वा तौ यमितौ, कपीन्द्रकटकं तद्दर्शयित्वोज्झितौ
श्रीरामेण महात्मना, कुरु यथायोग्यं प्रभो ! रावण ! ॥ १०३ ॥

ततः प्रासादमारुह्य वानरसैन्यं पश्यता रावणेन कतरो राम इति पृष्टौ शुकसारणौ रामं दर्शयतः ।

अङ्के कृत्वोत्तमाङ्गं प्लवगबलपतेः, पादमक्षस्य हन्तुः
तारापुत्रस्य हस्तं, त्वचि कनकमृगस्याङ्गशेषं निधाय ।
वाणं रक्षःकुलघ्नं प्रगणितमनुजेनादरादीक्षमाणः
चक्षुःकोणेन लङ्कां, त्वदनुजवचने दत्तकर्णोऽयमास्ते ॥ १०४ ॥

---

आकाशे इति । हे प्रभो ! रावण ! आकाशे दिशि कानने जलनिधौ शैले तटे गह्वरे तिलधारणेऽपि तिलधारणार्थमपीत्यर्थः, कलितं निरूपितमित्यर्थः, स्थानम् अवकाशः न, अस्तीति शेषः, अतः संख्या, कपिसैन्यानामिति शेषः, कथं केन प्रकारेण कथ्यताम्, आवाभ्यामिति शेषः, नैव संख्यातुं क्षमौ आवामिति भावः, तौ तव भ्रात्वा विभीषणेन यमितौ निगड़ितौ आवां महात्मना महानुभावेन श्रीरामेण तत् कपीन्द्रकटकं वानरेन्द्रसैन्यं दर्शयित्वा उज्झितौ मोचितौ ; अतः साम्प्रतं यथायोग्यं यथार्हं कुरु । शार्दूलविक्रीड़ितं वृत्तम् ॥ १०३ ॥

अङ्के इति । अयं रामः प्लवगबलानां पतिः सुग्रीवः तस्य अङ्के क्रोड़े उत्तमाङ्गं कृत्वा शिरो निधाय अक्षस्य तव कुमारस्य हन्तुर्हनूमतः अङ्के पादं चरणं तारापुत्रस्य अङ्गदस्य अङ्के हस्तं, कनकमृगस्य मृगरूपिणो मारीचस्य त्वचि चर्म्मणि अङ्गशेषम्

राव । एते ते मम बाहवः सुरपतेर्दोर्दण्डकण्डूहराः,
सोऽहं सर्वजगत्पराभवकरो लङ्केश्वरो रावणः ।
सेतुं बद्धमहो शृणोमि, कपिभिः पश्यामि लङ्कां वृतां,
जीवद्भिर्न च दृश्यते किमथवा किं वा न च श्रूयते ? ॥१०५॥
आश्चर्य्यं तापसोऽसौ गिरिकुहरपरान् वानरान् मेलयित्वा
वाञ्छत्यागत्य नेतुं किल जनकसुतां मद्गृहीतां दुरात्मा ।

---

अवशिष्टदेहं निधाय अनुजेन कनीयसा लक्ष्मणेन प्रगणितं प्रकर्षेण संख्यातं रक्षसां कुलघ्नं बाणम् आदरात् यत्नतः तथा चक्षुःकोणेन कोपसङ्कुचितेनेति भावः, लङ्कां वीक्षमाणः पश्यन् तव अनुजस्य विभीषणस्य वचने दत्तकर्णः कृतावधानः, विभीषणवचः शृण्वन्नित्यर्थः, आस्ते तिष्ठति । स्रग्धरा वृत्तम् ॥ १०४ ॥

एते इति । मम एते ते प्रसिद्धा बाहवः भुजाः, विंशतिरिति शेषः, सुरपतेरिन्द्रस्य दोर्दण्डयोः बाहुदण्डयोः कण्डूहराः कण्डूतिध्वंसिनः, तत्पराभवकारिण इति भावः । अत एव सः प्रसिद्धः सर्वजगत्पराभवकरः लङ्केश्वरः रावणोऽहम्, अहो आश्चर्य्यं कपिभिः वानरैः सेतुं बद्धं शृणोमि, लङ्काञ्च वृतां पूरितां पश्यामि । अतः जीवद्भिः जनैः किं न च दृश्यते ? अथवा किं वा न श्रूयते च ? सर्वमेव श्रूयते इत्यर्थः । दर्शनं श्रवणञ्च जीविधर्म्म इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १०५ ॥

आश्चर्य्यमिति । असौ दुरात्मा तापसः गिरिकुहरपरान् पर्वतगुहानिलयान् वानरान् मेलयित्वा सङ्गमय्य, वानरैः सह मिलित्वेति यावत्, आगत्य, लङ्कामिति शेषः, मद्गृहीतां मया हृतां जनकसुतां नेतुम् उद्धर्त्तुं वाञ्छति किल, आश्चर्य्यम् !

दंष्ट्राः क्रष्टुं हरेः कः खरनखरमुखोत्खातमातङ्गकुम्भ-
भ्रश्यद्रक्ताक्तमुक्ताफलनिकररसास्वादशक्तस्य शक्तः ? ॥ १०६ ॥

मरुच्चन्द्रादित्याः शतमखमुखास्ते क्रतुभुजः
पुरद्वारि यस्याः सभयमुपसर्पन्त्यनुदिनम् ।
प्रकोपव्याकम्पाधरतटपुटैर्वानरभटैः
समाक्रान्ता सेयं शिव शिव ! दशग्रीवनगरी ॥ १०७ ॥

---

को जनः खराणां तीक्ष्णानां नखराणां मुखैः शिखरैः उत्खातः विदारितः यः मातङ्गस्य हस्तिनः कुम्भः तस्मात् भ्रश्यतां विगलतां रक्ताक्तानां मुक्ताफलनिकराणां मौक्तिकसङ्घानां रसस्य आस्वादे शक्तः क्षमः तस्य हरेः सिंहस्य, "सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिः" इत्यमरः, दंष्ट्राः क्रष्टुम् आहर्त्तुं शक्तः ? क्षमः ? न कोऽपीत्यर्थः। यथा सिंहदंष्ट्रां न कोऽपि उत्पाट्य नेतुं शक्नोति तथा मम हस्तगतां सीतां नायं तापसः कदापि उद्धर्त्तुं शक्ष्यतीति निष्कर्षः। अत्र मद्धस्तगतायाः सीताया नयनं सिंहमुखात् दंष्ट्राहरणञ्च एक एव सामान्यधर्मः, वाक्ययोर्गम्यसाम्ययोः पृथक् निर्दिष्ट इति प्रतिवस्तूपमालङ्कारः, "प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥" इति लक्षणात्। शार्दूलविक्रीड़ितं वृत्तम् ॥ १०६ ॥

मरुदिति। यस्याः पुरद्वारि गोपुरे, "पुरद्वारन्तु गोपुरम्" इत्यमरः, शतमखमुखाः इन्द्रप्रभृतयः ते प्रसिद्धाः मरुच्चन्द्रादित्याः वायुचन्द्रसूर्य्याः क्रतुभुजः देवाः अनुदिनं प्रतिदिनं सभयं यथा तथा उपसर्पन्ति समुपतिष्ठन्तीत्यर्थः, शिवशिवेति खेदे, सेयं दशग्रीवस्य नगरी लङ्का प्रकोपेण व्याकम्पानि विशेषेण आकम्प-

इत्युक्त्वा शुकसारणौ तिरस्कृत्य रामं प्रति दूतप्रस्थापना ।

स्वस्ति, श्रीदशकन्धरस्त्रिभुवनव्यापिप्रतापानलो
व्यामुग्धं लिखतीन्द्रवज्रभिदुरो रामं वनेवासिनम् ।
आनीता जनकात्मजा खलु मया, सुग्रीवसेनान्वितो
नेतुं वाञ्छसि मूढ ! तापस ! कथं प्राणैः परिक्रीडसे ? ॥१०८॥

वाचिकम् ।

इन्द्राद्यास्त्रिदशा विलोक्य समरे यं विद्रवन्ति द्रुतं
तं त्वं तापस ! रावणं कथमहो योद्धुं किमु स्पर्द्धसे ? ।

---

मानानि अधरतटपुटानि येषां तैः वानरभटैः कपिवीरैः समाक्रान्ता ? समभिभूता ? । यद्वा शिवशिवेति सम्बुद्धिः, हे शिव ! हे शिव ! हे भक्तवत्सल महेश्वर ! सर्वमेव तव विलसितमिति भावः । शिखरिणी वृत्तम् ॥ १०७ ॥

स्वस्तीति । स्वस्ति शुभमस्त्वित्यर्थः । त्रिभुवनव्यापी प्रतापानलः यस्य तथाभूतः इन्द्रस्य वज्रं भिनत्तीति इन्द्रवज्रभिदुरः श्रीदशकन्धरः श्रीमान् रावणः व्यामुग्धं विशेषेण सर्वतो मूढं कार्य्याकार्य्यविवेकहीनमित्यर्थः, वनेवासिनं रामं लिखति, रे मूढ ! मया जनकात्मजा सीता आनीता खलु हृतैव । रे तापस ! त्वं सुग्रीवस्य सेनाभिः वानरैरित्यर्थः, अन्वितः सङ्गतः सन् नेतुम् उद्धर्तुं, तामिति शेषः, वाञ्छसि अभिलषसि ? कथं किमर्थं प्राणैः परिक्रीडसे ? प्राणान् पणीकृत्य क्रीडसि कथमित्यर्थः, यदि प्राणान् रक्षितुमिच्छसि तदा सत्वरं पलायस्वेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१०८॥

इन्द्राद्या इति । इन्द्राद्याः इन्द्रप्रभृतयः त्रिदशाः देवाः समरे संग्रामे यं विलोक्य द्रुतं विद्रवन्ति पलायन्ते, रे तापस !

अज्ञस्त्वं प्रतिपक्षराक्षसमुखे मोहात् पदं मा कृथाः
सीतायाः विनिवृत्य याहि भवनं गत्वेति शीघ्रं वद ॥ १०९ ॥
रे रे तापस ! मूढ़ ! रावणहृतामुद्धर्त्तुकामः प्रियां
किं लङ्काभिमुखः प्रयासि कपिभिः प्रोत्साहितः कातरैः ? ।
को यत्नं कुरुते च पन्नगपतेः रत्नं फणामण्डलात्
आक्रष्टुं सहसा सचेतनमतिः श्वःश्रेयसं चिन्तयन् ? ॥ ११० ॥
यश्छित्त्वा मुदितः शिरांसि कृतवानर्चां भवानीपतेः
यस्याज्ञावशवर्त्तिनोऽमरगणा यः सर्वमायानिधिः ।

---

त्वं तं रावणं योद्धुं स्पर्द्धसे किमु ? कथमहो ! किमाश्चर्य्यम् ! ।
त्वम् अज्ञः निर्विवेकः मोहात् अज्ञानात् प्रतिपक्षाणां विरोधिनां राक्षसानां मुखे पदे पदनिक्षेपं मा कृथाः न कुरु, सीतायाः विनिवृत्य पराङ्मुखीभूय, सीतागतानुरागं त्यक्त्वेति यावत्, भवनं गृहं याहि गच्छ । गत्वा इति वाचिकं शीघ्रं वद । वार्त्ताहरं प्रति आदेशः । शार्दूलविक्रीड़ितं वृत्तम् ॥१०९॥

रे रे इति । रे रे मूढ़तापस ! रावणेन हृतां प्रियां कान्तामुद्धर्त्तुकामः कातरैः दुर्बलैः कपिभिः प्रोत्साहितः सन् किं किमर्थं लङ्काभिमुखः प्रयासि ? प्रयाणं करोषि ? निरर्थकः प्राणहरश्च ते प्रयास इत्याह, क इति—सचेतनमतिः सुविवेकबुद्धिः श्वः परदिने श्रेयसं शुभं चिन्तयन् को जनः पन्नगपतेः सर्पराजस्य फणामण्डलात् रत्नम् आक्रष्टुम् आहर्त्तुं सहसा यत्नं कुरुते च ? करोति हि ? न कोऽपीत्यर्थः । अत्रापि पूर्ववत् प्रतिवस्तूपमालङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ११० ॥

य इति । यः मुदितः हृष्टः, न तु कातरः सन्नित्यर्थः, शिरांसि छित्त्वा निकृत्य भवानीपतेः शम्भोः अर्चनां पूजां

यः कैलासगिरिं भुजैस्तुलितवान् यः कालदर्पापहः
तं त्वं तापस ! दो(दु)र्बलैर्जलनिधिं बद्ध्वा कथं जेष्यसि ? ॥ १११ ॥

यावन्नायाति रुष्टः प्रलयघनघटाघोरनादैर्विचित्रैः
संग्रामं कुम्भकर्णस्त्यज समररसं राम ! सीतां विहाय ।
आयाते कुम्भकर्णे तव कपिसहितस्यापि सेना विदूरात्
न स्थातुं शक्नुयुस्तत्प्रलयजपवनश्वासवातावधूताः ॥ ११२ ॥

आदाय लेखं दशकन्धरस्य गत्वा निकुम्भोऽखिलरूपधारी ।

---

कृतवान्, अमरगणाः देवनिवहाः यस्य आज्ञावशवर्त्तिनः आज्ञावहा इत्यर्थः, यः सर्वासां मायानां कूटविद्यानां निधिः आश्रयः, यः भुजैः कैलासगिरिं तुलितवान् उद्धृतवान्, यः कालस्य यमस्य दर्पम् अपहन्तीति तथाभूतः यमं जितवानित्यर्थः, रे तापस ! त्वं दोर्बलैः बाहुबलैः, दुर्बलैरिति पाठे दुर्बलैर्वानरैरित्यर्थः, जलनिधिं सागरं बद्ध्वा तं, मामिति शेषः, कथं केन प्रकारेण जेष्यसि ? । शार्दूलविक्रीडितं वृत्तम् ॥ १११ ॥

यावदिति । कुम्भकर्णः रुष्टः कुपितः सन् विचित्रैः अद्भुतैः प्रलयघनघटा कल्पान्तमेघसङ्घः तस्या इव घोराः विकटाः नादाः गर्जनानि तैः, विशेषणे तृतीया, तथाविधान् नादान् कुर्वन्नित्यर्थः, यावत् संग्रामं रणक्षेत्रं नायाति नागच्छति, तावत् हे राम ! सीतां विहाय सीताशां परित्यज्येत्यर्थः, समररसं त्यज, कुम्भकर्णे आयाते आगते रणभूमिमित्यर्थः, कपिसहितस्यापि तव सेनाः विदूरात् तस्य कुम्भकर्णस्य प्रलयजपवनवत् कल्पान्तजनितसमीरवत् ये श्वासवाताः निश्वासमारुताः तैः अवधूताः आहताः सत्यः स्थातुं, रणभूमाविति शेषः, न शक्नुयुः न सहेरन् । स्रग्धरा वृत्तम् ॥ ११२ ॥

ददौ रघूणां पतये पुरस्तादुपेत्य गाढ़ारभटीपटीयान् ॥ ११३ ॥
एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्यहृते विक्रमैः ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
षष्ठः सागरबन्धनोऽत्र गतवानङ्को महानुज्ज्वलः ॥ ११४ ॥

---

## सप्तमोऽङ्कः ।

अथ श्रीरामः सुग्रीवं प्रति ।

लङ्काप्रस्थापनायोग्यः कोऽस्ति वीरो महाबलः ? ।
राजवंशोद्भवो विद्वान् समानेयः कपीश्वर ! ॥ १ ॥

---

आदायेति । अखिलरूपधारी विविधरूपधरणक्षमः, महामाय इति भावः, गाढ़ा दृढ़ा या आरभटी उद्योगः तत्र पटीयान् अतिपटुः निकुम्भः दशकन्धरस्य रावणस्य लेखं लिपिम्, आदाय रहीला गत्वा पुरस्तात् अग्रतः उपेत्य उपस्थाय रघूणां पतये रामाय ददौ । उपजाति वृत्तम् ॥ ११३ ॥

एष इति । सागरस्य बन्धनं यत्र तथोक्तः । स्पष्टम् ॥११४॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
महानाटकस्य षष्ठाङ्कव्याख्या समाप्ता ॥ ६ ॥

---

लङ्केति । हे कपीश्वर ! लङ्कायां प्रस्थापनं प्रेषणं तद्योग्यः तत्क्षमः महाबलः प्रबलः राजवंशोद्भवः राजकुलोत्पन्नः विद्वान् वीरः कः अस्ति ? स समानेयः मत्समीपमानेतव्यः । अनुष्टुप् वृत्तम् ॥ १ ॥

सुग्रीवः । राजवंश्यो न शूरो हि क्वचिच्छूरो न भूमिभुक् ।
राजपुत्त्रो गुणैर्युक्तः शक्तो भ्रातृसुतस्तु मे ॥ २ ॥

रामः सुवेलाद्रितटे निषस्ः समुद्रमुल्लङ्घ्य विकीर्णसैन्यः ।
लङ्काधिनाथस्य गृहाय दूतं सुरेन्द्रनप्तारमथादिदेश ॥ ३ ॥

गत्वा ताराकुमारः प्रथममभिनवं सौधमुल्लङ्घिताभ्रं
पादाघातात् बभञ्ज प्रलयजलधरध्वानगम्भीरघोषः ।
एतत् कस्मादकस्मादिति चकितदशग्रीवमुद्ग्रीवयन् द्राक्
कुर्वन् दूतानुपूर्वीं बहिरभवदथ द्वारतः किञ्चिदूचे ॥ ४ ॥

---

राजवंश्य इति । राजवंश्यः राजकुलजातः जनः न शूरः अशूरः, शौर्य्यरहित इत्यर्थः, सदा अलस एव भवतीति शेषः । क्वचित् कुत्रापि शूरो वीरः भूमिभुक् न, केवलं वीर्य्यवान् गुणहीनो जनः भूपतिर्न, भवतीति शेषः । मे मम भ्रातृ-सुतस्तु भ्रातुर्वालिनः पुत्रस्तु राजपुत्रः राजवंशोद्भवः तथा गुणैः युक्तः गुणवान् शक्तः वीरश्च । अनुष्टुप् वृत्तम् ॥ २ ॥

राम इति । अथानन्तरं रामः समुद्रम् उल्लङ्घ्य विकीर्ण-सैन्यः लङ्कायां चतुर्दिग्व्याप्तसैन्यः सुवेलस्य अद्रेः तटे निषणः स्थितः सन् लङ्काधिनाथस्य रावणस्य गृहाय गृहं गन्तुमित्यर्थः, सुरेन्द्रस्य नप्तारं पौत्रम्, अङ्गदमित्यर्थः, दूतम् आदिदेश आदिष्टवान् । निषस्र इत्यत्रावतीर्णः वतीर्णो वेति पाठान्तरम् । उपजाति वृत्तम् ॥ ३ ॥

गतेति । प्रलये कल्पान्ते यो जलधरः मेघः तस्य ध्वानवत् गम्भीरः घोरः घोषः नादो यस्य सः ताराकुमारः अङ्गदः गत्वा प्रथमं प्राक् अभिनवम् उल्लङ्घिताभ्रं मेघपदवीमति-क्रान्तमत्युन्नतमिति भावः, सौधं सुधाधवलं हर्म्यं पादाघातात्

रे राक्षसाः ! कथयत, क्व स रावणाख्यो
रत्नं रघुप्रवरयोरपहृत्य नष्टः ?।
त्रैलोक्यदीपनशरोग्रशिखाकराले
यो रामदावदहने भविता पतङ्गः ॥ ५ ॥

राक्ष। मा गास्तिष्ठ, बहिर्व्रज, क्षणमपि स्थित्वा प्रयास्याज्ञया,
यत्रास्ते भुजविक्रमाखिलजगद्विद्रावणो रावणः।

---

चरणप्रहारात् बभञ्ज। अथ सौधभञ्जनानन्तरम् अकस्मात् एतत् सौधभञ्जनमित्यर्थः, कस्मात् कथं, वृत्तमिति शेषः, इति चकितः भयसम्भ्रान्तः दशग्रीवः तं द्राक् झटिति, "द्राक्झटित्यञ्जसाह्नाय" इत्यमरः, उद्ग्रीवयन् ऊर्द्ध्वग्रीवं दशग्रीवं कारयन्नित्यर्थः, दूतानुपूर्वीं दूतविहिताचारं कुर्वन् द्वारतः द्वारदेशस्य बहिः अभवत्, किञ्चित् उच्चैः उवाच च। स्रग्धरा वृत्तम् ॥ ४ ॥

रे इति। रे राक्षसाः ! निशाचराः ! यः रघुप्रवरयोः रामलक्ष्मणयोः रत्नं सीतारूपं धनम् अपहृत्य नष्टः पलायितः, यश्च त्रैलोक्यस्य त्रिभुवनस्य दीपनानां शराणाम् उग्राभिः घोराभिः शिखाभिः कराले व्याप्ते राम एव दावदहनः दवानलः तस्मिन् पतङ्गः अग्निपतनोन्मुखकीटविशेषः, भविता भविष्यति, स रावणाख्यः रावणनामा, राक्षस इति शेषः, क्व ? वर्त्तते इति शेषः। रघुप्रवरयोरित्यत्र रवीन्दुकुलयोरिति पाठे रवीन्दुकुलयोः सूर्य्यचन्द्रवंशयोः, रघुवंशजनकवंशयोरित्यर्थः। त्रैलोक्यदीपनशरोग्रशिखाकराले यो रामदावदहने इत्यत्र त्रैलोक्यदीपनकरत्विशिखाकराले यो रामनामदहने इति पाठान्तरम्। वसन्ततिलकं वृत्तम् ॥ ५ ॥

मा गा इति। रे अङ्गद ! मा गाः न प्रविशेत्यर्थः, तिष्ठ,

अस्यैवाङ्गद ! बाहुपाशपतितो मूढ़: किमाक्रन्दसे ?
सिंहस्याङ्कमुपागतं मृगमिव त्वां क: परित्रायते ? ॥६॥

अथावलेपात् अङ्गदे राक्षसश्रेणिधूमकेतौ रावणसिंहासनाधिरूढ़े रावणाङ्गदयोरुक्तिप्रत्युक्तिवैचित्र्यम् ।

कस्त्वं ? बालितनूद्भवो रघुपतेर्दूतोऽस्मि, बालीति क: ?
को वा वानर ! राघव: ? समुचिता ते बालिनो विस्मृति: ।
लाङ्गूलान्तनितान्तबद्धवपुष: संमूर्च्छितस्य ध्रुवं,
घ्राणं दर्पमिव स्वसुर्विरहयन् राम: कथं विस्मृत: ? ॥ ७ ॥

---

अत्रैव द्वारदेशे इति शेष:, बहि: व्रज गच्छ, क्षणमपि अल्पकालमित्यर्थ:, स्थित्वा आज्ञया प्रभोरादेशेन यत्र भुजानां बाहूनां विक्रमेण अखिलानां सर्वेषां जगतां विद्रावण: शङ्कोत्पादक: रावण: आस्ते तिष्ठति तत्र प्रयासि गच्छसि, गमिष्यसीत्यर्थ:, भविष्यत्सामीप्ये लट् । मूढ़स्त्वम् अस्यैव रावणस्य बाहुपाशे पतित:, असीति शेष:, किं कथम् आक्रन्दसे ? गर्जसि ? सिंहस्य अङ्कं क्रोड़मुपागतं मृगमिव त्वां क: परित्रायते ? न कोऽपि परित्रातुं शक्नोतीत्यर्थ: । शार्दूलविक्रीड़ितं वृत्तम् ॥६॥

कस्त्वमिति । क: त्वम् ? इति रावणस्य उक्ति: । बालिन: तनूद्भव: तनूज: रघुपते: रामस्य दूतोऽस्मि । इति अङ्गदस्य उक्ति: । बाली इति नाम्ना क: ? रे वानर ! राघव: रघुपति: को वा ? इति रावणस्य उक्ति: । लाङ्गूलस्य अन्तेन लोमनिचयेनेत्यर्थ:, नितान्तं बद्धं वपु: शरीरं यस्य तथाभूतस्य संमूर्च्छितस्य सम्यक् मोहं गतस्य ते तव बालिन: तथा कुर्वत इति भाव:, विस्मृति: विस्मरणं समुचिता ध्रुवं युक्तैवेत्यर्थ:, बहुकालिकत्वादिति भाव:, किन्तु स्वसु: भगिन्या: शूर्पणखाया: घ्राणं

श्रुतमप्यर्थं क्रोधाद्विस्मृत्य रावणः ।
कस्त्वं ? बालितनूद्भवः, कुत इह ? श्रीरामसंप्रेषितो,
वार्त्तां ब्रूहि हनूमतः, स च कदा राज्ञा भयान्निःसृतः ।
तद्भीतेर्वद कारणं ? दशमुखं साङ्गं सपुत्रानुजं
हत्वा यन्न गतो, निशम्य वचनं चित्रार्पिता राक्षसाः ॥ ८ ॥

राव। रे रे कस्यासि ? कोऽसि ? क्व पुनरिह गतः ? कस्य दूतः ? किमर्थं
विसृष्टं, पिष्टपानां विजयिनमपि मां मन्यसे त्वं तृणाय ।

---

नासिकां दर्पमिव विरहयन् अपनयन् रामः कथं विस्मृतः ? इति अङ्गदस्य उक्तिः। अस्य तु व्यापारस्य साम्प्रतिकत्वात् विस्मरणमनुचितमेवेति । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७ ॥

कस्त्वमिति । कः त्वम् ? इति रावणोक्तिः। बालिनः तनूद्भवः आत्मजः, अहमिति शेषः। इति अङ्गदोक्तिः। इह अस्मत्सकाशे कुतः ? किमर्थमागतोऽसीत्यर्थः। इति रावणोक्तिः। श्रीरामेण संप्रेषितः, अहमिति शेषः। इति अङ्गदोक्तिः। हनूमतः वार्त्तां ब्रूहि इति रावणोक्तिः। स च हनूमान् कदा कस्मिन् काले राज्ञः सुग्रीवात् भयात् हेतोः निःसृतः पलायितः। इति अङ्गदोक्तिः। तद्भीतेः तस्य भीतेः भयस्य कारणं वद। इति रावणोक्तिः। यत् यतः साङ्गम् अङ्गानि अमात्यादीनि सप्त, तत्सहितं सपुत्रानुजं पुत्रभ्रातृसहितं दशमुखं हत्वा न गतः न प्रतिनिवृत्तः। इति अङ्गदोक्तिः। राक्षसाः वचनम्, अङ्गदस्येति शेषः, निशम्य श्रुत्वा चित्रार्पिताः आलेख्यन्यस्ताः, स्तब्धीभूताः, आसन्निति शेषः ॥ ८ ॥

रे रे इति । रे रे वानर इति सम्बोधनपदमध्याहार्य्यम्। त्वं कस्य असि ? कः असि ? इह पुनः क्व कुत्र गतः ? आगत

अङ्ग । हंहो पौलस्त्यसूनो ! तव बलमथनस्यात्मजोऽहं सुवेलात्
संप्राप्तो रामदूतो विसृज जड़मते ! जानकीं वाप्यसून् वा ॥९॥
येनैकेन शरेण सप्त निहतास्ताला धनुस्तद्धतं,
बद्धो वारिधिरेष तातमपि मे यः प्रापयत् पञ्चताम् ।
तद्भृत्यं खलु विद्धि राक्षसपते ! तत्पादपद्मस्खल-
द्धूलीपालिपरागपुञ्जकणिकाजाताङ्गदञ्चाङ्गदम् ॥ १० ॥

---

इत्यर्थः, कस्य दूतः ? किमर्थम् ? विस्पष्टं सुव्यक्तं यथा तथा, वदेति शेषः । पिष्टपानां जगतां विजयिनं विजेतारमपि मां त्वं तृणाय मन्यसे गणयसि ? हंहो पौलस्त्यसूनो ! पुलस्त्य-नन्दन ! तव बलमथनस्य बलदर्पप्रशमयितुः बालिन इत्यर्थः, आत्मजः तनयः अहं सुवेलात् लङ्कोपरिवर्त्तिनो गिरेः राम-दूतः सन् सम्प्राप्तः, त्वत्सकाशमिति शेषः । रे जड़मते ! मूढ़बुद्धे ! जानकीं वा असून् प्राणान् वा विसृज त्यज । स्रग्धरा वृत्तम् ॥ ९ ॥

येनेति । येन एकेन शरेण सप्त तालाः निहताः विद्धाः, तत् प्रसिद्धं धनुः ऐश्वरं कार्मुकमित्यर्थः, हतं खण्डितम्, एष वारिधिः समुद्रः बद्धः, यः मे मम तातं पितरं बालिनमपि पञ्चतां निधनं प्रापयत् नाशितवानित्यर्थः, हे राक्षसपते ! तस्य रामस्य भृत्यं, तस्य पादपद्मेभ्यः स्खलन्त्यः निर्गच्छन्त्यः या धूलीनां पालयः समूहाः ता एव परागपुञ्जाः कौसुमरजश्चयाः, "परागः कौसुमं रजः" इत्यमरः, तेषां कणिकाभिः जातम् अङ्गदं भूषणविशेषः यस्य तं तच्चरणरेणुरूषितबाहुमिति भावः, अङ्गदं तन्नामानं वानरं विद्धि खलु जानीहि एवेत्यर्थः । शार्दूल-विक्रीड़ितं वृत्तम् ॥ १० ॥

राव । कुत्रास्ते समरे यमालयसमे रे दूत ! रामः ? पुनः
दारोद्धारणकारणेन मरणं वाञ्छत्यसौ दुर्मतिः ।
स्त्रीरङ्को नियतं ममैव विशिखे वह्निप्रभे तापसो
देवेशोद्धतदर्पसर्पगरुड़े सुग्रीवमित्रं चिरम् ॥ ११ ॥

तयोरुक्तिप्रत्युक्ती ।

रामः को नाम ? जेता जयति भृगुपतेः, कश्च तादृग् भृगूणां ?
यज्जेतृख्यातिपत्रं जगति, न विदितस्तस्य यादृक्प्रभावः ।
हन्ताऽसौ हैहयेन्द्रप्रभृतिनरपतेः, कस्तथा हैहयो वा ?
व्यक्तं जानीहि, यस्त्वां सुचिरमगमयत् क्रूरकारानिकायम् ॥ १२॥

---

कुत्रेति । रे दूत ! यमालयसमे अन्तकभवननिभे कुत्र कस्मिन् समरे युद्धे रामः आस्ते तिष्ठति ? न कुत्रापि स्थातुं शक्नोतीत्यर्थः । असौ पुनः दुर्मतिः मन्दधीः स्त्रीरङ्कः स्त्रीषु कृपणः, स्त्रीरक्षणाक्षम इति यावत्, सुग्रीवमित्रं तापसः दारोद्धारणकारणेन भार्य्योद्धारहेतुना देवेशस्य देवराजस्य उद्धतः प्रकटो यो दर्पः अहङ्कारः, अहमेव त्रिलोकाधिपतिरित्यभिमान इत्यर्थः, स एव सर्पः तस्य गरुड़ः तदपनयनहेतुरिति भावः, तस्मिन् चिरं सततं वह्निप्रभे अग्निनिभे ममैव विशिखे शरे निश्चितं मरणं वाञ्छति आकाङ्क्षति, अवश्यमेव मम हस्ते मरिष्यतीति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ११ ॥

राम इति । रामः को नाम ? यः भृगुपतेः परशुरामस्य जेता सन् जयति सर्वोत्कर्षेण वर्त्तते । भृगूणां भृगुवंश्यानां मध्ये तादृक् वीरत्वेन गण्य इति भावः, कश्च को हि ? जगति भुवने यस्य जेतृख्यातिपत्रं सर्वविजयो अयमिति प्रसिद्धिपत्रम्, अस्तीति शेषः । तस्य भार्गवस्य यादृक्, तादृगिति वा पाठः,

कस्त्वं ? वन्यपतेः सुतो, वनपतिः को वा ममाग्रे वद ?
देवाः शक्रपुरोगमा मम गृहे नित्यं स्वदास्ये स्थिताः ।
रामः किं कृतवान् कपीन्द्रपृथुकैः संलङ्घ्य रत्नाकरं ?
चेदायाति मदीयदर्पदहने स स्यात् पतङ्गोपमः ॥ १३ ॥

अङ्ग । रे रे रावण ! रावणानपि बहूनेतान् वयं शुश्रुमे-
तेष्वेकः किल कार्त्तवीर्य्यनृपतेर्दोर्दण्डपिण्डीकृतः ।

---

प्रभावः न विदितः न ज्ञातः, त्वयेति शेषः, यद्वा न विदितो मयेति रावणोक्तिः । असौ भार्गवः हैहयेन्द्रप्रभृतिनरपतिः कार्त्तवीर्य्यप्रभृतिराजन्यस्य हन्ता । हैहयो वा कार्त्तवीर्य्यो वा तथा तादृशप्रभाव इति भावः, कः ? व्यक्तं स्पष्टं जानीहि विद्धि, यः कार्त्तवीर्य्यः त्वां सुचिरं सुदीर्घकालं क्रूरः दारुणः कारानिकायः कारागारवासः तम् अगमयत् प्रापयामास, येन रणे पराजितः कारागारं नीतोऽसीति भावः । स्रग्धरा वृत्तम् ॥ १२ ॥

कस्त्वमिति । त्वं कः ? वन्यानां वनचारिणां वानराणामित्यर्थः, पतिः तस्य बालिन इत्यर्थः, सुतः, अहमिति शेषः । वनपतिः बाली ममाग्रे मत्समीपे को वा ? वद कथय, न कोऽपीत्यर्थः, अगण्य इति भावः, यतः शक्रपुरोगमाः इन्द्रादयः देवाः मम गृहे नित्यं सततं स्वस्य आत्मनः, ममेति भावः, दास्ये कैङ्कर्य्ये स्थिताः । रामः कपीन्द्रपृथुकैः वानरेन्द्रशिशुभिः, सहेति शेषः, रत्नाकरं सागरं संलङ्घ्य किं कृतवान् ? न किमपि कर्त्तुं शक्ष्यतीत्यर्थः । स आयाति आगच्छति चेत् तदा मदीयदर्पदहने मत्सम्बन्धिनि दर्पाग्नौ पतङ्गोपमः पतङ्गनिभः स्यात् भवेत्, मरिष्यतीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

एको नर्त्तनलम्भितान्नकवलो दैत्येन्द्रदासीशतैः
अन्यो मत्पितृबाहुमूलगलितस्त्वं तेषु कोऽन्योऽथवा ? ॥१४॥
राव। रे रे कोशशिशो ! ममैव पुरतो गर्जंश्च हृष्टः कथं
लोमालीकलुषीकृते किल पुरा कर्णेऽपि न श्रावितः ?।

---

अथ अङ्गदस्य भयप्रदर्शनार्थं मायया रचितान् बहून् रावणरूपधरान् देहान् आलोक्य अङ्गदः कथयति, रे रे इति।—रे रे रावण ! वयमपि बहून् रावणान् एतान् शुश्रुम श्रुतवन्तः, एतेषु रावणेषु मध्ये एकः कार्त्तवीर्य्यस्य नृपतेः दोर्दण्डेन बाहुदण्डेन पिण्डीकृतः कारावासं नीत इत्यर्थः। एकः, अपर इति शेषः, दैत्येन्द्रस्य बलेः दासीशतैः नर्त्तनेन लम्भितः प्रापितः अन्नकवलः अन्नग्रासः यस्य तथोक्तः। पुरा दैत्येन्द्रेण पराजितः पाताले तत्किङ्कराभिः यदि त्वं नृत्यसि तदा तुभ्यमन्नं दास्याम इत्युक्तो रावणस्तत्कारावासे तथा नर्त्तनं कृत्वा तासामनुग्रहलब्धमन्नं भक्षयन् प्राणान् ररक्षेति वार्त्तात्रानुसन्धेया। अन्यः अपरः रावणः मम पितुः बालिनः बाहुमूलात् कक्षदेशात् गलितः तदनुकम्पया विमुक्त इत्यर्थः,त्वं तेषु रावणेषु मध्ये कः ? अथवा अन्यः अपरः ? रावण इति शेषः। रावणानपीत्यत्र रावणान् कतीति, शुश्रुमैतेष्वेक इत्यत्र शुश्रुम प्रागेकमिति, पिण्डीकृत इत्यत्र पिण्डीकृतमिति, एको नर्त्तनलम्भितान्नकवलो दैत्येन्द्रदासीशतैरन्यो मत्पितृबाहुमूलगलित इत्यत्र एकं नर्त्तनदापितान्नकवलं दैत्येन्द्रदासीगणैरन्यं वक्तुमपि त्रपामहे इतीति च पाठान्तरं सुगमम्। शार्दूलविक्रीड़ितं वृत्तम्॥ १४॥

रे रे इति। रे रे कोशशिशो ! वानरशावक ! ममैव त्रिभुवनविजयिनोऽपीत्यर्थः, पुरतः अग्रतः कथं केन प्रकारेण

युद्धे तुल्यबलः सुरेष्वपि न मे कश्चिद्रिपून् वारयन्
स्थाताऽहं सबलो, यतः परबलं हन्ता ततो रावणः ॥ १५ ॥

अङ्ग। कृत्वा कक्षागतं त्वां कपिकुलतिलको बालिनामा बलीयान्
भ्रान्त्वा सप्ताब्धितीरे तदनु चरितवान् ध्यानसन्ध्यार्चनञ्च ।
बाणेनैकेन बिद्धो झटिति निपतितो रामचन्द्रस्य सोऽपि
त्यक्त्वासून्स्तूर्णमागात् सुरपुरमधुना, मुञ्च लङ्केश ! गर्वम् ॥१६॥

---

गर्जन् सन् हृष्टः, भवसीति शेषः, मत्पुरतस्तव ईदृगौद्धत्यप्रकटने भीतिर्नेति भावः। लोम्नामालीभिर्निचयैः कलुषीकृते आवृते इति यावत्, कर्णे अपि पुरा पूर्वं न श्रावितः किल ? अहं केनापीति शेषः। स्वस्य रोमनिचयावृतकर्णत्वात् स्वयं श्रवणे सामर्थ्यविरहेऽपि अन्येनापि मदीया वार्त्ता त्वयि न श्राविता किम् ? इति भावः। सुरेषु देवेषु अपि मध्ये कश्चित् युद्धे मे मम तुल्यबलः न, अस्तीति शेषः, अहं सबलः ससैन्यः सन् रिपून् शत्रून् वारयन् निराकुर्वन् स्थाता स्थितिशीलः, यतः अहं परेषां बलं हन्ता घातकः, ततः कारणात् रावयति क्रन्दयति रिपूनिति रावणः, यथार्थनामेति शेषः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १५ ॥

कृत्वेति। कपिकुलतिलकः वानरकुलश्रेष्ठः बलीयान् महाबलः बालिनामा, सन्नितीति शेषः, त्वां कक्षागतं बाहुमूल-निगड़ितं कृत्वा तदनु तदनन्तरं, सप्तानाम् अब्धीनां सागराणां तीरे भ्रान्त्वा परिभ्रम्य ध्यानसन्ध्यार्चनं ध्यानं समाधानं, चित्तै-काग्र्यमित्यर्थः, तेन सन्ध्यार्चनं सन्ध्याकालोचितं देवार्चनं चरित-वान् कृतवांश्च। सोऽपि प्रसिद्धो वीरः बाली रामचन्द्रस्य एकेन बाणेन शरेण विद्धः सन् झटिति निपतितः भूमौ पतितः सन्

राव । दोर्द्दण्डास्त इमे त्रिलोचनगिरेरुत्तम्भसम्भाविता-
स्तान्येतानि दशाननानि, दशभिर्दिग्भिस्तथा विश्रुतिः ।
पश्याद्यापि स एव वीर्य्यमहिमा, तस्मिन् पुनस्तापसः
संशोच्यो हि रिपुः, स चापि कुपितस्तस्यापि दूतः कपिः ?
॥१७॥

अङ्ग । दोर्दण्डातिप्रचण्डार्जुनहननविधिप्रौढ़दोष्णां सहस्र-
च्छेदक्रोड़ाप्रवीरस्थिरपरशुमहागर्वनिर्वापकस्य ।
दूतोऽहं राघवस्य त्वदुपवनचिरावासवक्राग्रलोम्नः
पुत्रः सूत्रामसूनोः प्लवगवलपतिर्नामतश्चाङ्गदोऽहम् ॥१८॥

---

त्यक्तासुः मुक्तप्राणः सन् तूर्णं शीघ्रं सुरपुरं स्वर्गम् आगात् गत-वान् । अधुना साम्प्रतं, हे लङ्केश ! त्वमपि गर्वं मुञ्च त्यज । स्रग्धरा वृत्तम् ॥ १६ ॥

दोर्दण्डा इति । ते प्रसिद्धा इमे त्रिलोचनगिरेः कैलासस्य उत्तम्भेन उद्धरणेन सम्भाविताः सम्मानिताः, सर्वजनप्रशंसिता इति यावत्, दोर्दण्डाः भुजदण्डाः, तानि एतानि दश दश-संख्यानि आननानि मुखानि दशभिः दिग्भिः तथा तादृशी विश्रुतिः विख्यातिः, ममेति सर्वत्र सम्बन्धः । अद्यापि स एव वीर्य्यमहिमा पराक्रमप्रभावः,पश्य अवलोकय । वाक्यार्थः कर्म्म । तस्मिन् पुनः तादृशे वीर्य्यमहिम्नि तु तापसः रिपुः शत्रुः, संशोच्यो वराकत्वात् सम्यक् शोचनीयः एव, स च तापसः शत्रुः अपि कुपितः क्रुद्धः तस्यापि तापसस्य दूतः, स च कपिः वानरः, हास्यकरमेतदिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १७ ॥

दोर्दण्डेति । दोर्दण्डेन अतिप्रचण्डस्य अत्युल्वणस्य अर्जु-नस्य हननविधौ निधनव्यापारे प्रौढ़ानां प्रकटानां दोष्णां

राव । भ्राता मे कुम्भकर्णः सकलरिपुबलप्राणसंहाररूपः
पुत्रो मे मेघनादः प्रहसितवदनं येन बद्धः सुरेन्द्रः ।
खड्गो मे चन्द्रहासो रणमुखचपला राक्षसा मे सहायाः
सोऽहं गीर्वाणशत्रुस्त्रिभुवनविजयी रावणो नाम राजा ॥१९॥

अङ्ग । रे रे रावण ! कार्त्तवीर्य्यदलिताहङ्कार ! गत्वा स्वयं
सीतामर्पय, पालय स्वतनयान् यावन्न रामः शरान् ।

---

भुजानां सहस्रस्य छेद एव क्रीड़ा तत्र प्रवीरः प्रकृष्टवीरः स चासौ स्थिरपरशुः दृढ़कुठारश्चेति विशेषणसमासः, तस्य भार्गवस्येति भावः, यो महान् गर्वः तस्य निर्वापकः तस्य, परशुरामविजयिन इत्यर्थः, राघवस्य रामस्य दूतः, तव अपघनस्य कलेवरस्य चिरावासेन दीर्घकालस्थित्या वक्राणि कुटिलानि, सङ्कुचितानीत्यर्थः, अग्रलोमानि यस्य तथाभूतस्य प्लवगपतेः वानरराजस्य सूत्रामसूनोः इन्द्रात्मजस्य बालिनः पुत्रः नामतः अङ्गदः अहम् । स्रग्धरा वृत्तम् ॥ १८ ॥

भ्रातेति । सकलानां रिपूणां बलप्राणानां संहारः यस्मात् तादृशं रूपं यस्य तथाभूतः कुम्भकर्णः मे मम भ्राता, मेघनादः मे पुत्रः, येन प्रहसितं वदनं यस्मिन् तत् यथा तथा सुरेन्द्रः मघवा बद्धः विजित इत्यर्थः । मे मम खड्गः चन्द्रहासः चन्द्रस्येव हासो यस्य तथोक्तः चन्द्रोज्ज्वल इत्यर्थः, तदाख्यो वा, रणमुखेषु रणाग्रेषु चपलाः दुर्धर्षाः राक्षसाः मे मम सहायाः, सोऽहं गीर्वाणानां देवानां शत्रुः त्रिभुवनविजयी रावणो नाम राजा । स्रग्धरा वृत्तम् ॥ १९ ॥

रे रे इति । रे रे कार्त्तवीर्य्येण दलितः खण्डितः अहङ्कारो यस्य तथोक्तः तत्सम्बुद्धौ कार्त्तवीर्य्यार्जुनापनीतदर्प !

कोपान्मुञ्चति, हैहयाधिपभुजश्रेणीमहाकानन-
च्छेत्तुर्यस्य कुठारधारणपटोः रामस्य जेता रणे ॥ २० ॥

रावणाङ्गदयोरुक्तिप्रत्युक्ती ।

रामः किं कृतवान् ? प्रवीरविजयं, कोऽसौ प्रवीरो जितः ?
बाली,सोऽपि च को ? न वेत्सि किममुं ? को वेत्ति शाखामृगम् ?
आस्तवापि तवापि विस्मृतिरहो ! ? मोहो महानीदृशः
पर्य्यङ्के निजबालकेलिकृतये बद्धोऽसि येनोरसि ॥ २१ ॥

---

रावण ! स्वयं गत्वा रामसमीपमित्यर्थः, सीताम् अर्पय, स्वतनयान् निजपुत्रान् पालय रक्ष, यः हैहयाधिपस्य भुजश्रेणी बाहुसहस्रमित्यर्थः, एव महाकाननं महारण्यं तस्य छेत्ता तस्य कुठारधारणे पटुः क्षमः कुशल इत्यर्थः, तस्य रामस्य भार्गवस्य च भार्गवस्यापि रणे जेता रामः दाशरथिः कोपात् शरान् यावत् न मुञ्चति न वर्षति, "यावत्पुरानिपातयोर्लट्" इति भव्यार्थयावच्छब्दयोगे लट्, रामस्य कोपे तव वंशनाशो भविष्यतीति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २० ॥

राम इति । रामः किं कृतवान् ? इति रावणोक्तिः । प्रवीरविजयं प्रकृष्टवीरशत्रुविजयं, कृतवान् इत्यन्वयः । इति अङ्गदोक्तिः । असौ प्रवीरः शत्रुः कः ? यो जितः ? बाली, प्रवीरो जित इति शेषः । सोऽपि बाली च कः ? अमुं बालिनं न वेत्सि न जानासि किम् ? को जनः शाखामृगं वानरं वेत्ति जानाति ? न कोऽपीत्यर्थः, शाखामृगेण कः परिचयः ? इति भावः । आः इति विरक्तिसूचकमव्ययम् । येन मम पित्रा निजबालकेलिकृतये निजबालकस्य ममेति भावः, केलिकृतये क्रीड़नार्थं पर्य्यङ्के खट्वैकदेशे इत्यर्थः, उरसि

किं कार्य्यं वद राघवस्य ? स तथा बद्धोऽमुनाऽम्भोनिधिः,
क्रीड़ार्थं कपिपोतकैरिह गतैर्जानात्ययं मां न हि ? ।
लङ्कालोकनिकायनाथवचसा वेत्त्येव, किं किं कपे !
को लङ्काधिपतिः ? विभीषण इति प्रख्यातकीर्त्तिर्भुवि ॥२२॥
राव । प्रवीरगणनासु वा तव पितेव कैर्गण्यते ?
पतिः स हि वनौकसां त्वमपि को वराकोऽर्भकः ? ।

---

वक्षसि बद्धः अस्ति, तत्रापि तस्मिन्नपि बालिनि तवापि, अन्येषां विस्मरणं कथञ्चित् सम्भवतीति भावः, विस्मृतिः ? अहो ! आश्चर्य्यम् ईदृशो महान् मोहः, तवेति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २१ ॥

किमिति । राघवस्य रामस्य कार्य्यं कर्म्म किम् ? वद कथय । इति रावणोक्तिः । अमुना राघवेण तथा तेन प्रकारेण स प्रसिद्धः अम्भोनिधिः सागरः बद्धः । इति अङ्गदोक्तिः । अयं राघवः इह जगति क्रीड़ार्थं गतैः नीतैः कपिपोतकैः वानरशिशुभिः, वानरशिशवः क्रीड़ार्थं लोकैर्गृहेषु पोष्यन्ते इति भावः, सह मां, रावणमिति शेषः, न हि नैव जानाति नावबुध्यते । इति रावणोक्तिः । लङ्कालोकानां लङ्कावासिजनानां निकायः निवासः, लङ्केत्यर्थः, तस्य नाथः विभीषणः तस्य वचसा वाक्येन वेत्ति एव जानात्येव । इति अङ्गदोक्तिः । हे कपे ! किं किं, कथयसि इति शेषः, लङ्काधिपतिः लङ्काधीश्वरः कः ? इति रावणोक्तिः । विभीषण इति भुवि पृथिव्यां प्रख्याता कीर्त्तिर्यस्य सः, लङ्काधिपतिरिति शेषः । इति अङ्गदोक्तिः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २२ ॥

प्रवीरेति । प्रवीरगणनासु के के प्रकृष्टा वीरा इति

चकार किल राघवः किमपि कर्म्म लोकोत्तरं ?
तरङ्गयसि यन्मुहुर्मम पुरस्तदीयं यशः ? ॥ २३ ॥

अङ्ग । रामो नाम स एष, येन भगिनीनासावसापङ्किलः
खङ्गस्ते खरदूषणत्रिशिरसां धौतः शिरःशोणितैः ।
बद्ध्वा त्वां चतुरम्बुराशिषु परिभ्राम्यन् मुहूर्त्तेन यः
सन्ध्यामर्चयति स्म निस्त्रप ! कथं तातस्त्वया विस्मृतः ? ॥२४॥

---

संख्यानेषु तव पिता बाली कैरेव गण्यते ? गणनाविषयो-क्रियते ? न कैरपीत्यर्थः, हि यतः सः वनौकसां वननिवा-सिनां शाखामृगाणामित्यर्थः, पतिः, त्वमपि वराकोऽनु-कम्पार्ह इति यावत्, अर्भकः शिशुः कः ? राघवः रामः किमपि लोकोत्तरम् अलौकिकम्, असाधारणमित्यर्थः, कर्म चकार किल ? नैव चकारेत्यर्थः, यत् यतः लोकोत्तर-कर्मकरणादित्यर्थः, तदीयं रामसम्बन्धीत्यर्थः, यशः कीर्त्तिं, मम पुरः अग्रतः मुहुः पुनः पुनः तरङ्गयसि वर्णयसीत्यर्थः । पृथ्वी वृत्तम् ॥ २३ ॥

राम इति । स एष रामो नाम, येन रामेण ते तव भगिन्याः शूर्पणखायाः नासायाः नासिकायाः, वसाभिः मेदोभिः पङ्किलः सकर्दमः खङ्गः, निज इति शेषः, खरदूषणत्रिशिरसां राक्षसानां शिरःशोणितैः शिरश्छेदनरक्तैः धौतः क्षालितः । हे निस्त्रप निर्लज्ज ! यः त्वां बद्ध्वा, लाङ्गूलेनेति शेषः, मुहूर्त्तेन चतुरम्बुराशिषु चतुर्षु समुद्रेषु परिभ्राम्यन् सन्ध्याम् अर्चयति स्म उपास्ते, स तातः पिता बाली त्वया कथं विस्मृतः ? शार्दूल-विक्रीडितं वृत्तम् ॥ २४ ॥

राव । यस्तातं तव निर्व्यलीकमवधीत्त्वापि निर्मत्सरः
तस्य प्रेष्यतया भ्रमन् कपिशिशो! निर्लज्ज! किं गर्जसि ?।
त्वत्पित्रे पुनरेकदा किल मया मैत्रीप्रसादः कृतः
तत्पुत्रे त्वयि तावदेवमुचितो दण्डः कथं धार्य्यते ? ॥२५॥

अङ्ग । प्रपन्नः पन्थानं नयमयममित्रोऽपि नियतं
निषेव्यः साधूनां न पुनरपनीतिः सुहृदपि ।
तथाहि त्वां हित्वा सहजमपि नक्तञ्चरचमू-
विरामं श्रारामं भवदनुज एवैष भजते ॥२६॥

---

य इति । यः तव निर्व्यलीकम् अकृताप्रियमित्यर्थः, निरपराधमिति यावत्, "व्यलीकन्त्वप्रियान्तते" इत्यमरः, तव तातं बालिनम् अवधीत् हतवान्, हे निर्लज्ज! कपिशिशो! तत्रापि तस्मिन्नपि, पितृशत्रावित्यर्थः, रामे निर्मत्सरः विद्वेषरहितः प्रत्युत तस्य प्रेष्यतया भृत्यतया भ्रमन् सन् किं गर्जसि ? एकदा मया तव पित्रे बालिने मैत्रीप्रसादः सख्यभावरूपानुग्रहः कृतः किल, किलेति प्रसिद्धौ, तस्य पुत्रे त्वयि तावत् उचितो योग्यो दण्डः अस्मत्कुत्सावादजनित इति भावः, केन प्रकारेण धार्य्यते क्रियते ? मयेति शेषः, सुहृत्पुत्रस्य तव दण्ड्यत्वेऽपि दण्डविधाने ममानुकम्पा जायते इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २५ ॥

प्रपन्न इति । अमित्रोऽपि शत्रुरपि नयमयं पन्थानं नीतियुक्तां पद्धतिं प्रपन्नः आश्रितः जनः साधूनां निषेव्यः आश्रयणीयः, अपनीतिः दुर्नयसम्पन्नः सुहृदपि बन्धुरपि न पुनः नैव । तथाहि एष भवदनुज एव विभीषण एव सहजमपि सोदर-

राव। श्रुतमस्ति, विभीषणश्च नः
सहजः सम्प्रति राममाश्रितः।
कति सन्ति न रामनामकाः ?
कतमस्तेषु स यस्त्वयोच्यते ?॥ २७॥

अङ्ग। जघान युधि ताड़कादिकमसीमरक्षःकुलं,
बभञ्ज धनुरैश्वरं, परिबभूव तं भार्गवम्।
स तालतरुसप्तकं सपदि कृत्तवानम्बुधिं
बबन्ध, न तथापि ते परिचितो रघूणां पतिः ?॥ २८॥

---

मपि त्वां हित्वा त्यक्त्वा नक्तञ्चरचमूनां राक्षससेनानां विरामं विध्वंसनं श्रीरामं भजते सेवते। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। शिखरिणी वृत्तम्॥ २६॥

श्रुतमिति। नः अस्माकं सहजः सहोदरः विभीषणः सम्प्रति रामञ्च राममेव आश्रितः, श्रुतमस्ति, एतदिति शेषः। रामनामकाः रामाख्याः कति न सन्ति ? बहवः सन्तीत्यर्थः। तेषु रामनामकेषु मध्ये, त्वया यः, राम इति शेषः, उच्यते कथ्यते, स कतमः ?। सुन्दरी वृत्तम्, "अयुजोर्यदि सौ जगौ युजोः। सभरा ल्गौ यदि सुन्दरी तदा॥" इति लक्षणात्॥ २७॥

जघानेति। स रघूणां पतिः युधि युद्धे ताड़कादिकम् असीम अशेषं, बहुसंख्यकमित्यर्थः, रक्षसां कुलं जघान हतवान्, ऐश्वरं धनुः हरकार्मुकं बभञ्ज खण्डितवान्, तं भार्गवं परशुरामं परिबभूव निर्जितवान्, सपदि सहसा, एकेनैवोद्यमेनेति भावः, तालतरूणां सप्तकं सप्त तालान् कृत्तवान् छिन्नवान्, अम्बुधिं सागरं बबन्ध, तथापि ते तव परिचितो न ?

राव। भग्नं भग्नमुमापतेरजगवं, बाली हतोऽसौ हत-
स्तालाः सप्त हता हताश्च, जलधिर्बद्धश्च बद्धश्च सः।
आः! किन्तेन, सशैलसागरधराधारोरगेन्द्राङ्गदं
साद्रिं रुद्रमुदस्यतो निजभुजान् जानातु रे! रे! हि मे ॥२९॥
अङ्ग। एकस्त्वया स शिखरी स्वभुजैरुदूढ़ः
शम्भोः प्रसादनविधौ दशकन्धरेण।
पूर्वं वराहवपुषाऽम्बुधिमध्यमग्ना
तेनोद्धृता गिरिसहस्रधरा धरित्री ॥ ३० ॥

---

अविदितः खलु ?। पृथ्वी वृत्तं, "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ २८ ॥

भग्नमिति। उमापतेः हरस्य भग्नम् अजगवं धनुः भग्नम्, असौ हतः बाली हतः, हताः सप्त तालाः हताश्च, बद्धश्च स जलधिः समुद्रः बद्धश्च, रामेणेति सर्वत्र शेषः। आः! तेन धनुर्भङ्गादिना किम्? सामर्थ्यं प्रकटितमिति भावः। रे रे अङ्गद! सशैलसागरा पर्वतसागरसहिता या धरा पृथ्वी तस्या धारः धारकः उरगेन्द्रः शेषनागः वासुकिर्वा अङ्गदं बाहुभूषणं यस्य तथोक्तं साद्रिं सपर्वतं, कैलाससहितमित्यर्थः, रुद्रं शङ्करम् उदस्यतः उत्क्षिपतः निजभुजान् मे मम हि निश्चये जानातु, भवान् इति शेषः, ईदृग्-बाहुवीर्य्यशालिनो मम हरधनुर्भङ्गादिकारी रामः कः? इति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥२९॥

एक इति। दशकन्धरेण दशाननेन त्वया शम्भोर्हरस्य प्रसादनविधौ आराधनव्यापारे, बलोत्साहप्रकटनेन प्रीणनार्थमिति भावः, एकः एकमात्रः स शिखरी पर्वतः, कैलास इत्यर्थः, स्वभुजैः निजबाहुभिः उदूढ़ः उद्धृतः। पूर्वं प्राक् वराहवपुषा

राव । कुतो हन्तारण्ये कनकमृगमात्रं तृणचरं
कुतो वृत्ताद्वृत्तप्लवनिपुणवाली विनिहतः ।
कुतो वह्निज्वालाजटिलशरसन्धानसुदृढ-
स्त्वहं युद्धोद्योगी समरमवतस्थेऽन्तकजयी ॥ ३१ ॥

अङ्गदः सम्मदम् ।

अवेहि मां रावण ! रामदूतं,
बाणास्तदीयाः खरदूषणादीन् ।

---

वराहमूर्त्तिं बिभ्रता तेन रामेण अम्बुधिमध्यमग्ना प्रलयपयोधि-लीना गिरिसहस्रधरा पर्वतसहस्रशालिनी धरित्री पृथ्वी उद्धृता उत्थापिता । वसन्ततिलकं वृत्तम् ॥ ३० ॥

कुत इति । अरण्ये तृणचरं तृणभक्षकं कनकमृगमात्रं काञ्चनमृगरूपधरं मारीचमित्यर्थः, हन्ता विनाशकः, राम इति भावः, कुतः ? क्वेत्यर्थः, वृत्ताद् वृत्ते प्लवः लम्फनमित्यर्थः, तत्र निपुणः पटुः शाखामृग इति यावत्, वाली विनिहतः विध्वंसितः कुतः ? क्वेत्यर्थः, वह्निज्वालाभिः बाड़वाग्नि-शिखाभिः जटिलः प्रायेण दग्धः, समुद्र इति भावः, तत्र शर-सन्धाने शरप्रयोगे सुदृढः पटुः, राम इति भावः, कुतः ? क्वेत्यर्थः । अहन्तु युद्धोद्योगी संग्रामनिपुण इति भावः, अन्तक-जयी यमजेता सन्, यमजयार्थमिति भावः, समरं संग्रामम् अवतस्थे अवस्थितः, तदहं रामश्चेत्यनयोर्महदन्तरमिति भावः । अत्र विरूपयोर्घटनात् विषमालङ्कारभेदः, "विरूपयोः सङ्घटना या च तद्विषमं मतम्" इति लक्षणात् । शिखरिणी वृत्तम् ॥ ३१ ॥

अवेहीति । हे रावण ! मां रामस्य दूतम् अवेहि

भुक्त्वा तृषार्त्ता इव शोणिताम्भः
पास्यन्ति ते कण्ठघटैः सरन्ध्रैः ॥ ३२ ॥

राव । मृत्युः पादान्तभृत्यस्तपति दिनकरो मन्दमन्दं ममाग्रे
तेऽप्यष्टौ लोकपाला मम भयचकिताः पादरेणुं चरन्ति ।
दृष्ट्वा मच्चन्द्रहासं पतति सुरबधूपन्नगीनाञ्च गर्भो
निर्लज्जौ तापसौ द्वौ कथमिह समितौ वानरान् मेलयित्वा ?
॥ ३३ ॥

अङ्ग । रे रे राक्षसवंशजात ! समरे जानातु तत्राहतं
रामे तुङ्गपतङ्गचापयुगले तेजोभिराड़म्बरे ।

---

जानीहि, तस्य इमे तदीयाः रामसम्बन्धिन इत्यर्थः, बाणाः शराः खरदूषणादीन् भुक्त्वा भक्षयित्वा तृषार्त्ता इव पिपासाकुला इव ते तव सरन्ध्रैः सच्छिद्रैः कण्ठघटैः गलकलसैः शोणिताम्भः रक्तजलं पास्यन्ति । अत्रोपमालङ्कारः । उपजाति वृत्तम् ॥ ३२ ॥

मृत्युरिति । मृत्युः यमः मम पादान्ते चरणतले भृत्यः चरणसेवक इत्यर्थः, दिनकरः सूर्य्यः मम अग्रे मन्दमन्दं तपति किरणान् वर्षति । तेऽपि प्रसिद्धा इत्यर्थः, अष्टौ लोकपालाः इन्द्रादयः भयचकिताः भयाकुलाः सन्तः मम पादरेणुं चरणरजः चरन्ति सेवन्ते इत्यर्थः । मम चन्द्रहासम् असिं दृष्ट्वा सुरबधूनां देवाङ्गनानां पन्नगीनाम् उरगनारीणाञ्च गर्भः पतति च्यवति । निर्लज्जौ द्वौ तापसौ वानरान् मेलयित्वा समाहृत्य कथम् इह लङ्कायां समितौ ? समागतौ ? सर्वथा आसन्नमृत्यू एताविति भावः । स्रग्धरा वृत्तम् ॥ ३३ ॥

रे रे इति । रे रे राक्षसवंशजात ! रक्षःकुलोद्भव ! राक्षसवंशघातेति पाठे राक्षसवंशघात ! राक्षसकुलक्षयकर ! इत्यर्थः,

सैन्यं शीघ्रमिदं त्वदीयमखिलं भूमण्डले पातितं
गृध्रैराखुठितं श्वभिः कवलितं काकैः चतं यास्यति ॥२४॥

राव। अरे! त्वामहं धर्म्मशीलतया कटुप्रलापिनमपि न हन्मि।

दूतो यथोक्तवादी स्यान्न स बध्यो महीभुजाम्।
क्रूरस्तेषान्तु कोपेन क्वचिद्वैरूप्यमर्हति॥ २५॥

---

समरे युद्धे तुङ्गम् उल्बणं पतङ्गचापयोः शरधनुषोः, "पतङ्गौ रविसार्गणौ" इति विश्वः, युगलं यस्य तस्मिन् तत्र रामे तेजोभिः आड़म्बरे समारब्धे, सन्नद्धे सति इति यावत्, त्वदीयम् इदम् अखिलं समस्तं सैन्यं शीघ्रम् आहतं प्रहतम्, अत एव भूमण्डले पातितं गृध्रैः क्रव्यादैः पक्षिभेदैः आलुठितं समन्तात् आक्रान्तं श्वभिः कुक्कुरैः कवलितं ग्रस्तं, काकैः चतं यास्यति भविष्यतीत्यर्थः, अत्र याधातोर्गमनार्थत्वेऽपि कर्म्माविवक्षया अकर्म्मकत्वम्। उक्तञ्च—"धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया॥" इति। जानातु निश्चिनोतु, भवानिति शेषः। जानातु तत्राहतमित्यत्र नाराचचक्राहतमिति, रामे तुङ्गेत्यत्र रामोत्तुङ्गेति, सैन्यं शीघ्रमित्यत्र मन्ये शीर्षमिति, श्वभिरित्यत्र शिवा इति पाठान्तरं सुगमम्। शार्दूलविक्रीड़ितं वृत्तम्॥ २४॥

दूत इति। दूतः यथोक्तवादी यथायथभाषी स्यात्, स दूतः महीभुजां राज्ञां न बध्यः न प्राणैः वियोजनीय इत्यर्थः। क्वचित् क्रूरस्तु अतिदारुणस्तु, कटुभाषीति भावः, दूतः तेषां राज्ञां कोपेन क्रोधेन वैरूप्यं रूपस्य विकृतभावं, दण्डमिति भावः, अर्हति लभते। अनुष्टुप् वृत्तम्॥ २५॥

अङ्ग । परदारापहरणे न श्रुता या दशानन ! ।
दृष्टा दूतपरित्राणे साधोस्ते धर्म्मशीलता ॥ ३६ ॥
राव । बद्धः सेतुर्यदि जलनिधौ वानरैस्तावता किं ?
किं वल्मीकाः क्षितिधरनिभाः न क्रियन्ते पिपीलैः ? ।
लङ्का दग्धा यदपि कपिना स प्रभावः किलाग्नेः,
शौर्य्याश्चर्य्यं निजभुजनयैः (बलैः) किं कृतं रामनाम्ना ?॥३७॥
अपिच । परिमि( चि )तमहिमानं क्षुद्रसैनं समुद्रं
क्षितिधररचनाभिः कोऽयमुत्तीर्य्य गर्वः ? ।

---

परेति । हे दशानन ! परदारापहरणे परस्त्रीहरणे या न श्रुता, तवेति शेषः, दूतपरित्राणे दूतरक्षणे, दूतस्य प्राणदण्डाकरणे इत्यर्थः, साधोः धार्मिकस्य ते तव सा धर्म्मशीलता धार्मिकता दृष्टा । अनुष्टुप् वृत्तम् ॥ ३६ ॥

बद्ध इति । यदि वानरैः जलनिधौ सेतुः बद्धः तावता तत इत्यर्थः, किम् ? न किमपि पौरुषमिति भावः । पिपीलैः कीटविशेषैः क्षितिधरनिभाः पर्वतसदृशाः वल्मीकाः मृत्तिकास्तूपा इत्यर्थः, किं न क्रियन्ते ? अपितु क्रियन्त एवेत्यर्थः । कपिना वानरेण, हनूमतेत्यर्थः, यदपि लङ्का दग्धा, सः दहनमित्यर्थः, विधेयप्राधान्यात् पुंस्त्वम्, अग्नेः प्रभावः किल शक्तिरेव । अतः रामनाम्ना रामाख्येन, तापसेनेति शेषः, निजभुजनयैः स्वबाहुनीतिभिः, निजबाहुबलैरिति, निजभुजजयै इति च पाठान्तरं, किं शौर्य्याश्चर्य्यम् अद्भुतं शौर्य्यं कृतं ? प्रकटितमित्यर्थः, न किमपीत्यर्थः । मन्दाक्रान्ता वृत्तम् ॥ ३७ ॥

परिमितेति । परिमितः परिच्छिन्नः, परिचितेति पाठे परिचितः विदितः, अगस्त्यगण्डूषपानादिति भावः, महिमा

अकलितमहिमानः सन्ति दुष्प्रापपारा
दशवदनभुजाख्या विंशतिः सिन्धुनाथाः ॥ ३८ ॥

अङ्ग। रे रे रावण! शम्भुशैलकलने प्रख्यातकीर्त्तिर्भवान्
रामं योद्धुमिहेच्छतीत्यनुचितं मन्यामहे केवलम्।
रामस्तिष्ठतु, लक्ष्मणस्य धनुषो रेखापि नो लङ्घिता
तच्चारेण च लङ्घितो जलनिधिर्दग्धा च लङ्कापुरी ॥३९॥

---

महत्त्वं यस्य तम् अतएव क्षुद्रम् एनं समुद्रं क्षितिधररचनाभिः पर्वतबन्धनैः, क्षितिधरघटनाभिरिति पाठेऽपि स एवार्थः, उत्तीर्य्य पारयित्वेत्यर्थः, कोऽयं गर्वः? नाहङ्कारः समुचित इति भावः। अकलितः अनाक्रान्तः, अनभिभूत इत्यर्थः, महिमा प्रभावः येषां ते दशवदनभुजा आख्या येषां तथोक्ताः, दशवदनभुजास्ते इति पाठे ते प्रसिद्धा दशवदनभुजा रावणबाहव इत्यर्थः, विंशतिः विंशतिसंख्यकाः सिन्धुनाथाः सागराः दुष्प्रापः दुरुत्तरः पारो येषां तथाभूताः सन्ति विद्यन्ते, एकस्य क्षुद्रस्य सिन्धोः पारगामिनो रामस्य अस्मद्भुजरूपविंशतिसिन्धुपारे पौरुषं द्रष्टव्यमिति भावः। रूपकमलङ्कारः। मालिनी वृत्तम् ॥ ३८ ॥

रे रे इति। रे रे रावण! भवान् शम्भुशैलस्य कैलासस्य कलने समुद्धरणे प्रख्याता कीर्त्तिर्यस्य तथाभूतः सन् इह रामं योद्धुम् इच्छति इति केवलम् अनुचितम् अयुक्तं मन्यामहे। रामः तिष्ठतु, लक्ष्मणस्य धनुषः रेखापि नो लङ्घिता त्वया, सीताहरणकाले इति भावः, तस्य चारेण दूतेन, हनूमतेत्यर्थः, जलनिधिः लङ्घितश्च, लङ्कापुरी दग्धा च। यस्य कनीयसो धनुर्लेखा नातिक्रमितुं शक्ता, यस्य च दूतेन सागरमुल्लङ्घ्य

राव । यद्भिन्नाः किल बालतालतरवो रामेण सार्द्रत्वचो
भग्नं यच्च पुरातनं हरधनुस्तद्वीर्य्यमुद्गीर्य्यति ।
नासीदेतदनागतं श्रुतिपथे स्वर्लोकधूमध्वजः
पौलस्त्यः करकन्दुकीकृतहरक्रीड़ाचलो रावणः ? ॥ ४० ॥

---

लङ्कापुरी दग्धा, तेन रामेण सह युयुत्सा तव नितरां हासकरीति भावः । शम्भुशैलमथनप्रख्यातवीर्य्यः कथं रामं योद्धुमिहेच्छसीदमखिलं चेत्तन्न युक्तं तथेति, रेखापि नो इत्यत्र रेखा क्वतेति, दग्धा च लङ्कापुरीत्यत्र दग्धा हतोऽचः पुरीति च पाठे शम्भुशैलस्य कैलासस्य मथनेन समुद्धरणेन प्रख्यातं वीर्य्यं यस्य सः सन् रामं कथम् इह योद्धुम् इच्छसि, चेत्, तदा इदमखिलं तव मननमिति भावः, न युक्तं नोचितम् । क्वता रेखा लङ्घिता ? अत्र काकुः । दग्धा पुरी, अचः तव कुमारः हत इत्यन्वयः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३९ ॥

यदिति । रामेण सार्द्रत्वचः सरसवल्कलाः बालतालतरवः अभिनवतालवृक्षाः, सप्तेति शेषः, भिन्नाः खण्डिताः, भग्ना इति पाठान्तरं, किलेति प्रसिद्धौ, इति यत्, यच्च पुरातनं हरधनुः ऐश्वरं कार्मुकं भग्नं, छिन्नमिति पाठान्तरं, हरधनुरित्यत्र शिवधनुरिति पाठान्तरम् ; तेन तद्वीर्य्यं तस्य रामस्य वीर्य्यम् उद्गीर्य्यति उद्घोष्यति, युष्माभिरिति शेषः, उद्दिश्यते इति पाठान्तरम् ; स्वर्लोकानां देवानां धूमध्वजः अग्निः, देवगणनिसूदन इत्यर्थः, करस्य कन्दुकीकृतः क्रीड़नगेण्डूकीकृतः, बाहुभिरुत्क्षिप्त इति भावः, हरस्य शम्भोः क्रीड़ाचलः कैलासः येन स पौलस्त्यः रावणः इत्येतत् श्रुतिपथे श्रवणेन्द्रिये, युष्माकमिति शेषः, अनागतम् अनुपस्थितं, श्रुतिपथमिति पाठे श्रुतिपथं

अपिच । अलमप्रस्तुतालापैः श्रुत्वाऽपि मम विक्रमम् ।
इदानीं रघुडिम्भेन वद किं कर्त्तुमिष्यते ? ॥ ४१ ॥

अङ्ग । स्वसुर्नासावसापङ्क-पङ्किलामसिवल्लरीम् ।
कदुष्णैस्त्वच्छिरोरक्तै रामः क्षालितुमिच्छति ॥ ४२ ॥

रावणः ।

शावः कश्चित्तिरश्चां त्वमसि न विदितस्तेऽपि तादृक्प्रभावाः
ते किं मां नो विदन्ति त्रिभुवनजयिनं रामसुग्रीवमुख्याः ।
तेषां किं केन तावत् परनिजबलयोस्तारतम्यं विदित्वा
सन्दिष्टं दुष्टदूत ! त्वरितमवितथं तत्तदावेदयस्व ॥ ४३ ॥

---

कर्मेत्यर्थः, न आसीत्, श्रुतमेवैतत् युष्माभिरित्यर्थः । शार्दूल-विक्रीडितं वृत्तम् ॥ ४० ॥

अलमिति । अप्रस्तुताः प्रकृतानुपयोगिन इत्यर्थः, आलापाः प्रसङ्गाः तैः अलं निष्प्रयोजनमित्यर्थः, इदानीं मम विक्रमं श्रुत्वापि रघुडिम्भेन राघवशिशुना रामेण किं कर्त्तुम् इष्यते ? अभिलष्यते ? वद । अनुष्टुप् वृत्तम् ॥ ४१ ॥

स्वसुरिति । रामः कदुष्णैः ईषदुष्णैः तव शिरसां रक्तैः स्वसुः तव भगिन्याः शूर्पणखायाः नासाया नासिकाया वसा मेदः यया पङ्किलां मलिनामित्यर्थः, असिवल्लरीम् असिलतां क्षालितुम् इच्छति । अनुष्टुप् वृत्तम् ॥ ४२ ॥

शाव इति । त्वं कश्चित् तिरश्चां तिर्य्यक्जातीयानां शावः बालकः न विदितः न ज्ञातः असि, तादृक् तथाविधः, त्वद्-वर्णितरूप इति भावः, प्रभावो महिमा येषां तेऽपि, न विदिता इति शेषः । ते रामसुग्रीवमुख्याः रामसुग्रीवादयः त्रिभुवन-जयिनं त्रिलोकीजेतारं मां रावणं किं नो विदन्ति ? नो

अङ्गदः । प्रथमतः श्रीरामपादास्त्वामादिशन्ति ।

अज्ञानादथवाधिपत्यरभसादस्मत्परोक्षे हृता
सीतेयं परिमुच्यतामिति वचो गत्वा दशास्यं वद ।
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छन्नच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥४४॥

कुमारलक्ष्मणस्त्वामाह ।

सीतां मुञ्च, भजस्व रामचरणौ, राज्यं चिरं भुज्यतां

---

जानन्ति ? अपि तु जानन्त्येवेत्यर्थः, हे दुष्टदूत ! तेषां राम-सुग्रीवादीनां मध्ये केन परनिजबलयोः तारतम्यं न्यूनातिरेकं विदित्वा किं तावत्, सन्दिष्टं ? वाचिकं प्रेषितम् ? त्वरितं द्रुतम्, अवितथं यथातथं तत् तत् सन्देशवचनम् आवेदयस्व कथय । स्रग्धरा वृत्तम् ॥ ४३ ॥

अज्ञानादिति । अज्ञानात् प्रमादात् अथवा आधिपत्येन ऐश्वर्य्येण यो रभसः गर्वः तस्मात् हेतोः, अस्माकं परोक्षे असाक्षात् हृता इयं सीता परिमुच्यतां परित्यज्यताम् । गत्वा इति वचः दशास्यं रावणंब्रूहि कथय, नो चेत् यदि न परिमुच्यते इत्यर्थः, तदा पुत्रैः वृतः सपुत्रः सन्नित्यर्थः, लक्ष्मणेति स्वगर्वपरिहारः, लक्ष्मणेन मुक्तैः क्षिप्तैः मार्गणगणैः शरसङ्घैः छेदेन शिरः-प्रभृत्यङ्गानामिति भावः, उच्छलद्भिः निर्गलद्भिः शोणितैः रक्तैः छन्नच्छन्नाः अतिशयेन छन्ना इत्यर्थः, दिगन्ताः यस्मिन् तद् यथा तथा अन्तकपुरं यमसदनं यास्यसि गमिष्यसि । च्छन्नच्छन्नेत्यत्र च्छत्रच्छन्नेति पाठे रक्तैरेव छत्रैः छन्ना इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ४४ ॥

देवाः सन्तु हविर्भुजः, परिभवं मा यातु लङ्कापुरी ।
नो चेद्वानरवाहिनीपतिमहाचञ्चच्चपेटान्तरैः
तत्तन्मुष्टिभिरेव सङ्गरगतस्तत्तत् फलं प्राप्स्यसि ॥ ४५ ॥

श्रीसुग्रीवस्त्वामाह ।

दृष्टः श्रीरघुनन्दनो ननु बलैर्वीर्य्यैर्महादर्पितः
तल्लङ्केश्वर ! मुञ्च मानमखिलं, श्रुत्वा बधं वालिनः ।
सीतामर्पय, रक्ष राक्षसकुलानीन्द्राधिकां सम्पदं,
तस्माद्गच्छ दशास्य ! रामचरणे दासत्वमङ्गीकुरु ॥ ४६ ॥

---

सीतामिति । सीतां मुञ्च त्यज, रामस्य चरणौ भज सेवस्व, चिरं राज्यं भुज्यतां, देवाः हविर्भुजः यज्ञीयहव्यभोजिनः सन्तु भवन्तु, लङ्कापुरी परिभवं विध्वंसजामवमाननामित्यर्थः, मा यातु न प्राप्नोतु । नो चेत् यदि नैतत् रोचते इति भावः, तदा सङ्गरगतः संग्रामस्थः वानरवाहिनीपतीनां वानरसेनाध्यक्षाणां महत् चञ्चत् चलत् चपेटम् अन्तरे येषां तैः तत्तन्मुष्टिभिः तत्तन्मुष्टिप्रहारैः तत्तत् फलं मदुपदिष्टानामननुष्ठानफलमित्यर्थः, प्राप्स्यसि लप्स्यसे । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४५ ॥

दृष्ट इति । ननु रावण ! बलैः सैन्यैः वीर्य्यैः शौर्य्यैः महादर्पितः महोन्नतः श्रीरघुनन्दनः श्रीरामः दृष्टः, त्वया अस्माभिश्चेति शेषः, तत् तस्मात् हे लङ्केश्वर ! वालिनः बधं श्रुत्वा मानं गर्वं मुञ्च त्यज, सीतामर्पय देहि, तस्मात् रामात् राक्षसकुलानि इन्द्राधिकां सम्पदम् ऐश्वर्य्यञ्च रक्ष, हे दशास्य ! दशानन ! गच्छ आगच्छेत्यर्थः, रामस्य चरणे दासत्वं दास्यम् अङ्गीकुरु अवलम्बस्व । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४६ ॥

प्रधानसेनापतिभिरादिष्टम् ।

रे रे रावण ! राक्षसाधम ! पशो ! मग्नोऽसि शोकार्णवे
शत्रुस्ते समुपागतस्त्वमिह किं नो बुध्यते केवलम् ? ।
रामस्यापि करावलम्बितधनुस्तीक्ष्णोज्ज्वलत्सायकः
साक्षात् काल इवापरस्तव पुरद्वारि स्थितः सानुजः ॥४७॥

अपृष्टोऽपि त्वामहं पितृबन्धुबुद्ध्या ब्रवीमि ।

रे रे रावण ! सर्वलोकविदितः श्रीरामनामा नृप-
स्त्वां हन्तुं समुपैति वानरचमूमादाय बद्धोदधिम् ।
तेनाहं प्रहितस्त्वदीयनिकटं, मद्वाक्यमाकर्ण्यतां,
सीतां देहि, भजस्व रामचरणौ, राज्यं चिरं भुज्यताम् ॥४८॥

---

रे रे इति । रे रे राक्षसाधम ! पशो ! रावण ! शोकार्णवे शोकसिन्धौ मग्नोऽसि पतितोऽसि, ते तव शत्रुः रामः समुपागतः समुपस्थितः, इह लङ्कायां तं शत्रुम् उपस्थितं किं कथं नो बुध्यते ? भवानिति शेषः,केवलम्,अन्यः सर्वो बुध्यत एवेत्यर्थः । सानुजः सभ्रातृकः रामः करेण अवलम्बितं धृतं धनुर्येन सः तथा तीक्ष्णः उज्ज्वलन् सायकः शरो यस्य तथोक्तः ; यद्वा करेण अवलम्बितं यत् धनुः तत्र तीक्ष्णं यथा तथा उज्ज्वलन् सायको यस्य सः, अपरः द्वितीयः साक्षात् स्वयं काल इव अन्तक इव तव पुरद्वारि स्थितः आस्ते । शार्दूलविक्रीडितं वृत्तम् ॥ ४७ ॥

रे रे इति । रे रे रावण ! सर्वेषु लोकेषु विदितः विख्यातः, श्रीरामनामा नृपः वानरचमूं कपिसेनाम् आदाय उदधिं सागरं बद्ध्वा त्वां हन्तुं हिंसितुं समुपैति समुपगच्छति, तेन रामेण अहं त्वदीयनिकटं प्रहितः प्रेषितः, मम वाक्यम्

वाच । आः स्कन्धावधिकण्ठकाण्डविपिने द्राक् चन्द्रहासासिना
छेत्तुं प्रक्रमिते मयैव झटिति त्रुट्यच्छिरःसञ्चये ।
अस्मेरं गलदश्रु गद्गदपदं मन्दभ्रु वा यद्यभूत्
वक्त्रेष्वेकमपि स्वयं स भगवांस्तत्र प्रमाणं शिवः ॥४९॥

अङ्ग । शिरोभिर्मा देवीः शिव इव न ते दास्यति परो
मनो दद्याः सेतावधिजलधि कैलासगुरुके ।
हितन्तु त्वां ब्रूमो मम जनकदोर्दण्डविभव-
स्फुरत्कीर्त्तिस्तम्भ ! त्यज कमलबन्धोः कुलवधूम् ॥ ५० ॥

---

आकर्ण्यतां श्रूयतां सीतां देहि, रामस्य चरणौ भजस्व सेवस्व, चिरं राज्यं भुज्यताम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४८ ॥

आ इति । आ इति विरक्तिसूचकमव्ययं, स्कन्धावधि स्कन्धपर्य्यन्तं कण्ठा एव काण्डाः तेषां विपिनं वनं तस्मिन् स्कन्धावधिकण्ठकाण्डानाम् अरण्यभूते मयैव स्वयमेवेति भावः, चन्द्रहासासिना चन्द्रहासाख्येन मदीयेन खड्गेन द्राक् झटिति छेत्तुं प्रक्रमिते उपक्रान्ते अत एव त्रुट्यतां पततां शिरसां सञ्चये समूहे सति वक्त्रेषु वदनेषु मध्ये एकमपि अस्मेरं हास्यवर्जितं गलदश्रु उद्वाष्पं गद्गदपदं भयेनार्द्धोच्चरितास्पष्टवाक् वा मन्दभ्रु सङ्कुचितभ्रुभागम् अभूत् यदि, तत्र तेषु विपर्येषु अस्मेरत्वादिषु स भगवान् शिवः स्वयं प्रमाणम्, अस्तीति शेषः, नाहं मृत्योर्बिभेमीति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४९ ॥

शिरोभिरिति । शिरोभिः पणभूतैरिति भावः, मा देवीः, मा क्रीड़, शिव इव परः अन्यः ते तुभ्यं न दास्यति, पुनः शिरांसीति शेषः । अधिजलधि जलधौ, विभक्त्यर्थेऽव्ययीभावः, कैलासगुरुके कैलासाद्रितोऽपि महति सेतौ च मनो दद्याः

राव । मिथ्योत्तम्भिततातविक्रमकथाविस्फार ! निष्कारणं
तस्य क्षत्रियडिम्भकस्य चरितं चित्रीयते त्वादृशम् ।
यद्वा तस्य मुहुर्महेश्वरधनुर्भङ्गादिकं गायसि
प्रायस्तत्त्वविचारतो न महिमा प्राग्भारमारोहति ॥५१॥

---

निधेहि, दध्या इति पाठः समीचीनः ; प्राक् त्वया कैलासाद्रिः समुद्धृतः । कैलासाद्रिमिव अधुना रामकृतसेतुमुत्पाटयितुं यतस्व । इदानीं रामेण सागरे सेतुर्बद्धस्त्वद्वधार्थम्, अतो दशा-परिणामं पश्येति भावः । मम जनकस्य वालिनः यो दोर्दण्ड-विभवः तस्य स्फुरन् दीप्यमानः कीर्त्तिस्तम्भः तत्सम्बुद्धौ रे मत्पितुर्बाहुवीर्य्यप्रकटनस्तम्भ ! त्वयि जीविति मम पितुर्बाहु-वीर्य्यकीर्त्तिः स्थास्यतीति भावः, अतः कारणात् त्वां हितन्तु हितमेव ब्रूमः कथयामः, कमलबन्धोः सूर्य्यस्य कुलवधूं सीतां त्यज रामाय प्रत्यर्पयेत्यर्थः । शिखरिणी वृत्तम् ॥ ५० ॥

मिथ्येति । मिथ्या अलीकं यथा तथा उत्तम्भितः उत्था-पितः तातस्य पितुः, वालिन इत्यर्थः, विक्रमकथायाः विस्फारः प्रकटनं येन सः तत्सम्बुद्धौ रे वृथा स्वपितृवीर्य्यश्लाघिन्नित्यर्थः, निष्कारणं नास्ति कारणं हेतुः यत्र तथोक्तम्, अतिसाधारण-मिति भावः, तस्य क्षत्रियडिम्भकस्य क्षत्रियशिशोः रामस्य चरितं त्वादृशं तव तुल्यं क्षुद्रं पशुमिति भावः, चित्रीयते अद्भुतायते, विस्माययतीत्यर्थः, यद्वा यत एव तस्य क्षत्रिय-डिम्भकस्य महेश्वरधनुर्भङ्गादिकं मुहुः पुनः पुनः गायसि कीर्त्तयसि, प्रायः तत्त्वविचारतः तत्त्वस्य परमार्थस्य विचारतः विचारात्, विचारे कृते इति भावः, महिमा प्रभावः प्राग्भारम् उत्कर्षं न आरोहति न प्राप्नोति । आपाततः तस्य रामस्य

तयोरुक्तिप्रत्युक्ती ।

भग्नं शम्भुधनुर्घुणैरुपहतं, सन्ताड़िता ताड़का
सापि स्त्री जरती, खरप्रभृतयो व्यापादितास्तेऽर्भकाः ।
तालाः सप्त हतास्तृणानि किल ते, बाली हतोऽसौ कपि-
र्बद्धो वारिनिधिर्निरुत्तर इति श्रुत्वाऽभवद्रावणः ॥ ५२ ॥

रावणं निरुत्तरीभवन्तं दृष्ट्वा तदाच्छादनाय प्रहस्तः ।

ब्रह्मन्नध्ययनाय नैष समयस्तूष्णीं बहिः स्थीयतां
स्वल्पं जल्प बृहस्पते ! जड़मते ! नैषा सभा वज्रिणः ।

---

कमपि कार्य्यविशेषं दृष्ट्वा लोकाः विस्मयं गच्छन्ति परमस्मिन् मया निहते सति स महिमा क्व गण्यते इति भावः । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ५१ ॥

भग्नमिति । शम्भोः धनुः भग्नं, रामेणेति सर्वत्र शेषः । इति अङ्गदोक्तिः । घुणैः तदाख्यकीटैः उपहतं जीर्णतां नीत-मित्यर्थः, तदिति शेषः, अतः सुकरस्तद्भङ्ग इति भावः । इति रावणोक्तिः । ताड़का सन्ताड़िता निहता । इति अङ्गदोक्तिः । सापि ताड़का जरती स्थविरा स्त्री, अस्या हनने न पौरुषमिति भावः । इति रावणोक्तिः । खरप्रभृतयः राक्षसाः व्यापादिताः निहताः । इति अङ्गदोक्तिः । ते खरादयः अर्भकाः बालकाः । इति रावणोक्तिः । सप्त तालाः हताः विद्धाः । इति अङ्गदोक्तिः । ते तालाः तृणानि किल तृणानि इति प्रसिद्धानि इत्यर्थः, तृण-च्छेदने का महिमा ? प्रत्युत कापुरुषत्वं लोष्टमर्दी तृणच्छेदीति कापुरुषलक्षणत्वेनोक्तत्वादिति भावः । इति रावणोक्तिः । बाली हतः । इति अङ्गदोक्तिः । असौ बाली कपिः वानरः, वानर-स्यैकस्य हननं न पौरुषं प्रकटयतीति भावः । इति रावणोक्तिः ।

वीणां संहर नारद ! स्तुतिकथावादैरलं तुम्बुरो !
सीताकामनभल्लसन्दितवपुः सुस्थो न लङ्केश्वरः ॥ ५३ ॥
सुस्थो न लङ्केश्वर इति प्रच्छादयितुं स एव कथयति ।
प्रतापं संसोढुं रविरपि दशास्यस्य न विभु-
र्निमज्जत्युन्मज्जत्यपरजलधौ पूर्वजलधौ ।

---

वारिनिधिः समुद्रः बद्धः । इति अङ्गदोक्तिः । इति श्रुत्वा रावणः निरुत्तरः प्रतिवादवर्जितः अभवत् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५२ ॥

ब्रह्मन्निति । हे ब्रह्मन् ! एष समयः अध्ययनाय वेदपाठाय न, वह्निः तूष्णीं स्थीयतां, जड़मते ! बृहस्पते ! स्वल्पं शनैरिति यावत्, जल्प आलप, एषा वज्रिणः इन्द्रस्य सभा न, तत्रैव तव स्वाच्छन्द्यमिति भावः । हे नारद ! वीणां संहर संस्तम्भय, हे तुम्बुरो ! स्तुतिकथावादैः अलं निष्प्रयोजनम् । सीतायाः कामनमेव भल्लः अस्त्रविशेषः, तेन सीतागतकामेनेति भावः, सन्दितं बद्धम्, आक्रान्तमित्यर्थः, वपुः शरीरं यस्य तथोक्तः, लङ्केश्वरः न सुस्थः न सुष्ठु स्थित इत्यर्थः, सुस्थतायामेव युष्माभिरयमुपासितव्य इति भावः । वीणां संहर इत्यत्र स्तोत्रं संहरेति, स्तुतिकथावादैरित्यत्र स्तुतिकथालापैरिति, सीताहल्लकभल्लसन्दितवपुरिति तथा सीतारल्लकभल्लभग्नहृदयः इति च पाठाः । सीतायाः रल्लकः सीमन्तः, "शिरःसिन्दूरसरणिः स्त्रीणां वै रल्लकः स्मृतः" इति हलायुधः । स एव भल्लः अस्त्रविशेषः, तेन भग्नं व्यथितं हृदयं यस्य तथाभूत इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५३ ॥

प्रतापमिति । रविरपि तपनोऽपि दशास्यस्य रावणस्य

हरिः शेते सिन्धौ वसति च हिमाद्रौ स्मरहरः
सुरज्येष्ठो धाता न हि सरसिजं मुञ्चतितराम् ॥ ५४ ॥
वीरोऽयं किमु वर्ण्यतां दशमुखश्छिन्नैः शिरोभिः स्वयं
यः पूजास्रजमुत्सुको घटयितुं देवस्य खट्वाङ्गिनः ।
सूत्रार्थं हरकण्ठसूत्रभुजगव्याकर्षणायोद्यतः
साटोपं प्रमथैः कृतभ्रुकुटिभिः स्थित्वाऽन्तरे वारितः ॥ ५५ ॥

---

प्रतापं संसोढुं न विभुः न शक्तः सन् अपरजलधौ पश्चिमसागरे निमज्जति पुनः पूर्वजलधौ उन्मज्जति । हरिः तथाभूत इति भावः, सिन्धौ समुद्रे शेते । स्मरहरः शिवश्च हिमाद्रौ वसति, सुरज्येष्ठः पितामह इत्यर्थः, धाता सरसिजं कमलं, शीतलमिति भावः, न हि मुञ्चतितरां नैव त्यजतितरां, सततमेव कमलासने तिष्ठतीति भावः । शिखरिणी वृत्तम् ॥ ५४ ॥

वीर इति । अयं वीरो दशमुखः रावणः किमु वर्ण्यताम् ? वर्णयितुं न शक्यत एवेत्यर्थः, यः स्वयम् आत्मना छिन्नैः शिरोभिः मुण्डैः खट्वाङ्गिनः खट्वाङ्गधरस्य देवस्य शम्भोः पूजास्रजम् अर्चनमाल्यं घटयितुं रचयितुम् उत्सुकः सन् सूत्रार्थं गुम्फनसूत्रसंग्रहार्थमित्यर्थः, हरस्य कण्ठसूत्रं कण्ठे गजचर्म्म-ग्रन्थनार्थमिति भावः, यो भुजगः सर्पराजः तस्य व्याकर्षणाय आकृष्य नयनाय उद्यतः किन्तु प्रमथैः शिवानुचरैः नन्द्या-दिभिः साटोपंससम्भ्रमं यथा तथा कृता भ्रुकुटिः यैः तथाभूतैः सद्भिः अन्तरे अन्तराले, न तु समक्षं भयादिति भावः, स्थित्वा वारितः मा मा नैवं कुर्विति प्रतिषिद्धः । शार्दूलविक्रीडितं वृत्तम् ५५ ॥

अङ्ग । कैलाससानुपरितोलनवर्द्धमान !
कारागृहेषु चिरमार्जितमर्जुनेन ।
त्वां बालिबालधिलताङ्कितमौलिदेशं
जानामि रावण ! जगत्त्रयधूमकेतुम् ॥ ५६ ॥

प्रहस्तः सरोषमाह ।

ख्यातां नाम कपीन्द्रहैहयपती तस्यावगाढ़ान्तर-
स्थेमानौ दशकन्धरस्य महती स्कन्धप्रतिष्ठा पुनः ।
सद्यः पाटितकण्ठकीकसकणाकीर्णां यदंसस्थलीः
स्नेनैभाजिनपल्लवेन मुदितः संयोजयद्धूर्ज्जटिः ॥ ५७ ॥

---

कैलासेति । कैलासस्य सानोः पर्वतैकदेशस्य, न तु सर्वस्येति भावः, परितोलनेन समुद्धरणेन वर्द्धमान ! वृथाप्रलापिन् हे रावण ! अर्जुनेन कार्त्तवीर्य्येण कारागृहेषु चिरम् आर्जितम् अधिवासितं तथा बालिनः मम तातस्य बालधिलताभिः पुच्छवल्लीभिः, अङ्कितः मौलिदेशः धम्मिल्लांशः यस्य तं जगतां त्रयं त्रिभुवनं तस्य धूमकेतुः तं रावणं त्वां जानामि । वसन्ततिलकं वृत्तम् ॥ ५६ ॥

ख्यातामिति । कपीन्द्रहैहयपती बालिकार्त्तवीर्य्यौ तस्य दशकन्धरस्य रावणस्य अवगाढ़ं प्रविष्टम्, अनुभूतम् इत्यर्थः, अन्तरस्थेमा आन्तरम्, अतिबलमित्यर्थः, "स्थेमातिबलधैर्य्ययोः" इति हैमचन्द्रः, याभ्यां तौ ख्यातां नाम सम्भावनायां बाली कार्त्तवीर्य्यश्च अस्य बलवीर्य्यं जानातीति सम्भावयामीत्यर्थः, पुनः किन्तु दशकन्धरस्य स्कन्धप्रतिष्ठा स्कन्धसुख्यातिः महती सर्वश्रेष्ठेति यावत् । तत्र हेतुमाह, सद्य इति । धूर्ज्जटिर्हरः मुदितः

अङ्ग । रे रे राक्षसराज ! मुञ्च सहसा देवीमिमां मैथिलीं
मिथ्या किं निजपौरुषप्रकटनप्रागल्भ्यमभ्यस्यसे ? ।
एतां पश्यसि किं न किन्नरगणैरुद्गीतदोर्विक्रमां
सेनां वानरभर्त्तुरुद्भटभुजस्तम्भैर्गभीरां पुरः ? ॥ ५८ ॥

राव । एते ते मम बाहवः सुरपतेर्दोर्दण्डकण्डूहराः
सोऽहं सर्वजगत्पराभवकरो लङ्केश्वरो रावणः ।
सेतुं बद्धमहं शृणोमि कपिभिः पश्यामि लङ्कां हतां
जीवद्भिर्न च दृश्यते किमथवा किं नाम न श्रूयते ? ॥५९॥

---

शिरःकर्त्तनेन पूजितत्वात् प्रीतः सन् स्वेन स्वकीयेन इभाजिन-पल्लवेन गजचर्मखण्डेन सद्यः पाटितानां निकृत्तानां कण्ठानां कीकसकणैः अस्थिकणैः, "कीकसं कुल्यमस्थि च" इत्यमरः, आकीर्णाः व्याप्ताः यस्य रावणस्य अंसस्थलीः स्कन्धदेशान् संयोजयत् योजयामास । गजचर्मणां स्वतो दार्ढ्यात् रावणकण्ठ-देशानां दृढतरीकरणार्थं गजचर्मणा सन्नद्धा इति भावः । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ५७ ॥

रे रे इति । रे रे राक्षसराज ! सहसा शीघ्रम् इमां देवीं मैथिलीं सीतां मुञ्च त्यज मिथ्या अलीकं निजपौरुषप्रकटनेन प्रागल्भ्यम् आत्मगौरवम् अभ्यस्यसे किम् ? पुनः पुनः विद्व-णोषीत्यर्थः किम् ? किन्नरगणैः उच्चैः कीर्त्तितः दोर्विक्रमः बाहुवीर्य्यं यस्याः तां वानरभर्त्तुः सुग्रीवस्य उद्भटैः विकटैः भुजैः एव स्तम्भैः गभीरां गहनां, पालितामिति भावः, एतां सेनां पुरः अग्रतः न पश्यसि किम् ? । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५८ ॥

एते इति । सुरपतेः इन्द्रस्य दोर्दण्डकण्डूहराः भुजदण्ड-कण्डूतिविनोदनाः, दर्पहरा इति भावः, मम एते ते प्रसिद्धाः

इन्द्रं माल्यकरं सहस्रकिरणं द्वारि प्रतीहारकं
चन्द्रं छत्रधरं समीरवरुणौ सम्मार्जयन्तौ गृहान् ।
पाकस्योपरि निष्ठितं हुतवहं किं मद्गृहे नेक्षसे ?
रक्षोभक्ष्यमनुष्यमात्रवपुषं किं स्तौषि रे राघवम् ॥ ६० ॥

अङ्ग । रे रे रावण ! दीनहीन ! विमते ! रामोऽपि किं मानुषः ?
किं रम्भाप्यबला ? कृतं किमु युगं ? कामोऽपि धन्वी किमु ?
किं गङ्गा च नदी ? गजः सुरगजोऽप्युच्चैःश्रवाः किं हयः ?
त्रैलोक्यप्रकटप्रभावविभवः किं रे ! हनूमान् कपिः ? ॥६१॥

---

बाहवः भुजाः, विंशतिरिति शेषः, अहं स प्रसिद्धः सर्वेषां जगतां पराभवकरः लङ्केश्वरः रावणः । अहं सेतुं बद्धं शृणोमि लङ्काञ्च कपिभिः वानरैः वृताम् आकीर्णां पश्यामि, जीवद्भिर्जनैः किं न च दृश्यते ? सर्वमेव दृश्यते इत्यर्थः, अथवा किं नाम न श्रूयते ? सर्वमेव श्रूयते इत्यर्थः, दर्शनं श्रवणञ्च जीविधर्म्म इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५९ ॥

इन्द्रमिति । मद्गृहे मम गेहे इन्द्रं माल्यकरं मालाकरं, सहस्रकिरणं सूर्य्यं द्वारि प्रतीहारकं दौवारिकं, चन्द्रं छत्रधरं, समीरवरुणौ गृहान् सम्मार्जयन्तौ मार्जन्या जलेन च संशोधयन्तौ, पाकस्य रन्धनव्यापारस्य उपरि विषये इति यावत्, हुतवहम् अग्निं निष्ठितं नियुक्तं न ईक्षसे किम् ? न पश्यसि किम् ? रक्षसां भक्ष्यं मनुष्यमात्रं वपुः शरीरं यस्य तं राघवं किं कथं स्तौषि प्रशंससि ? रे इति नीचसम्बोधनम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६० ॥

रे रे इति । रे रे रावण ! दीनो दुर्बलः हीनः भाग्यवर्जित इत्यर्थः, तत्सम्बुद्धौ हे विमते ! विपरीतबुद्धे ! आसन्न-

रामोऽपि किं स मनुजः ? पयोधिमध्ये बबन्ध यः सेतुम् ।
तेऽपि च ननु किं कपयो ? येषां लङ्कादहनचरितम् ॥६२॥

उपोद्घातस्मृतहनूमच्चरितो रावणः । (क)

येनादाहि ममाग्रतः पुरमिदं, चाक्षो बली लीलया
येनामारि च पर्वतस्य कुहरं चाभारि वैरिव्रजैः ।

---

काले विपरीतबुद्धिरिति भावः, रामोऽपि मानुषः किम् ? रम्भापि तदाख्या सुरसुन्दरी अपि अबला बलहीना सामान्या नारी किम् ? कृतं सत्यं युगं सामान्यतः समयविशेषः किम् ? कामोऽपि धन्वी धनुर्धरः साधारण इति भावः, किम् ? गङ्गा च नदी सामान्या किम् ? सुरगजः गजः किम् ? उच्चैश्रवाः हयः अश्वः किम् ? रे इति नीचसम्बोधनं त्रैलोक्येषु त्रिभुवनेषु प्रकटः प्रसिद्धिं गतः प्रभावविभवः महिमा समृद्धिर्यस्य तथाभूतः हनूमान् कपिः किम् ? एते रामादयः नैव साधारणा इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६१ ॥

राम इति । यः पयोधिमध्ये सागरमध्ये सेतुं बबन्ध, स रामोऽपि मनुजः मनुष्यः किम् ?। येषां लङ्कादहनचरितम्, अस्ति इति शेषः, तेऽपि च कपयः सामान्यवानराः किम् ? दुर्बुद्धिस्त्वं यत् राममेनं मनुष्यं हनूमदादींश्च वानरान् गणयसीति भावः । आर्य्या वृत्तम् ॥ ६२ ॥

(क) उपोद्घातेति । उपोद्घातेन प्रसङ्गक्रमेण स्मृतं हनूमतश्चरितं येन तथोक्तः ।

येनेति । हे अङ्गद ! येन मम अग्रतः समक्षम् इदं पुरं लङ्केत्यर्थः, अदाहि दग्धं, येन बली बलवान् अक्षः मत्कुमारः लीलया अवहेलया अमारि अघानि च, वैरिव्रजैः शत्रुनिवहैः

येनाभाजि महावनं कपिवरेणातारि वारां निधि-
स्तत्तुल्यो भवतां नृपस्य कटके वीरोऽस्ति किञ्चाङ्गद ! ? ॥६३॥
अङ्ग । यो युष्माकमदीदहत् पुरमिदं योऽदीदलत् काननं,
योऽक्षं वीरममीमरद्गिरिदरीं योऽभीभरद्वानरैः ।
सोऽस्माकं कटके कदाचिदपि नो वीरेषु सम्भाव्यते
दौत्येनायमितस्ततः प्रतिदिनं संप्रेष्यते प्रेष्यवत् ॥६४॥
यो लङ्कां समदीपयत्तव सुतं रक्षांसि चापीपिषद्
यः कौशल्यमवीवदज्जनकजामब्धिं तथातीतरत् ।

---

त्वत्प्रभृतिभिरिति भावः, पर्वतस्य सुवेलस्य कुहरं गह्वरम् अभारि अपूरीत्यर्थः, येन कपिवरेण महावनम् अशोकाख्यम् अभाजि भग्नं, वारां निधिः समुद्रश्च अतारि अलङ्घि, भवतां नृपस्य राज्ञः सुग्रीवस्य कटके सेनानिवेशे तत्तुल्यः तेन सदृशः वीरः अस्ति किम् ? चेत्यवधारणार्थं नास्त्येवेत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६३ ॥

य इति । यः युष्माकम् इदं पुरम् अदीदहत् दाहयामास, यः काननम् अशोकवनम् अदीदलत् खण्डयामास, यः वीरम् अक्षम् अमीमरत् मारितवान्, यः वानरैः गिरिदरीं सुवेलाद्रि-गुहाम् अभीभरत् पूरयामास, सः कदाचिदपि अस्माकं कटके सैन्ये वीरेषु मध्ये नो सम्भाव्यते न गण्यते, अयं प्रतिदिनं दौत्येन दूतकर्म्मणा हेतुना प्रेष्यवत् भृत्यवत्, साम्प्रतमिति पाठा-न्तरम् ; इतस्ततः संप्रेष्यते प्रेर्य्यते, राज्ञेति शेषः । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ६४ ॥

य इति । यः लङ्कां समदीपयत् ददाहेत्यर्थः, तव सुतम् अक्षं रक्षांसि च अपीपिषत् निष्पेषितवान्, यः जनकजां सीतां

यथारामममूमुटत् स हनूमानस्मत्प्रवीरोद्यमे
दूराक्रामणदौत्य एव न पुनर्योद्धुं समादिश्यते ॥ ६५ ॥

रावणः। रामः स्त्रीविरहेण हारितवपुस्तच्चिन्तया लक्ष्मणः
सुग्रीवोऽङ्गदवाक्यविद्धिततया निर्मूलकूलद्रुमः।
गण्यः कस्य विभीषणः स च रिपोः कारुण्यदैन्यातिथिः
लङ्कातङ्कविटङ्कपावकपटुर्बध्यो ममैकः कपिः ॥ ६६ ॥

---

कौशल्यं कुशलवार्त्ताम् अवीवदत् उवाच, स्वार्थे णिजन्तः, तथा अब्धिं सागरम् अतीतरत् लङ्घितवान्, अत्रापि स्वार्थे णिजन्तः, यश्च आरामं वनम् अमूमुटत् बभञ्ज स हनूमान् अस्माकं प्रवीराणां प्रकृष्टवीराणाम् उद्यमे युद्धोद्योगे दूरस्य देशस्य आक्रामणं यस्मिन् तादृशे दौत्य एव समादिश्यते नियुज्यते न पुनर्योद्धुं युद्धार्थं नैव नियुज्यते इत्यर्थः, वीरेषु न गण्यते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ६५ ॥

राम इति। रामः स्त्रिया भार्य्याया विरहेण हारितं नाशितं वपुः शरीरं यस्य तथाभूतः दुर्बलतया मृतप्राय इति भावः, लक्ष्मणः तस्य रामस्य चिन्तया तथैव हारितवपुरित्यन्वयः, सुग्रीवः अङ्गदस्य वाक्येन विद्धिततया पितृघातकत्वात् अङ्गदस्य सदैव सुग्रीवे दुर्वाक्यप्रयोग इति भावः, निर्मूलश्चासौ कूलद्रुमश्चेति तथोक्तः, पितृनिधनात् अङ्गदेन वाक्शल्यविद्धः सन् निरुत्साहः सुग्रीवो हि तत्साहाय्यलाभे निराशतया वृद्धतया च पतनोन्मुखतटतरुवत् स्थित इति भावः। विभीषणः कस्य गण्यः ? न केनापि गण्यते, स च रिपोः शत्रोः रामस्य कारुण्यं करुणा तस्य दैन्येन दयाभावेन अतिथिः, जात इति शेषः। एकः केवलः, "एके मुख्यान्यकेवलाः" इत्यमरः, लङ्काया

अङ्गदः । यत् सन्देशहरेण मारुतसुतेनातारि वारां निधिः
क्षिप्रं गोष्पदवन्निजालयमिव प्रावेशि लङ्कापुरी ।
सीतादर्शि समभ्यभाषि च वनं चाभञ्जि रक्षःपते !
सैन्यं भूर्य्यवधि व्यदाहि च पुरी रामः कथं वर्ण्यते ? ॥६७॥

दृष्टः किं रघुनन्दनो न हि पुरा ? किञ्च त्वया न श्रुतो-
ऽरण्ये किं न विलम्बितोऽसि न पुनर्मार्गे स्थितोऽसि क्षणम् ?
तल्लङ्केश्वर ! मुञ्च मानमखिलं श्रुत्वा बधं बालिनः
सीतामर्पय रक्ष राक्षसकुलं दासत्वमङ्गीकुरु ॥ ६८ ॥

---

आतङ्कः भयं तस्य विटङ्कः आधारविशेषरूपः तस्य यः पावकः अग्निः तत्र तद्दाने इति भावः, पटुः लङ्कादाहक इत्यर्थः, कपिः हनूमान् मम बध्यः हन्तव्यः, रामादयस्तु स्वयमेव हताः न ममैतेषु यत्नः करणीयः केवलं हनूमानेव वधार्ह इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६६ ॥

यदिति । हे रक्षःपते ! राक्षसेश्वर ! यस्य सन्देशहरेण वार्त्तावहेन मारुतसुतेन पवननन्दनेन क्षिप्रं शीघ्रं वारां निधिः समुद्रः गोष्पदवत् अतारि उत्तीर्णः, निजालयमिव लङ्कापुरी प्रावेशि प्रविष्टा, सीता अदर्शि दृष्टा समभ्यभाषि सम्भाषिता च, वनम् अशोककाननम् अभञ्जि भग्नञ्च, भूरि प्रभूतं सैन्यं राक्षसबलम् अबधि निहतं, पुरी लङ्का व्यदाहि विशेषेण दग्धा च स रामः कथं केन प्रकारेण वर्ण्यते कीर्त्त्यते ? दूतशक्तिदर्शनेनैव रामप्रभावो वेदितव्य इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६७ ॥

दृष्ट इति । त्वया पुरा पूर्वं रघुनन्दनः रामः किं न हि दृष्टः ? किञ्च न श्रुतः ? तर्हि अरण्ये पञ्चवट्यां किं कथं न विलम्बितः असि ? सीताहरणकाले इति भावः, मार्गे पथि न

रावः । मरुत्वद्दम्भोलिक्षणघटितघोरश्वयथुना
निसर्गोदग्रेण प्रसभमुरसा व्याप्तगगनः ।
श्रियं देवद्रोचीं निजभुजवनोद्दामकरिणी-
मयं कुर्वन् वीर ! स्मरसि कथमासीद्दशमुखः ? ॥ ६९ ॥
येऽहंपूर्विकया प्रहारसभजन् मां छिन्धि मां छिन्धि मां
छिन्धीत्युक्तिपराः पुरारिपुरतो लङ्कापतेर्मौलयः ।

---

पुनः नैव क्षणं स्थितः असि, तत् तस्मात् हे लङ्केश्वर ! अखिलं समस्तं, सर्वथेति भावः, मानं मुञ्च त्यज, वालिनः मत्पितुः, त्वज्जयिन इति भावः, बधं श्रुत्वा सीताम् अर्पय, राक्षसकुलं रक्ष, दासत्वं भृत्यत्वम् अङ्गीकुरु स्वीकुरु च, रामचरणे प्रणिपत इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ६८ ॥

मरुत्वदिति । हे वीर ! अयं दशमुखः रावणः मरुतः सन्त्यस्येति मरुत्वानिन्द्रः, "इन्द्रो मरुत्वान् मघवा" इत्यमरः, तस्य दम्भोलिर्वज्रं तेन क्षणं योगः, आहतिरिति यावत्, तेन घटितः जनितः घोरः तीव्रः श्वयथुः स्फीतता यस्य तेन निसर्गोदग्रेण स्वभावोन्नतेन उरसा वक्षसा व्याप्तम् आक्रान्तं गगनं येन तथाभूतः सन् देवानञ्चतीति देवद्रोची तां देवसम्बन्धिनीमित्यर्थः, श्रियं लक्ष्मीं निजभुजा एव वनानि तेषाम् उद्दामकरिणीं मत्तहस्तिनीं कुर्वन्, यथा करिणी वनमाश्रयति तद्वत् निजभुजवनाश्रितां करिणीं विदधत् कथं कीदृशः आसीत्, तत् स्मरसि किम् ? वाक्यार्थः कर्म । शिखरिणी वृत्तम् ॥ ६९ ॥

ये इति । ये लङ्कापतेः ममेति शेषः, मौलयः शिरांसि मां छिन्धि मां छिन्धि मां छिन्धि इति उक्तिपराः वदन्त इत्यर्थः, पुरारिपुरतः पुरारेर्हरस्य समक्षम् अहंपूर्विकया

ते भूमौ पतिताः पुनर्नवभवानालोक्य मूर्द्धोऽपरान्
याचिष्यन्त इमे हि नो वयमिति प्रीत्याट्टहासं व्यधुः ॥७०॥

अङ्ग । आस्तां मस्तकहोमविक्रमकथा पौलस्त्य ! विस्तारिणो
देहं किन्न निपातयन्ति दहने वैधव्यभीताः स्त्रियः ? ।
कैलासोद्धरणेन भारवहनप्रौढ़िस्त्वयाविष्कृता
तूर्णं वर्णय किञ्च किञ्चिदपरं यत् पौरुषस्यास्पदम् ? ॥७१॥

---

अहमहमिकया प्रहारं निकृन्तनम् अभजन् प्रापुः, ते भूमौ पतिताः पुनः नवभवान् नूतनोत्पन्नान् अपरान् मूर्द्धः शिरांसि आलोक्य इमे मूर्द्धानः याचिष्यन्ते हि प्रार्थयिष्यन्ते एव, वरं पुरारेरिति शेषः, न वयं याचिष्यामहे इति प्रीत्या याञ्चा-दैन्यमतीव दुःसहं मानिनामिति भावः, अट्टहासम् उच्चैर्हास्यं व्यधुः कृतवन्तः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७० ॥

आस्तामिति । हे पौलस्त्य ! विस्तारिणो विस्तारवती, बृहतीत्यर्थः, मस्तकानां शिरसां होमे यो विक्रमः पौरुषं तस्य कथा आस्तां तिष्ठतु, स्त्रियः नार्य्यः वैधव्यात् स्वामिवियोग-जनितक्लेशात् भीताः तत्क्लेशं सोढ़ुमशक्नुवत्य इति भावः, देहं दहने अग्नौ किं न निपातयन्ति ? अपितु पातयन्त्ये-वेत्यर्थः, त्वन्तु शत्रुपराजयभीत्या तथा कृतवानिति किं तव पौरुषमिति भावः । त्वया कैलासस्य पर्वतस्य उद्धरणेन भारवहनस्य प्रौढ़िः सामर्थ्यम् आविष्कृता प्रकटिता, तव इतर-जनस्येव भारवहने सामर्थ्यमस्ति, तत्र पौरुषं किमिति भावः । यत् पौरुषस्य पुरुषकारस्य आस्पदं स्थानं, वीर्य्यप्रकटनस्थानमिति यावत्, अपरम् अन्यत् किञ्चित्, अस्ति चेदिति शेषः, तत् वर्णय प्रकटय । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७१ ॥

दोर्दण्डाहितपौत्रभिक्षुरभवत् यस्मिन् पुलस्त्यो मुनिः
तद्बाह्वोर्वनमच्छिनत् परशुना यो राजवीजान्तकः ।
शौर्य्यं शौर्य्यरसाम्बुधेर्भृगुपतेर्ग्रासाय नासीज्जलं
तत्तेजोवड़वानलस्य किमसौ लङ्कापतिः पल्वलम् ॥ ७२ ॥

रामकटके त्वं कीदृशः स कपिर्वा क्व इति प्रश्ने ।
दूतोऽहं खलु रामराजभवने, लेखार्थसंवाहकः
यातो ह्यत्र पुरागतः स हनुमान्निर्दग्धलङ्कापुरः ।
बद्धो रावणसूनुनेति कपिभिः सन्ताड़ितस्तर्जितः
सव्रीड़ः सपराभवो वनमृगः कुत्रेति न ज्ञायते ॥ ७३ ॥

---

दोर्दण्डेति । पुलस्त्यो मुनिः यस्मिन् राजनि कार्त्तवीर्य्ये दोर्दण्डेन बाहुदण्डेन, कार्त्तवीर्य्यस्येति भावः, आहितः बद्धः पौत्रः विश्रवःसुतो रावणः तस्य भिक्षुः प्रार्थी अभवत्, यो राजवीजान्तकः राजसन्तानयमः, भृगुपतिरित्यर्थः, परशुना तस्य बाह्वोर्भुजयोर्वनं बाहुसहस्रमित्यर्थः, अच्छिनत् चिच्छेद, शौर्य्यरसाम्बुधेः वीर्य्यरससागरस्य तस्य भृगुपतेः परशुरामस्य शौर्य्यं जलं तस्य तेजो जलमिति भावः, तस्य बड़वानलस्य रामस्येति भावः, ग्रासाय गण्डूषमात्राय अपि नासीत्, असौ लङ्कापतिः, त्वमिति शेषः, रामबड़वानलस्य पल्वलं क्षुद्रं सरः किम् ? नैवेत्यर्थः, समुद्रशोषकस्य बाड़वाग्नेरिव भार्गवजेतुः रामस्य पल्वलमिव त्वमकिञ्चित् वस्त्विति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७२ ॥

दूत इति । अहं राम एव राजा रामराजः तस्य भवने दूतः खलु दूत एव । पुरा पूर्वम् अत्र लङ्कायाम् आगतः निर्दग्धं लङ्कापुरं येन सः वनमृगो हनूमान् लेखार्थसंवाहकः लेख

राव । ज्ञातं रामस्य वैदग्ध्यं येन दूतः कृतो भवान् ।
त्वयि दूतगुणः को वा तं व्याचक्ष्व वनेचर ! ॥ ७४ ॥
अङ्ग । सन्धौ वा विग्रहे वापि मयि दूते दशानन ! ।
अक्षतो वा क्षतो वापि क्षितिपृष्ठे लुठिष्यसि ॥ ७५ ॥
राव । रे रे क्षुद्रकपे ! सुवेलकटकात्तौ तापसौ वारय
प्राणैर्वै विनियोजयन्निजतनुं गच्छेति शीघ्रं वद ।

---

एवार्थः वस्तु, "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः, तस्य संवाहकः पत्रवाहक इत्यर्थः, रावणसूनुना मेघनादेन बद्धोऽयमिति कपिभिः वानरैः सन्ताड़ितः तर्जितः तिरस्कृतः अतएव सव्रीड़ः सलज्जः सपराभवः सावमानः कुत्र यातो हि इति न ज्ञायते, अस्माभिरिति शेषः। दूतोऽहं खल्वित्यत्र कस्त्वं वानरेति, यातो ह्यत्र इत्यत्र यातस्तत्रेति, यातः कुत्रेति पाठाः, सव्रीड़ः सपराभव इत्यत्र सव्रीड़ार्त्तिपराभव इति च पाठान्तरं सुगमम्। शार्दूलविक्रीड़ितं वृत्तम् ॥ ७३ ॥

ज्ञातमिति। रामस्य वैदग्ध्यं पाण्डित्यम्, अभिज्ञत्वमित्यर्थः, ज्ञातं विदितं, येन रामेण भवान् वानर इति भावः, दूतः कृतः, हे वनेचर! शाखामृग! त्वयि दूतगुणः दूतधर्म्मः कः वा, अस्तीति शेषः, तं व्याचक्ष्व कथय। अनुष्टुप् वृत्तम् ॥ ७४ ॥

सन्धाविति। हे दशानन! मयि दूते दौत्यकार्य्यं कुर्वति सति, त्वं सन्धौ वा विग्रहे युद्धे वापि अक्षतो वा क्षतो वापि क्षितिपृष्ठे भूतले लुठिष्यसि, सन्धिपक्षे रामचरणे अक्षतशरीरेण तथा युद्धपक्षेऽपि क्षतशरीरेण रणभूमौ पतितव्यमित्युभयथापि तव भूतले पतनं नियतमेवेति भावः। अनुष्टुप् वृत्तम् ॥ ७५ ॥

रे रे इति। रे रे क्षुद्रकपे! तौ तापसौ रामलक्ष्मणौ

उन्निद्रः समदः समुद्रनिकटे वीरोऽस्ति कुम्भः स्वयं
लङ्कालङ्कृतिकः, सुरेन्द्रभवनाकाङ्क्षाकृती रावणः ॥७६॥
अयमतिशयदुष्टो हन्यतां हन्यतामि-
त्यभिहितवति कोपाद्रावणे वालिसूनुः।
धृतभुजमथ रक्षोवृन्दमुद्धूय सौधान्
चरणतलनिपातैश्चूर्णयित्वोत्पपात ॥ ७७ ॥

---

सुवेलकटकात् सुवेलपर्वतनितम्बात्, यवर्थे पञ्चमी, सुवेलकटकं गत्वेत्यर्थः, वारय, मत्कलहादिति शेषः, वै निश्चये प्राणैः निज-तनुं स्वशरीरं विनियोजयन् अविरहयन् गच्छ, स्वमालयमिति शेषः, इति शीघ्रं वद। समुद्रनिकटे उन्निद्रः जागरितः समदः सदोद्धतः वीरः कुम्भः कुम्भकर्णाख्यो राक्षसः तथा सुरेन्द्रस्य भवनम् अमरावती तस्य आकाङ्क्षा तत्र या कृतिर्यत्नः तत्र लङ्कायाः अलङ्कृतौ अलङ्कारकरणे शोभासम्पादने यत् कं सुखं तत् विद्यते यस्य स तथाभूतः, येन लङ्कायास्तथा श्रीः सम्पादिता यथामरावत्यामाकाङ्क्षा विनिवृत्तेति भावः, रावणः स्वयम् अस्ति विद्यते, कुम्भकर्णरावणयोरेकेनैव तौ निहन्तव्याविति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ७६ ॥

अयमिति। अतिशयदुष्टः अयं वानरः हन्यतां हन्यताम् इति कोपात् रावणे अभिहितवति उक्तवति सति बालिसूनुः अङ्गदः धृतौ भुजौ बाहू येन तत् धृतहस्तमित्यर्थः, रक्षोवृन्दं राक्षसनिचयम् उद्धूय निरस्य चरणतलनिपातैः चरणतलप्रहारैः सौधान् हर्म्यान् प्रासादान् चूर्णयित्वा उत्पपात उत्प्लुत्य जगामे-त्यर्थः। मालिनी वृत्तम् ॥ ७७ ॥

अथ रावणमन्त्रिणश्चिन्तयन्ति।

एकेन प्लवगार्भकेण दलिता लङ्कापुरे सुन्दराः
प्रासादा हि सितातपत्रसदृशाः श्रेष्ठाः क्षणादङ्घ्रिणा।
तन्मन्ये दशकन्धरः शिखरिभिः सार्द्धं समुन्मूलितो
बद्धोऽयं सह सेतुना जलधिना साकं समुल्लङ्घितः॥ ७८॥

अथाङ्गदो रामसन्निधिं गत्वा कथयति।

गणयति हितवाक्यं रावणो नैष दर्पात्
तव भुजबलवह्नौ प्राप्तकालः पतङ्गः।
तमथ मुदितसेनावायुभिः प्रेर्य्यमाणं
रघुकुलनृपवीर! क्षुण्णशोषं विधेहि॥ ७९॥

---

एकेनेति। लङ्कापुरे एकेन सहायरहितेन प्लवगार्भकेण वानरशिशुना सुन्दराः रम्याः श्रेष्ठाः उत्कृष्टाः सितातपत्रसदृशाः श्वेतच्छत्रोपमाः, सुधाधवला इति भावः, प्रासादा हि राजभवनानि च, "प्रासादो देवभूभुजाम्"इत्यमरः, क्षणात् क्षणमात्रात् अङ्घ्रिणा चरणप्रहारेणेत्यर्थः, दलिताः क्षुण्णाः, भग्ना इत्यर्थः, तत् तस्मात् अयं दशकन्धरः रावणः शिखरिभिः पर्वतैः, सेतुबन्धनार्थमानीतैरिति भावः, सार्द्धं सह समुन्मूलितः समुत्पाटितः, सेतुना सह बद्धः तथा जलधिना समुद्रेण साकं सह समुल्लङ्घितः इति मन्ये, पर्वतानां समुन्मूलनं सेतोर्बन्धनं जलधेर्लङ्घनञ्च रावणस्य समुन्मूलनं बन्धनं लङ्घनञ्चेति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥ ७८॥

गणयतीति। तव भुजयोर्बलमेव वह्निः तत्र प्राप्तः कालो यस्य तथाभूतः पतङ्गः कीटः एष रावणः दर्पात् अहङ्कारात् हितवाक्यं न गणयति न शृणोतीत्यर्थः, हे रघुकुलनृपवीर!

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीर-श्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
यातोऽङ्कः किल सप्तमोऽप्यतिमहान् दूताङ्गदो नामतः ॥ ८० ॥

---

## अष्टमोऽङ्कः ।

### अथ युद्धोपक्रमः ।

काकुत्स्थः सविशेषमङ्गदमुखादाकर्ण्य लङ्कापते-
र्वृत्तं सम्यगलं कुलञ्च विभवं चक्रे विमर्शं मुहुः ।
श्लाघ्योऽयं दशकन्धरो मम रिपुर्दृष्ट्वा च मद्विक्रमं
वैदेही न समर्पिता यदमुना मुक्ता च नाहङ्कृतिः ॥ १ ॥

---

अथेदानीं मुदिताः हृष्टाः सेना एव वायवः तैः प्रेर्य्यमाणं नुद्यमानं पतङ्गरूपिणं तं रावणं न्युब्जशीर्षं निकृत्तशिरसं विधेहि कुरु । मालिनी वृत्तम् ॥ ७९ ॥

एष इति । दूतः अङ्गदः यस्मिन् सः ॥ ८० ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
महानाटकस्य सप्तमाङ्कव्याख्या समाप्ता ॥ ७ ॥

---

काकुत्स्थेति । काकुत्स्थः रामः अङ्गदस्य मुखात् लङ्कापतेः रावणस्य सविशेषं सविस्तरं वृत्तं चरितं कुलं विभवञ्च सम्यक् अलमतिशयेन, विस्तरेणेत्यर्थः, आकर्ण्य श्रुत्वा मुहुः पुनः पुनः विमर्शं विचारं चक्रे कृतवान्, अयं दशकन्धरः रावणः मम श्लाघ्यः प्रशंसनीयः, रिपुः शत्रुः, यत् यस्मात् अमुना रावणेन मम विक्रमं सेतुबन्धनादिकमिति भावः, दृष्ट्वा च

अथ निजप्रतापप्राचण्डप्रचण्डसमरोत्साहपरिपूर्णस्य लङ्कापतेः

श्रुत्वा दाशरथी सुवेलकटके साटोपमर्द्धा धनु-
ष्टङ्कारैः परिपूरयन्ति ककुभः प्रोञ्छन्ति कौक्षेयकान् ।
अभ्यस्यन्ति तथैव चित्रफलके सोल्लासमन्ये पुनः
वैदेहीकुचपत्रवल्लिरचनावैदग्ध्यमर्द्धाः कराः ॥ २ ॥

ततो लङ्कायां निजराजमन्दिरशिखरमारुह्य रावणः ।

लङ्कायाः कृतवानयं हि विकृतिं दग्धाग्रपुच्छः पुरा
सोऽप्येष प्रतिभाति कालसदृशो नूनं नभस्वत्सुतः ।

---

दृष्टापि वैदेही सीता न समर्पिता, अहङ्कृतिरहङ्कारश्च न मुक्ता न त्यक्तेत्यर्थः, सर्वथा महाप्रभावो मानी चासाविति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥

श्रुत्वेति । सुवेलस्य अद्रेः कटके नितम्बे, "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः, दाशरथी दशरथसुतौ रामलक्ष्मणौ श्रुत्वा, स्थिताविति शेषः, अर्द्धाः कराः हस्ताः, दशेत्यर्थः, साटोपं साड़म्बरं यथा तथा धनुष्टङ्कारैः ककुभः दिशः परिपूरयन्ति व्याप्नुवन्ति तथा कौ पृथिव्यां क्षिप्यन्ते इति कौक्षेयकाः शराः; यद्वा कुक्षौ निबध्यन्ते इति कौक्षेयकाः कुक्षिबद्धाः तलवाराः इत्यर्थः तान् प्रोञ्छन्ति विमलीकुर्वन्ति, तीक्ष्णीकुर्वन्तीति यावत् । तथैव अन्ये अपरे पुनः अर्द्धाः कराः, दशेत्यर्थः, सोल्लासं, साभिलाषं यथा तथा चित्रफलके वैदेह्याः सीतायाः कुचयोः स्तनयोः पत्रवल्लीनां पत्रलतानां रचनायां वैदग्ध्यं नैपुण्यम् अभ्यस्यन्ति शिक्षन्ते । सोल्लासमन्ये पुनरित्यत्र लङ्कापतेस्ते पुनरिति पाठान्तरं सुगमम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ २ ॥

लङ्काया इति । अयं हि अयमेव पुरा पूर्वं दग्धम् अग्रपुच्छं

श्यामः कामसमाकृतिः शरधनुर्धारी स सीताप्रियः
प्रत्येकं रिपुमैक्षतेति निगदन् मञ्चस्थितो रावणः ॥ ३ ॥

अत्र अवसरे अरविन्दविरूपाक्षनामानौ मन्त्रिणौ प्रविश्य जयति जयति देवस्त्रिदशाधिपमौलिमुकुटरत्ननीराजितपादपीठो रावणः।

अर। देव! त्वां प्रति सम्प्रति प्रतिभटस्तोत्रं न कुर्मो वयं
देवाय प्रतिपाद्यते हितमिदं यस्माद्वयं मन्त्रिणः।
सीतारक्षणलक्ष्मणक्षतधनुर्लेखाऽपि नो लङ्घिता
हेलोल्लङ्घितवारिधिः कपिबलैः सार्द्धं स रामो महान् ॥४॥

---

पुच्छाग्रं यस्य तथाभूतः सन् लङ्कायाः विकृतिं दुरवस्थामिति भावः, कृतवान्, नूनं निश्चितं सोऽपि स एव कालसदृशः अन्तकनिभः नभस्वत्सुतः वायुतनयः हनूमान् एषः प्रतिभाति राजते। कोऽप्येष प्रतिभाति बालिसदृशो नूनं तदीयः सुत इति पाठे कोऽपि एष बालिसदृशः अतएव नूनं निश्चितं तदीयः सुतः बालिपुत्रः अङ्गद इत्यर्थः, प्रतिभातीत्यन्वयः। श्यामः कामसमाकृतिः कन्दर्पसदृशावयवः शरधनुर्धारी धृत-धनुःशरः स सीताप्रियः सीतापतिः, रामः अयमिति शेषः, मञ्चस्थितः खट्वारूढो रावणः इति इत्थं निगदन् कथयन् प्रत्येकं रिपुं शत्रुम् ऐक्षत दृष्टवान्। शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

देवेति। हे देव! सम्प्रति वयं त्वां प्रति त्वत्समीपे प्रतिभटानां प्रतिवीराणां स्तोत्रं प्रशंसां न कुर्म्मः, यस्मात् वयं मन्त्रिणः मन्त्रकार्य्ये नियुक्ताः, देवेनेति भावः, तस्मात् देवाय इदं हितं प्रतिपाद्यते उपदिश्यते, हिते नियोज्यः खलु भूतिमिच्छुना सदर्थनाशिन नृपोऽनुजीविनेति भावः।

विरू । राजन् ! मुखसुखा वाचो मधुराः कस्य न प्रियाः ? ।
ताश्च चोदचमाः किन्तु नैता व्यसनसङ्गमे ॥ ५ ॥
प्रिया वा मधुरा वाक् च स्वाम्येष्वेव विराजते ।
श्रीरचणे प्रमाणन्तु वाचः सुनयकर्कशाः ॥ ६ ॥

---

सीताया रचणाय लक्ष्मणेन चता धनुषः लेखापि नो लङ्घिता, भवतीति शेषः, किन्तु स रामः हेलया अवलीलया उल्लङ्घितः वारिधिः समुद्रः येन तथाभूतः, तस्मात् कपिबलैः सार्द्धं स रामो महान्, प्रतिभातीति शेषः। प्रतिभटस्तोत्रं न कुर्मो वयमित्यत्र प्रतिभटप्रोल्लासनं नो मुदे इति, देवायेत्यत्र देवाय-मिति, सीतारचणलक्ष्मणचतेत्यत्र सीतारचणदचलक्ष्मणेति च पाठान्तरे प्रतिभटानां विपचाणां प्रोल्लासनं प्रकर्षख्यापनं मुदे आनन्दाय नेत्यर्थः, अन्यत् सुगमम्। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

राजन्निति। हे राजन्! मुखसुखा सुखस्य सुखाः सुखोच्चार्य्या इति भावः, मधुरा मनोहारिण्यः वाचः वाक्यानि कस्य जनस्य न प्रियाः ? सर्वस्यैव प्रीतिकर्य्य इत्यर्थः, ताश्च वाचः चोदम् अलं चमन्ते सहन्ते इति चोदचमाः स्वल्पसहा इति यावत्, परिहासप्रयोज्या इति भावः, एताः किन्तु व्यसनागमे विपत्पाते न, उपयोगिन्य इति शेषः। ताश्चेत्यत्र तवेति पाठे चोदचमा दुःखसहाः, दुःखावहा इत्यर्थः, "चोदः सङ्कटचूर्णयोः" इति हेमचन्द्रः। अनुष्टुप् वृत्तम् ॥ ५ ॥

प्रियेति। प्रिया वा मधुरा वा वाक् स्वाम्येषु आधिपत्येषु लब्धसम्पत्तिसम्भोगेष्विति यावत्, निर्बाधेष्विति भावः, विराजते शोभते, सुनयेन शोभनया नीत्या कर्कशाः कटवः, अप्रिया

विभवे भोजने दाने तिष्ठन्ति प्रियवादिनः।
विपत्तावागतायान्तु दृश्यन्ते खलु सज्जनाः ॥ ७ ॥
अग्रे प्रस्तुतनाशानां मूकता परमो गुणः।
तथापि प्रभुभक्तानां मौखर्य्यादेवमुच्यते ॥ ८ ॥
यैरेव स्तुतिभिः स्वामी प्राप्यते व्यसनावटम्।
पश्चान्मूकत्वमापन्नैरुद्धर्त्तुं नैव शक्यते ॥ ९॥

---

इति भावः, वाचस्तु वाक्यानि तु श्रीरक्षणे श्रियाः रक्षणे प्रमाणं हेतुरित्यर्थः। स्वाम्येष्वेवेत्यत्र हर्म्येष्वेवेति पाठान्तरम्। अनुष्टुप् वृत्तम् ॥ ६ ॥

विभवे इति। विभवे अभ्युदये, भोजने दाने च प्रियवादिनः, बहव इति शेषः, तिष्ठन्ति स्थितिं कुर्वन्ति। विपत्तौ व्यसने आगतायान्तु उपस्थितायान्तु, सज्जनाः खलु साधव एव दृश्यन्ते, न त्वन्ये इति शेषः। सज्जना इत्यत्र साधव इति पाठान्तरम्। अनुष्टुप् वृत्तम् ॥ ७ ॥

अग्रे इति। प्रस्तुतः प्रवृत्तः, उपस्थित इति यावत्, नाशो येषां तथाभूतानां विपन्नानामित्यर्थः, अग्रे समक्षं मूकता वर्णानुच्चारको मूकः तस्य भावः तूष्णीम्भाव इत्यर्थः, परमो महान् गुणः धर्म्मः, तत्र कथायां तस्याप्रियत्वे तेन सह अकारणवैरं स्यादिति भावः। तथापि इत्थं गतेऽपि प्रभुभक्तानां स्वामिभक्तनराणां मौखर्य्यात् वाचालत्वात् एवम् उच्यते इत्थं कथ्यते। अनुष्टुप् वृत्तम् ॥ ८ ॥

यैरेवेति। यैरेव जनैः स्वामी प्रभुः स्तुतिभिः प्रशंसावादैः, प्रियोक्तिभिरित्यर्थः, व्यसनावटं विपद्रन्ध्रं, व्यसनावटमित्यत्र व्यसनाटवीति पाठान्तरम्; प्राप्यते, नीयते, तैरेव मूकत्व-

नद्यश्च खलमैत्री च लक्ष्मीश्च नयविद्विषाम् ।
सुकुमाराश्च वनिता राजन्नचिरयौवनाः ॥ १० ॥

तेन च । यावद्दाशरथेर्न पश्यसि मुखं, यावन्न पाथोनिधिं
शुष्कं, यावदिमां न पाकवशगां लङ्कां निरस्तालकां
यावन्नेव निजानुजस्य चरितं यातं कुलाङ्गारतां
तावद्रावण ! लोकनाथदयिता सीता स्वयं दीयताम् ॥११॥

---

मापन्नैः तूष्णीं स्थितैः पश्चात् उद्धर्त्तुं विपदस्त्रातुमित्यर्थः, नैव शक्यते, स्वामीति शेषः । शक्यते कथमिति पाठे कथं केन प्रकारेण शक्यते ? नैव शक्यते इत्यर्थः । अनुष्टुप् वृत्तम् ॥ ९ ॥

नद्य इति । हे राजन् ! नद्यः सरितश्च खलमैत्री च दुर्जनमित्रता च नयविद्विषां नीतिविरोधिनां लक्ष्मीश्च सुकुमाराः सुकोमलाः वनिताश्च अचिरयौवनाः न चिरं यौवनसुखं लभन्ते इत्यर्थः, न दीर्घकालं तिष्ठन्तीति भावः । अत्र प्रस्तुताया नयविमुखलक्ष्म्याः अप्रस्तुतानाञ्च नद्यादीनामेकधर्म्मसम्बन्धात् तुल्ययोगितालङ्कारः, "पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥" इति लक्षणात् । अनुष्टुप् वृत्तम् ॥ १० ॥

यावदिति । यावत् दाशरथेः रामस्य, रणप्रवृत्तस्येति भावः, मुखं न, यावत् पाथोनिधिं सागरं शुष्कं, दाशरथेः शराग्निनेति भावः, न, शुष्कमित्यत्र बद्धमिति पाठान्तरं, यावत् इमां निरस्तालकाम् अलका कुबेरनगरी सा निरस्ता न्यक्कृता यया तादृशीम् अलकाधिकसमृद्धिमित्यर्थः, लङ्कां पाको दशा परिणामः, दुरवस्थेति भावः, तस्य वशगां वशवर्त्तिनीं न, पावकवशामिति पाठे अग्निदग्धामित्यर्थः, यावत् निजानुजस्य

रावणो धैर्य्यमवलम्ब्य ।

मतिर्विपश्चितां मन्त्रो रतिर्मन्त्रो विलासिनाम् ।
पराक्रमैकसाराणामस्माकमसिवल्लरी ॥ १२ ॥
नीतिशास्त्रमिदं श्रुत्वा कुम्भकर्णः क्वचिद् बली ।
हन्ति चेन्मारुतिं युद्धे प्रथमं प्रेष्यतामयम् ॥ १३ ॥

---

स्वभ्रातुः विभीषणस्य चरितं विक्रममिति भावः, निजानुजं सुचरितमिति पाठान्तरं सुगमम् ; कुलाङ्गारतां कुलमालिन्य-करतां यातं गतं न पश्यसि, रावणनिधनेन विभीषणस्य कुला-ङ्गारत्वमिति भावः । हे रावण ! तावत् लोकनाथस्य जगत्-प्रभोः रामस्य दयिता प्रिया सीता स्वयं दीयताम् । लोकनाथ-दयिता सीता स्वयं दीयतामित्यत्र लोकपाल ! तरसा सीतां प्रयच्छानघामिति पाठे हे लोकपाल ! तरसा शीघ्रम् अनघाम् अपापां सीतां प्रयच्छेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

मतिरिति । मतिः बुद्धिः विपश्चितां विदुषां मन्त्रः इष्ट-साधनहेतुरिति भावः, रतिः सुरतं विलासिनां कामिनां मन्त्रः, पराक्रमः एकः मुख्यः सारो धनं येषां तथाभूतानामस्माकम् असिवल्लरी तलवारमञ्जरी मन्त्रः इष्टसाधनहेतुः । वीराः परा-क्रममेव सुखसाधनं मन्यन्ते इति भावः । अस्माकमित्यत्र मानिना-मिति पाठः । अनुष्टुप् वृत्तम् ॥ १२ ॥

नीतिशास्त्रमिति । इदं नीतिशास्त्रं मदुक्तमिति भावः, श्रुत्वा बली बलवान् कुम्भकर्णः क्वचित् युद्धे मारुतिं हनूमन्तं हन्ति चेत् नाशयति यदि, तदैव मम जय इति भावः, तस्मात् अयं कुम्भकर्णः प्रथमं प्रेष्यतां नियुज्यताम् । मारुतिमित्यत्र नामत

म—३०

राज्ञोऽभिप्रायं ज्ञात्वाऽरविन्दविरूपाक्षौ ।

नीतिशास्त्रविदो नीतिं पठन्ति नृपतेः पुरः ।

केवलं, युवराजादिपुरतो न कदाचन ॥ १४ ॥

भवांस्तु शुद्धाधिकारो न दुरधिकारो तदात्मनि वैरूप्य-शङ्काङ्कुरेणालमिति । (क) उक्तञ्च ।

न सर्पस्य मुखे रक्तं न दष्टस्य कलेवरे ।

न प्रजासु न भूपाले धनं दुरधिकारिणि ॥ १५ ॥

---

इति पाठे नामतः सम्भावनायां हन्ति, शत्रूनिति शेषः । अनुष्टुप् वृत्तम् ॥ २३ ॥

नीतीति । नीतिशास्त्रविदः नीतिशास्त्रज्ञाः केवलं नृपतेः पुरः अग्रतः नीतिं कार्य्याकार्य्ययोर्गतिं, धर्ममिति पाठान्तरं, पठन्ति कीर्त्तयन्ति, कदाचन युवराजादीनाम् अज्ञतमतीनामिति भावः, पुरतः अग्रतः न, ते हि अपरिणतबुद्धित्वात् नीतिशास्त्रार्थं नावधारयन्तीति भावः । अनुष्टुप् वृत्तम् ॥ १४ ॥

(क) शुद्धाधिकारी शुद्धः विशुद्धमतिरित्यर्थः, अधिकारी नीतिशास्त्रज्ञानक्षमः । दुरधिकारी अनधिकारी, नीतिशास्त्रार्थपर्य्यालोचने इति भावः । तत् तस्मात् आत्मनि स्वस्मिन् वैरूप्यशङ्का विरुद्धभावाशङ्का, अनीतिज्ञ इति अस्माकमाशयावबोध इति भावः, तस्या अङ्कुरेण प्ररोहेण अलं तथा शङ्कालेशोऽपि न कार्य्य इत्यर्थः ।

नेति । रक्तं सर्पस्य मुखे न, दष्टस्य दशनेनाहतस्येत्यर्थः, कलेवरे शरीरे च न, तिष्ठतीति शेषः, दंशनकाले सर्पः दष्टस्य जनस्य रक्तं नाकर्षति अथच तत् कलेवरं रक्तशून्यं स्यात् तत्तु केवलं विषेण जलीक्रियते इति भावः, तथा धनं प्रजासु

रावणः। एतौ छलोक्त्या मामेव दुरधिकारिणं व्याहरतः, तदरिभयमपि भविष्यतीति लक्ष्यते। (ख) तथोक्तञ्च।

नियुक्तहस्तार्पितराज्यभारा-
स्तिष्ठन्ति ये सौधविहारसाराः।
विड़ालवृन्दार्पितदुग्धपूराः
स्वपन्ति ते मूढ़धियः क्षितीन्द्राः॥ १६॥

---

न, दुरधिकारिणि अयोग्ये इत्यर्थः, भूपाले राजनि च न, तिष्ठतीति शेषः, प्रजानां राज्ञश्च समृद्धिहेतुः केवलं नीतिशास्त्रं, तद्वैमुख्ये सर्वं नश्यतीति भावः। अनुष्टुप् वृत्तम्॥ १५॥

(ख) छलोक्त्या व्याजोक्त्या। अरिभयं शत्रुभयम्। लक्ष्यते अनुमीयते, आस्थामिति शेषः।

नियुक्तेति। ये क्षितीन्द्राः राजानः नियुक्तानाम् अमात्यादीनां हस्तेषु अर्पितः निहितः राज्यभारः यैः तथोक्ताः स्वयं सौधेषु प्रासादेषु विहारः क्रीड़नमेव सारः सुखसाधनव्यापारः येषां तथाभूताः, ते मूढ़धियः अज्ञतप्रज्ञाः विड़ालवृन्देभ्यः विड़ालवृन्देषु वा अर्पितः दुग्धपूरः क्षीरसमूहः यैः तथाविधाः सन्तः स्वपन्ति निद्रान्ति। यथा गृहस्थेन दुग्धपोषिता विड़ालाः बुभुक्षाविरहात् गृहस्थितमूषकादिविनाशाय न यतन्ते तथा राज्ञा राजकार्य्यविमुखेन अर्पितभारा अमात्याः यथेष्टभोग्यवस्तुभिः स्वोदरं पूरयित्वा बाह्यशत्रुनिरासणे स्वविनाशं शङ्कमानास्तत्र उदासते, तेन च शत्रवो रन्ध्रान्वेषिणस्तं राजानं समुन्मूलयन्ति गृहस्थवस्तुजातं मूषका इवेति भावः। उपजाति वृत्तम्॥ १६॥

राजानः कदाचिद्वैरूप्येणापि निगूढा भवन्ति। तत्रोदाहरणं हरिणाङ्कशेखरः । (ग)

जीर्णेऽप्युत्कटकालकूटगरले, प्लुष्टे तथा मन्मथे,
नीते भासुरभालनेत्रतनुतां कल्पान्तदावानले ।
यः शक्त्या समलङ्कृतोऽपि शशिनं शैलात्मजां स्वर्धुनीं
धत्ते कौतुकराजनीतिनिपुणः पायात् स वः शङ्करः ॥ १७ ॥

शिवस्य नीतिवैपरीत्यमालोक्य यथा भृङ्गी, तथा ममापि अरविन्दविरूपाक्षौ ; तद्यथा ।

---

(ग) वैरूप्येण विरुद्धभावेन । निगूढाः गूढाशया इत्यर्थः । हरिणाङ्कशेखरः शिवः ।

जीर्णे इति । उत्कटं दारुणं कालकूटमेव गरलं विषं तस्मिन्, उत्कटकालकूटकवले इति पाठे उत्कटस्य कालकूटस्य कवलः ग्रासः तस्मिन्नित्यर्थः, जीर्णे, मन्मथे कामे प्लुष्टे दग्धे, तथा कल्पान्तदावानले प्रलयदाववह्नौ भासुरस्य उज्ज्वलस्य भालनेत्रस्य ललाटनयनस्य तनुताम् अवयवत्वं नीते प्रापितेऽपि यः शक्त्या ऐश्वर्य्या मायया समलङ्कृतोऽपि निष्प्रयोजनोऽपीति भावः, शशिनं चन्द्रं कालकूटतापहरमिति भावः, शैलात्मजां गौरीं, कामनाशिनीमिति भावः, स्वर्धुनीं गङ्गां, भालाग्निसन्तापहारिणीमिति भावः, धत्ते स कौतुकराजनीतिनिपुणः कुतूहलमेव राजनीतिः राजग्राह्यनयः तत्र निपुणः पटुः, राजनीतिः सन्धिविग्रहादिरूपकार्य्याणां यथायथव्यवहाररूपा मानवानामुपयोगिनी न त्वीश्वराणां तेषान्तु तत्पालनं कौतुकार्थमिति भावः, शङ्करः शिवः वः युष्मान् पायात् रक्षतु । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

दिग्वासो यदि तत् किमस्य धनुषा ? शस्त्रञ्च किं भस्मना ?
भस्माथास्य किमङ्गना ? यदि च सा कामं ततो द्वेष्टि किम् ?।
इत्यन्योन्यविरुद्धकर्म्मणि रतं पश्यन्निजस्वामिनं
भृङ्गी सान्द्रशिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥ १८ ॥

ततः प्रविशति मन्दोदरी।

मन्दोदरी रावणेन सह निभृतं मन्त्रयितुम् इच्छति, अतो मन्त्रिणौ निष्क्रान्तौ।

मन्दोदरी। स्वगतम्।

---

दिग्वास इति। दिगेव वासः वस्त्रं, नग्नत्वमिति भावः, यदि, तत् तदा अस्य शङ्करस्य धनुषा किम् ? प्रयोजनविरह इति भावः। शस्त्रञ्च शस्त्रधारणञ्च यदि, तदा भस्मना विभूतिविलेपनेन किम् ? अथ यदि भस्म, तदा अस्य अङ्गना कामिनी किम् ? कामिन्या किं प्रयोजनमित्यर्थः, यदि च सा अङ्गना, अस्तीति शेषः, ततस्तदा कामं मदनं किं कथं द्वेष्टि हिनस्ति ? इतीत्थम् अन्योन्यविरुद्धं परस्परविरोधि यत् कर्म्म दिग्वसनत्वधनुर्धरत्वादि तस्मिन् रतं निजस्वामिनं पश्यन् भृङ्गी शिवानुचरविशेषः, वपुः शरीरं सान्द्राभिः घनाभिः शिराभिः अवनद्धं जटिलं परुषं कठिनं, मांसराहित्यादिति भावः, अस्थिशेषं कङ्कालावशिष्टं धत्ते धारयति, किमपि नावधारयतीति भावः। यथा शिवविषयकचिन्तया भृङ्गीकार्श्यं तथा ममापि भावमनाकलय्य एतयोरीदृशनीतिरुद्भावनमिति तात्पर्य्यम्। अत्र विरूपसङ्घटनात् विषमालङ्कारः, "विरूपयोः सङ्घटना या च तद्‌ विषमं मतम्" इति लक्षणात्। शार्दूलविक्रीड़ितं वृत्तम् ॥ १८ ॥

कैलासशैलोद्धरणप्रवीणो
वीरः कुबेरानुज एक एषः ।
तथापि रामो जितवालिवीर्य्यः
शङ्कास्पदं सम्प्रति राक्षसानाम् ॥ १९ ॥
विभीषणो वैरिबलं प्रविष्टो,
निद्रावशः सीदति कुम्भकर्णः ।
राजाऽभिमानी पतितः कलङ्के,
लङ्के ! निमग्नाऽसि गभीरपङ्के ॥ २० ॥

---

कैलासेति । एषः कुबेरस्य दिक्पालविशेषस्य अनुजः कनीयान् कैलासस्य शैलस्य पर्वतस्य उद्धरणे उन्मूलने प्रवीणः पटुः, कृतकैलासोद्धरण इति भावः, अतएव एकः मुख्यः, अद्वितीय इत्यर्थः, "एके मुख्यान्यकेवलाः" इत्यमरः, वीरः, तथापि अस्य अद्वितीयवीरत्वेऽपि सम्प्रति जितं वालिनो वीर्य्यं येन तथाभूतः रामः राक्षसानां शङ्कास्पदं भयस्थानम् । अत्र शङ्काया हेतुं विनापि तदुत्पत्तेर्विभावनालङ्कारः, "विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते" इति लक्षणात् । शङ्काया अभावस्य हेतौ सत्यपि तदभावरूपफलाभावात् विशेषोक्तिश्च, "सति हेतौ फलाभावो विशेषोक्तिर्निगद्यते" इति लक्षणात् तदनयोः सन्देहसङ्करः । उपजाति वृत्तम् ॥ १९ ॥

विभीषण इति । विभीषणः वैरिणः शत्रोः रामस्य बलं प्रविष्टः राममाश्रित इत्यर्थः । कुम्भकर्णः निद्रावशः निद्राया अधीनः सन् सीदति अवसादं गच्छति, अकर्मण्यः भवतीति भावः । राजा अभिमानी मानोन्नतः, नैव रामं शरणं यास्यतीति भावः, कलङ्के विपदि पतितः, अतः हे लङ्के ! त्वं गभीर-

रामोऽयं रविवंशजो दशरथक्ष्मापालचूडामणेः
पुत्रः सर्वमहीश्वरो नरगणैः संपूजितो रक्षणात् ।
सीताहारिकृतान्तको निजभुजप्रौढ़प्रतापानलः
त्रैलोक्यस्य हितार्थसाधनविधौ जानासि नैवं कथम् ? ॥ २१ ॥

दृष्ट्वा राघवमेव राक्षसवनस्वच्छन्ददावानलं
जानक्यां निजवल्लभस्य परमं प्रेमाणमालोक्य च ।
काङ्क्षन्ती मुहुरात्मपक्षविजयं भङ्गञ्च मुग्धा मुहुः
धावन्ती मुहुरन्तरालपतिता मन्दोदरी सुन्दरी ॥ २२ ॥

---

पङ्के सान्द्रे कर्दमे, यत उत्थातुं न शक्यते इति भावः, निमग्नासि पतितासि । उपजाति वृत्तम् ॥ २० ॥

राम इति । अयं रामः रवेः सूर्य्यस्य वंशजः कुलजः दशरथ एव क्ष्मापालानां नृपाणां चूडामणिः तस्मात् तस्य पुत्रः, सर्वस्या मह्याः पृथिव्या ईश्वरः प्रभुः, नरगणैः मानववृन्दैः रक्षणात् सुष्ठु पालनात् संपूजितः प्रशंसित इत्यर्थः, सीताहारिणः रावणस्य कृतान्त एव कृतान्तकः शमन इत्यर्थः, त्रैलोक्यस्य त्रिभुवनस्य हितार्थानां साधनविधौ सम्पादनव्यापारे निजभुजाभ्यां स्वबाहुभ्यां प्रौढ़ः प्रकर्षेण धृतः प्रतापानलः येन तथोक्तः, अतः एवम् इत्थम्भूतम्, एनमिति पाठान्तरं, कथं न जानासि ? । शार्दूलविक्रीड़ितं वृत्तम् ॥ २१ ॥

दृष्ट्वेति । सुन्दरी मन्दोदरी राघवं रामं राक्षसवनेषु स्वच्छन्दः स्वेच्छाचारी, स्वेच्छाप्रवृत्त इत्यर्थः, दावानलः तं दृष्ट्वा निजवल्लभस्य रावणस्य जानक्यां परमम् उत्कटं, दुर्निवारमिति भावः, प्रेमाणम् अनुरागम् आलोक्य च मुहुः पुनः पुनः आत्मपक्षाणां राक्षसानां विजयं तथा भङ्गं पराजयञ्च, विपक्षादिति

वन्दारुवृन्दारकवृन्दवन्दिमन्दारमालामकरन्दलेशैः ।
मन्दोदरीयं चरणारविन्दरेणूत्करान् कर्करतामनैषीत् ॥२३॥

प्रकाशम् । त्वं बाहूद्धृतचन्द्रशेखरगिरिर्भ्राता जगद्भक्षकः
पुत्त्रः शत्रुजयी रिपुश्च स महान्नूनं बली बालिजित् ।
तद्राजन् ! अबला बलादपहृता देयाऽस्य सा जानकी
लङ्कायां रहसीत्युवाच वचनं मन्दोदरी मन्दिरे ॥२४॥

---

शेषः, सीतायां रावणस्य अनुरागं दृष्ट्वा रावणपक्षीयाणां राक्षसानां पराभवे मन्दोदर्य्या अभिलाषः इति भावः, काङ्क्षन्ती अभिलषन्ती मुग्धा मोहवशं गता मुहुर्मुहुः धावन्ती अन्तराले रावणचरणान्तिके इति भावः, पतिता अपतत् । शार्दूलविक्रीडितं वृत्तम् ॥२२॥

वन्दाविति । इयं पतिता मन्दोदरी चरणारविन्दरेणूनाम् उत्करान् समूहान् भर्त्तुः पादपद्मरजांसि वन्दारवः स्तुतिपाठशीला ये वृन्दारकाः देवाः तेषां वृन्दस्य या वन्द्यः हठहृता नार्य्यः तासां या मन्दारमालाः देवतरुपुष्पमालाः, ताभ्यः समाकृष्य स्वयं मस्तकेषु धृता इति भावः, तासां मकरन्दानां मधूनां लेशैः विन्दुभिः, भुवि पतितैः इति भावः, कर्करताम् अनैषीत् प्रापयामास, चरणरेणुषु मस्तकस्थितपुष्पमालामकरन्दपातेन तेषां शुष्कतायां कर्करत्वं भवतीति भावः । इन्द्रवज्रा वृत्तम् ॥ २३ ॥

त्वमिति । हे राजन् ! त्वं बाहुभिः भुजैः उद्धृत उत्तोलितः चन्द्रशेखरस्य गिरिः कैलासो येन तथोक्तः, भ्राता, तवेति शेषः, कुम्भकर्ण इत्यर्थः, जगद्भक्षकः जगद्भक्षणक्षम इत्यर्थः, पुत्रः मेघनादः शत्रुजयी रिपुञ्जयः, शक्रजयीति वा पाठः । स रिपुः शत्रुश्च नूनं निश्चितं बली बलवान् यतः बालिजित् बालिनं जितवानित्यर्थः । तत् तस्मात् बलात् अपहृता

एकः सुग्रीवभृत्यः कपिरिदमखिलं पत्तनञ्चैव दग्ध्वा
यातस्तूर्णं तदानीं दशमुख ! भवतां किं कृतं वीरवर्गैः ? ।
संप्राप्तो राघवोऽसौ सकलकपिबलैः सार्द्धमुल्लङ्घ्य चाब्धिं
सीतां तां मुञ्च मुञ्चेत्यनिशमकथयत् प्रेयसी रावणस्य ॥ २५ ॥

रावणो निजभुजाडम्बरं नाटयन् ।

किन्ते भीरु ! भिया निशाचरपतेर्नासौ रिपुर्मे महान्
यस्याग्रे समरोद्यतस्य न सुरास्तिष्ठन्ति शक्रादयः ।

---

अबला सा जानकी अस्य शत्रोः रामस्य देया दातव्या, मन्दोदरी लङ्कायां मन्दिरे गृहाभ्यन्तरे रहसि निर्जने इति वचनम् उवाच । शार्दूलविक्रीड़ितं वृत्तम् ॥ २४ ॥

एक इति । रावणस्य प्रेयसी मन्दोदरी इति अनिशं पुनः पुनः अकथयत् अब्रवीत्, हे दशमुख ! एकः एक एव सुग्रीवस्य भृत्यः किङ्करः कपिर्हनूमान् इदम् अखिलं समग्रं पत्तनं नगरं चैव दग्ध्वा तूर्णं शीघ्रं यातः प्रतिनिवृत्तः, तदानीं तस्मिन् काले भवतां वीरवर्गैः नगरवासिभिः किं कृतम् ? न किमपि कर्त्तुं शक्तमिति यावत् । असौ राघवः रामः सकलकपिबलैः सार्द्धम् अब्धिं सागरम् उल्लङ्घ्य च सम्प्राप्तः समायातः, अतः तां सीतां मुञ्च मुञ्च त्यज त्यज । वीरवर्गैरित्यत्र पौरवर्गैरिति पाठान्तरम् । सम्प्राप्तो राघवोऽसावित्यत्र प्राप्तोऽसौ पत्तनान्तमिति, सकलकपिबलैर्वाब्धिमुल्लङ्घ्य योद्धुमिति च पाठान्तरम् । स्रग्धरा वृत्तम् ॥ २५ ॥

किमिति । हे भीरु ! भयशीले ! ते तव भिया भयेन किम् ? असौ रिपुः शत्रुः रामः निशाचरपतेः मे मम, अग्रे इति शेषः, महान् न प्रबलो न, समरोद्यतस्य संग्रामप्रवृत्तस्य

मह्योर्दण्डकमण्डलोद्यतधनुःक्षिप्ताः क्षणान्मार्गणाः
प्राणानस्य तपस्विनः सति रणे नेष्यन्ति पश्याधुना ॥ २६ ॥

ततः स्वमन्दिरं प्रविश्य रावणः। भो भो मायाविनो राक्षसाः! अद्य खलु प्रपञ्चरचनाभिः जानकीमृदुसुरभिसुवर्ण-पीतपीनोन्नत-कुचकलस-शोभितोरःस्थल-खेलन्मनाः तन्मधुराधर-पल्लवं पश्यामीति सज्जीभवध्वम्। (घ)

अनुचराः। यदादिशति महाराज इति मायां नाटयन्ति।

अथ दशवदनोऽयं रामसौमित्रिमाया-
विरचितशिरसी ते तत्कृपाणावदोर्णे।

---

यस्य ममाग्रे शक्रादयः इन्द्रप्रभृतयः सुराः न तिष्ठन्ति न स्थातुं शक्नुवन्ति, रणे सति प्रवर्त्तमाने मम दोर्दण्डकमण्डलेन भुज-दण्डमण्डलेन उद्यतम् उद्धृतं यत् धनुः, उद्धृतेति वा पाठः, तस्मात् क्षिप्ताः प्रेषिताः मार्गणाः शराः अस्य तपस्विनः रामस्य प्राणान् क्षणात् नेष्यन्ति हरिष्यन्ति अधुना साम्प्रतं पश्य अव-लोकय। शार्दूलविक्रीड़ितं वृत्तम् ॥ २६ ॥

(घ) प्रपञ्चेति। प्रपञ्चरचनाभिः विशेषकल्पनाभिरित्यर्थः, सज्जीभवध्वमिति क्रिययान्वेति। जानकीति। जानक्याः सीताया मृदू कोमलौ सुरभी सौरभवन्तौ सुवर्णपीतौ हेम-पीतवर्णौ पीनोन्नतौ यौ कुचकलसौ स्तनकुम्भौ ताभ्यां शोभितं यत् उरःस्थलं वक्षःस्थलं तस्मिन् खेलत् मनो यस्य तथाभूतः सन् तस्या मधुराधर एव पल्लवः तम्। अहमिदानीं माया-प्रपञ्च-रचनाभिर्जानकी–मृदुसुरभि–सुवर्णस्फीतदोर्मूल-लालित्य-विराजमान-पीनोन्नतकुचकलसोपशोभितोरःस्थले खेलमान-स्तन्मधुराधरं पास्यामीति पाठान्तरम्।

गलदविरलरक्ते प्रेतपर्य्यस्तनेत्रे
जनकदुहितुरग्रे स्थापयामास पापः ॥ २७ ॥

तद् दृष्ट्वा जानकी सवाष्पा भवति ।

अहह ! जनकपुत्री फुल्लराजीवनेत्रा
नयनसलिलधारावर्षनिर्भिन्नहारा ।
रमणमरणभीता मृत्युना किं न नीता
हृदयदहनजालं सन्दहेद्वा विशालम् ? ॥ २८ ॥

---

अथेति । अथानन्तरम् अयं पापः दुराचारः दशवदनः रावणः ते रामसौमित्र्योः रामलक्ष्मणयोः सम्बन्धिनी मायया विरचिते शिरसो तस्य रावणस्य कृपाणेन असिना अवदीर्णे निकृत्ते गलत् अविरलम् अजस्रं रक्तं याभ्यां तथाभूते प्रेतवत् मृतवत् पर्य्यस्ते विकृतिं गते इति भावः, नेत्रे ययोः तथाविधे जनकदुहितुः सीतायाः अग्रे समक्षं स्थापयामास । दशवदनोऽयमित्यत्र रजनिचरेशः इति, ते तत्कृपाणावदीर्णे इत्यत्र तद्रूपलावण्यपूर्णे इति च पाठान्तरं सुगमम् । मालिनी वृत्तम्॥ २७ ॥

अहहेति । अहह ! खेदे, फुल्लराजीवनेत्रा विकसितपङ्कजनयना नयनसलिलधाराणां वर्षैः निर्भिन्नः अविशेष इत्यर्थः, हारो यस्याः तथाभूता रमणस्य मरणाद् भीता जनकपुत्री सीता विशालम् अतिप्रबलं हृदयदहनजालं हृदयाग्निनिचयः सन्दहेत् भस्मीकुर्य्यात् वा यदीत्यर्थः, इति भयेनेति भावः, मृत्युना यमेन न नीता किम् ? तथा प्रज्वलितहृदयानला जानकी जाता यथा यमोऽपि तद्दहनमाशङ्कमानस्तां न नयति स्मेति भावः । मालिनी वृत्तम् ॥ २८ ॥

रामशिरः समधिकृत्य हा जगदीश! हा जगदेकवीर! तत् किं स्मरसि?।

अधरमधु मदीयं कामकेलीषु पीत्वा-
ऽमृतमिति यदवादीस्तीरवानीरकुञ्जे।
किममृतपरिपूर्णः शीर्णमप्येकमर्क-
न्तम इव न हि शत्रुं नाथ! मथ्नासि घोरम्?॥ २९॥
स्फुरति मधुरवाणी किं न वक्त्रारविन्दे
नयनकमलयोस्ते नो मदङ्गे विलासः।
अमरपुरवधूनां वल्लभोऽद्यासि भूप!
व्रजति परमहंसं सेयमालिङ्गनैस्ते॥ ३०॥

---

अधरेति। हे नाथ! तीरवानीरकुञ्जे नदीतटवर्त्तिनि वेतसलतापिहितप्रदेशे कामकेलीषु सुरतविहारेषु मदीयम् अधरमधु पीत्वा अमृतं, पीतमिति शेषः, इति अवादीः उक्तवानसि यत् ततः अमृतपरिपूर्णः अमृतपानेन परितृप्तस्त्वम् अमरभावं प्राप्त इति भावः, शीर्णमपि अङ्गच्छेदेन क्षीणमपि एकम् एकमात्रम्, असहायमित्यर्थः, तमः राहुः, "तमस्तु राहुः स्वर्भानुः" इत्यमरः, अर्कमिव सूर्य्यमिव घोरं शत्रुं रावणं किं कथं न हि नैव मथ्नासि? नैव ग्रससि? न विनाशयसीति यावत्। मालिनी वृत्तम्॥ २९॥

स्फुरतीति। ते तव वक्त्रारविन्दे मुखपङ्कजे मधुरवाणी न, नयनकमलयोः नेत्रोत्पलयोः मदङ्गे ममाङ्गोपरि विलासः व्यापारः नो स्फुरति न प्रसरति, हे भूप! अद्य अमरपुरवधूनां सुरसुन्दरीणां वल्लभः असि, सा इयं तव प्रिया ते तव आलिङ्गनैः त्वामालिङ्गेरित्यर्थः, परमहंसं परात्मानं, त्वामिति

इति रामशिरः समालिङ्ग्य प्राणत्यागं नाटयति। आकाशे।

न खलु न खलु सीते! रामभूपालमौलिः
समरशिरसि वध्यो न प्रियस्ते कदाचित्।
स्पृश कथमपि मातः! मा निशाचारिणं त्वं
शिव! शिव! शिवभक्तस्येष मायावतारः॥ २१॥

सीता समाश्वसिति। दशाननश्च अपसर्पति।

सीता। अयि सरमे! अद्भुतमेतत्। (क)

सरमा। आकर्णयाकर्णविशालनेत्रे!
रामागमादार्त्तनिशाचराणाम्।

---

शेषः, व्रजति गच्छति। भूपेत्यत्र नूनमिति, व्रजति परमहंसः सेयमालिङ्गनैस्ते इत्यत्र व्रजतु परमहंसो मे त्वदालिङ्गनेनेति, स्फुरतीत्यत्राहहेति च पाठे नूनं निश्चितं, त्वदालिङ्गनेन त्वामालिङ्ग्य मे मम परमहंसः जीवात्मा व्रजतु गच्छतु इत्यर्थः। मालिनी वृत्तम्॥ २०॥

न खल्विति। हे सीते! न खलु न खलु नैव, नैव, प्राणत्यागः कर्त्तव्य इति शेषः, ते तव प्रियः रामभूपालमौलिः रामराजशिरः समरशिरसि रणमुखे कदाचित् न वध्यः न छेत्तुं शक्य इत्यर्थः। हे मातः! त्वं कथमपि निशाचारिणं राक्षसं रावणं मा स्पृश, शिव शिवेति खेदे, शिवभक्तस्य रावणस्य एषः मायावतारः इन्द्रजालाविष्करणम्। शिव शिव शिवभक्तेत्यत्र हर हर हरभक्तेति पाठान्तरम्। मालिनी वृत्तम्॥ २१॥

(क) सरमे इति। सरमा विभीषणपत्नी तत्सम्बुद्धौ।

आकर्णयेति। हे आकर्णविशालनेत्रे! आकर्णमायताक्षि

कोलाहलं काहलमर्दलानां
ह्रेषारवं सज्जतुरङ्गमाणाम् ॥ ३२ ॥
विरम विरम शोकात् कोपवानद्य रामः ।
सतनयपशुबन्धुं रावणं मर्दयित्वा ।
वलभिदुपलनीलः कोमलः कोमलाङ्गि !
त्वदधरमधुपानं स्वीकरिष्यत्यजस्रम् ॥ ३३ ॥

रावणः स्वगतम् । पुनरपि मायाधारिणा गन्तव्यम् ।
इति तथा करोति ।

भेरीनिस्वानशङ्खध्वनिगजतुरगस्यन्दनस्फीतनादैः
सानन्दं राक्षसेन्द्रः कटकभटभुजास्फालकोलाहलेन ।

---

रामस्य आगमात्, लङ्कायामिति शेषः, आर्त्ताः त्रस्ता ये निशाचराः राक्षसाः तेषां काहलमर्दलानां रणवाद्यभेदानां कोलाहलं नादं तथा सज्जानां रणसज्जया भूषितानां तुरङ्गमाणाम् अश्वानां ह्रेषारवम् आकर्णय शृणु, यदि रामशिरः सत्यमेतत् तदा कथं पुनः समरोद्योग इति भावः । इन्द्रवज्रा वृत्तम् ॥३२॥

विरमेति । हे कोमलाङ्गि ! शोकात् विरम विरम, अद्य कोपवान् सकोपः वलभिदुपलनीलः इन्द्रनीलश्यामलः कोमलः रामः सतनयपशुबन्धुं तनयैः पशुभिः अश्वादिभिः बन्धुभिः स्वजनैश्च सहितं रावणं मर्दयित्वा विनाश्य अजस्रम् अविरतं तव अधरमधुनः पानं स्वीकरिष्यति करिष्यतीत्यर्थः । कोपवानद्येत्यत्र कोपमानोऽथेति, स्वीकरिष्यतीत्यत्र ह्रङ्करिष्यतीति पाठान्तरम् । मालिनी वृत्तम् ॥ ३३ ॥

भेरीति । राक्षसेन्द्रः रावणः भेरीणां वादित्रभेदानां

लङ्कामापूर्य्य कामं स्वयमभवदथो राघवो रावणस्य
छिन्नान् मूर्द्ध्नो दधानः शिरसिरुहभरेष्वेकतः पञ्च पञ्च ॥२४॥

सीता । साक्षादालोक्य हर्षात् झटिति कुचतटीभारनम्रापि रामं
सोत्थायोदस्तदोर्भ्यां दरदलितकुचाभोगचेलोन्नताङ्गी ।
धन्याहं प्राणनाथ ! त्यज रजनिचरच्छिन्नशीर्षाणि, गाढ़ं
मामालिङ्ग्याद्य खेदं जहि विरहमहापातकं शान्तिमेतु ॥
२५ ॥

---

निस्वानैः निनादैः शङ्खानां ध्वनिभिः गजतुरगस्यन्दनानां हस्त्यश्वरथानां स्फीतैः अतिप्रवृद्धैर्नादैः तथा कटकेषु सैन्येषु ये भटाः वीराः तेषां भुजयोः आस्फालकोलाहलेन आस्फालनकलरवेण कामं सम्यक् लङ्काम् आपूर्य्य अथो अनन्तरं स्वयं सानन्दं यथा तथा रावणस्य स्वस्येति भावः, छिन्नान् पञ्च पञ्च मूर्द्ध्नः शिरांसि एकतः एकेन एकेन करेणेति भावः, शिरसिरुहभरेषु केशनिचयेषु दधानः राघवः रामः अभवत्। कामं स्वयमभवदथो राघव इत्यत्र रामः स्वयमभवदथो सायकैरेति पाठान्तरम् । स्रग्धरा वृत्तम ॥ २४ ॥

साक्षादिति । सा सीता साक्षात् रामम् आलोक्य कुचतटीभारेण नम्रापि अवनतापि हर्षात् झटिति सहसा उत्थाय उदस्तदोर्भ्यां प्रसारितभुजाभ्याम् उत्क्षिप्तभुजाभ्यां वा दरदलितम् ईषच्छिन्नं कुचाभोगचेलं स्तनाभोगवसनं, कञ्चुलिकेति यावत् यस्मिन् तद् यथा तथा उन्नतम् अङ्गं यस्याः तथाभूता सती, हे प्राणनाथ ! अहं धन्या पुण्यवती या त्वामीदृशमहं दृष्टवतीति भावः। रजनिचरस्य रावणस्य छिन्नानि शीर्षाणि त्यज, गाढ़ं यथा तथा मामालिङ्ग्य खेदं सन्तापं जहि नाशय,

आकाशे। मन्दोदरी रघुशराहतराक्षसेन्द्रं
चुम्बिष्यति, त्वमपि वेत्सि तु तत्र रामम्।
जानीहि राक्षसपतिर्न हि रामभद्रो
मायामयेन वपुषा विदधच्छिरांसि॥ ३६॥

जानकी लज्जते। रावणः स्वगतम्।

कृतकृत्ये च रामत्वे वर्त्तमाने मयि स्थिते।
व्यरुन्धन् देवताः सर्वाः पापमूलप्रवृत्तयः॥ ३७॥

भवतु, रणस्थलीषु तापसद्वयं निहत्य वैदेहीकेलिकलाकुतूहलमनुभवामि इति निष्क्रान्तः।

---

अद्य विरहमहापातकं शान्तिं गच्छतु शाम्यत्वित्यर्थः, इत्याहेत्यध्याहार्य्यम्। विरहमहापावक इति पाठान्तरम्। स्रग्धरा वृत्तम्॥ ३५॥

मन्दोदरीति। मन्दोदरी रघुशरेण रामवाणेन आहतं विद्धं राक्षसेन्द्रं रावणं चुम्बिष्यति, त्वमपि तत्र तस्यामवस्थायां रामं वेत्सि तु जानास्येव। अयन्तु मायामयेन वपुषा शरीरेण शिरांसि छिन्नानीति भावः, विदधत् कुर्वन् राक्षसपतिः रावणः, न तु रामचन्द्रः, जानीहि, वाक्यार्थः कर्म्म। वसन्ततिलकं वृत्तम्॥ ३६॥

कृतकृत्ये इति। रामत्वे रामरूपवत्त्वे वर्त्तमाने अत एव कृतकृत्ये सिद्धरत्सुखकामे इति भावः, मयि स्थिते सति पापमूला प्रवृत्तिर्यासां तथाभूताः पापचारा इत्यर्थः, सर्वा देवताः व्यरुन्धन् विघ्नमकुर्वन्नित्यर्थः, आकाशवाणेति शेषः। अनुष्टुप् वृत्तम्॥ ३७॥

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
मायाराघवसंज्ञकोऽत्र गतवानङ्को महानष्टमः ॥ ३८ ॥

---

## नवमोऽङ्कः ।

नेपथ्ये । भो भो वीराङ्गद ! वानरभटान् ब्रूहि—अद्य खलु रात्रौ सावधानैः स्थातव्यम् । अद्य रावणप्रस्थापिता प्राभञ्जनी नाम राक्षसी निशि शयालू रामलक्ष्मणौ हनिष्यतीति विभीषणो वदति ।

ततो निशि प्रविश्य प्राभञ्जनी स्वगतम् ।

उत्खातदारुणसुतीक्ष्णकृपाणपाणि-
वीराटवीषु निशि निर्भयतः शयानम् ।
हंहो ! सुदर्शनपरिभ्रमणेन गुप्तं
रामं निहन्मि कथमद्य वरं वराकी ? ॥ १ ॥

---

एष इति । मायया राघव इति संज्ञा रावणस्येति भावः यत्र सः ॥ ३८ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
महानाटकस्य अष्टमाङ्कव्याख्या समाप्ता ॥८॥

---

उत्खातेति । हंहो ! वराकी दीना अहम् उत्खाताः कोषेभ्यः उद्धृताः दारुणाः भयङ्कराः सुतीक्ष्णाः सुनिशिताः कृपाणाः

तद्गत्वा लङ्केशमेव निवेदयामि । प्रविश्य प्राभञ्जनी । जयति जयति लङ्कानाथः, राजन् ! सुदर्शनचक्रभ्रमणेन रक्षितं रामभद्रं निशि हन्तुं न शक्नोमि, तद्राक्षसाः प्रातः समराङ्गनप्रणयिनः कार्य्याः ।

रावणः । सत्यमेतत्, तथा करोमि ।

अथ युद्धोद्योगः ।

सुग्रीवो राजलक्ष्मीपरिमिलितवपुर्बालिपुत्रः कुमारः
श्रीगम्भीराभिरामः, प्लवगपरिवृढाः प्रौढिमारूढवन्तः ।
उल्लङ्घ्योल्लङ्घ्य लङ्कां जलनिधिपरिखाभूतभूरिप्रभावां
सर्वं सर्वानखर्वाः पिदधुरथ रणे राक्षसान् क्षोभयित्वा ॥ २ ॥

---

तलवाराः पाणिषु येषां ते तथोक्ताः ये वीराः हनूमदङ्गदादय इति भावः, तेषाम् अटवीषु वनेषु निशि रात्रौ निर्भयतः अकुतोभयतः शयानं सुदर्शनस्य नारायणचक्रास्त्रस्य परिभ्रमणेन समन्तात् सञ्चारेण, गुरुभ्रमणेनेति पाठान्तरं, गुप्तं रक्षितं वरं श्रेष्ठं रामं कथमद्य निहन्मि ? व्यापादयामि ? वसन्ततिलकं वृत्तम् ॥ १ ॥

सुग्रीव इति । अथानन्तरं राजलक्ष्म्या परिमिलितं सङ्गतं वपुः शरीरं यस्य तथाभूतः राजश्रीसमन्वित इत्यर्थः, सुग्रीवः, कुमारः युवराजः श्रिया यौवराजलक्ष्म्या गम्भीरः दुरवगाहः, अभिरामः सुन्दरश्च बालीपुत्रोऽङ्गदः, तथा जलनिधिः सागर एव परिखा परिवेष्टनजलराशिः तया भूतः सञ्जातः भूरिर्महान् प्रभावः दुरासदतेति भावः यस्याः तां लङ्काम् उल्लङ्घ्य उल्लङ्घ्य प्रौढिं प्रादुर्भावं, प्रभावमिति यावत्, आरूढवन्तः प्राप्तवन्तः अखर्वा महान्तः सर्वे प्लवगपरिवृढाः वानरप्रवराः सर्वान् सकलान् राक्षसान् रणे क्षोभयित्वा ताडयित्वा पिदधुः

प्राकारकूटादुपलान् पलाशै-
निंपात्यमानान् प्रतिगृह्य दोर्भ्याम्।
तैरेव सौधानि बभञ्जुरुच्चैः
प्लवङ्गमाः कम्पकराः क्षिपन्तः ॥ ३ ॥
प्राकारमूर्ध्नि मिलिता रजनीचरेन्द्रा
धाराधरा इव धराधरशृङ्गभाजः।
नाराचपुञ्जमभितो मुखरा ववर्षुः
तेनापि मत्तशिखिनो ननृतुः प्लवङ्गाः ॥ ४ ॥

---

आच्छादयामासुः समन्तात् रुरुधुरित्यर्थः, "वातोऽवाप्योः" इत्यकारलोपः। स्रग्धरा वृत्तम् ॥ २ ॥

प्राकारेति। प्लवङ्गमाः कम्पकराः राक्षसान् कम्पयन्त इति भावः, पलाशैः क्रव्यादैः, राक्षसैरित्यर्थः, प्राकारकूटात् प्राचीरशिखरात् "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः, निपात्यमानान् वानरान् प्रति क्षिप्यमाणानित्यर्थः, उपलान् प्रस्तरान् दोर्भ्यां बाहुभ्यां प्रतिगृह्य क्षिपन्तः, तानेवेति शेषः, तैरेव उपलैः उच्चैः उन्नतानि सौधानि हर्म्याणि बभञ्जुः चूर्णयामासुरित्यर्थः। उपजाति वृत्तम् ॥ ३ ॥

प्राकारेति। प्राकारस्य प्राचीरस्य मूर्ध्नि शिरसि मिलिताः समवेताः रजनीचरेन्द्राः राक्षसप्रवराः धराधरशृङ्गभाजः पर्वतशिखरस्था धाराधरा इव मेघा इव मुखराः सन्तः नदन्तः सन्त इति यावत्, अभितः समन्तात् नाराचपुञ्जं नाराचाख्यानि अस्त्राणीत्यर्थः, ववर्षुः वृष्टवन्तः, ववर्षुरिति प्रयोगः महाकविप्रयोगात् सोढव्यः। तेनापि नाराचास्त्रवर्षणेन प्लवङ्गा वानराः मत्तशिखिनः मत्तमयूराः, व्यस्तरूपकं, ननृतुः, यथा

वानराणां मिथ उक्तिः ।

शक्ताः सम्प्रति सर्वं एव हि वयं पृष्टाश्च दृष्टाश्च ये
काकुत्स्थेन च लक्ष्मणेन च पुनः शाखामृगेन्द्रेण च ।
किन्तु प्रौढ़कठोरकौणपघटां दृष्ट्वा गतो मारुतिः
यत्कृत्ये करवामहै तदधुना, नान्यत्ततो भ्रातरः ! ॥ ५ ॥

किञ्च । दुर्गान्तर्मिलिता निशाचरभटा, लङ्कावरोधो ह्ययं
निस्तीर्णः सुमनायमानकटकैर्युद्धोत्सवोल्लासिभिः ।

---

मेघवर्षणमालोक्य मयूरा नृत्यन्ति तथा राक्षसान् तथास्त्र-वर्षिणो दृष्ट्वा रणे नृत्यन्ति स्मेति भावः। वसन्ततिलकं वृत्तम् ॥ ४ ॥

शक्ता इति । ये काकुत्स्थेन रामेण च लक्ष्मणेन च पुनः शाखामृगेन्द्रेण सुग्रीवेण च पृष्टाः किमिदं कर्म्म युष्माभिः साध्यते इत्यनुयुक्ताः ततो दृष्टाः निपुणतायां परीक्षिता इति यावत्, सम्प्रति ते वयं सर्वं एव शक्ता हि समर्था एव, तत्तत्कार्य्येष्विति भावः । किन्तु प्रौढ़ा प्रबला कठोरा निष्ठुरा च या कौणपघटा राक्षसचमूः तां दृष्ट्वा मारुतिर्हनूमान् यत्कृत्ये यस्मिन् कर्म्मणि, युद्धव्यापारे इति भावः, गतः यात्रां कृतवान्, हे भ्रातरः! वयमपि अधुना तत्कृत्यं करवामहै करवाम, ततः तस्मात् अन्यत् अपरं कार्य्यं न, सर्वे वयं हनूमानिव संग्रामेऽवतराम इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५ ॥

दुर्गान्तरिति । निशाचरघटा राक्षससेना दुर्गस्य अन्तर-भ्यन्तरे मिलिताः सङ्गताः । युद्धे य उत्सवः आनन्दः तेन उल्लसन्ति ये ते तथोक्ताः सुमनायमानकटकैः उत्साहपूर्णसैनिकैः अयं लङ्कावरोधः हि लङ्कायाः सर्वतो निरोधः निस्तीर्णः सुष्ठु सम्पन्नः ।

निष्क्रामन्ति निशाचरा यदि पुनः सम्भूय भूयस्तरां
तत् को वेद किमिव कुर्य्युरधुना धुर्य्यान् नियुञ्जीमहि ॥ ६ ॥

अनन्तरञ्च ।

कपिकुलघनगर्जव्यक्तसंसक्तरक्षः-
कटकपटहकोटिध्वानभिन्नाद्रिगर्भम् ।
समगत गिरिशस्त्रक्षेपदक्षं मिथस्तद्-
रघुपरिवृढलङ्कानाथयोः सैन्ययुग्मम् ॥ ७ ॥

अथ रावणः श्रीरामस्य कटकं दृष्ट्वा तदागमनदिनं महोदरं पृच्छति । ततो महोदरः ।

न्यञ्चद्भूवलयं चलत्क्षितिधरं क्षुभ्यत्समस्तार्णवं
त्रस्यद्दैरिवधूविलोचनजलप्रायोरुवर्षोद्गमम् ।

---

यदि निशाचराः पुनः सम्भूय समेत्य भूयस्तरां बाहुल्येन निष्क्रामन्ति लङ्काया निष्क्रम्य संग्रामे प्रवर्त्तन्ते, तत् तदा किमेव कुर्य्युः, को वेद ? को जानाति ? अतः अधुना धुर्य्यान् धुरन्धरान्, तेषामग्रे प्रवर्त्तितुं शक्तानिति भावः, नियुञ्जीमहि नियुक्तान् कुर्य्याम । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६ ॥

कपीति । कपिकुलानां वानरनिचयानां घनेन सान्द्रेण गर्जेन गर्जनेन व्यक्तं स्फुटं संसक्ताः सम्मिलिता ये रक्षसां कटकस्य सैन्यस्य पटहकोटीनां वादित्रविशेषसङ्घानां ध्वानाः निस्वनाः तैः भिन्नः विदीर्णः अद्रेः सुवेलस्य गर्भः अभ्यन्तरभागः येन तथोक्तं तथा गिरीणां शस्त्राणाञ्च क्षेपे निक्षेपे दक्षं पटु तत् रघुपरिवृढलङ्कानाथयोः रामरावणयोः सैन्ययुग्मं कपिराक्षसबलमित्यर्थः, मिथः परस्परं समगत संसक्तं, योद्धुं प्रवृत्तमभूदिति यावत् । मालिनी वृत्तम् ॥ ७ ॥

प्रोद्यत्कपिवाहिनीकपिभटव्याधूतधूलीपट-
च्छन्नादित्यपथं कथं न विदितं तज्जैत्रयात्रादिनम् ? ॥ ८ ॥

रावणः । क रहितराजलक्षणो राम आस्ते ?

महोदरः । देव !

भ्रूभङ्गाद्बद्धसिन्धुः रघुपतिरवताद्वन्दिना वेदितोऽसौ
विष्टस्ते मातुलस्य त्वचि पुनरनुजे मन्त्रिणि न्यस्तकर्म्मा ।
बाणे दत्तार्द्धदृष्टिस्तव भयपिशुने लक्ष्मणे सस्मितो यः
सुग्रीवग्रीवबाहुः कृतचरणभरः साङ्गदे वायुपुत्रे ॥ ९ ॥

---

न्यञ्चदिति । न्यञ्चत् अधोगच्छत् भूवलयं यस्मिन् तत्, चलन्तः कम्पमानाः क्षितिधराः पर्वताः यत्र तत्, क्षुभ्यन्तः विचलन्तः समस्ता अर्णवाः समुद्राः यस्मिन् तत्, त्रस्यन्तीनां भयार्त्तानां वैरिवधूनां शत्रुनारीणां विलोचनजलैः नयन-सलिलैः प्रायेण प्राचुर्य्येण उरुर्महान् वर्षोद्गमः धारापातः यस्मिन् तथोक्तं प्रकर्षेण उदञ्चन्तीषु प्रयान्तीषु कपिवाहिनीषु वानरसेनासु ये कपिभटाः वानरवीराः तैः व्याधूता उत्क्षिप्ता ये धूलीपटाः रजोवसनानि तैः छन्नः आवृतः आदित्यस्य पन्थाः आदित्यपथः सूर्य्यमार्गः यस्मिन् तथाभूतं तस्य रामस्य जैत्र-यात्रादिनं विजयप्रस्थानदिवसः कथं न विदितम् ? अपितु स्वत एव ज्ञातमित्यर्थः, तत्तद्व्यापाराणां स्वत एवानुभूतत्वादिति भावः । कपिभटेत्यत्र पदभरेति पाठे कपिवाहिनीनां पद-भरैरित्यन्वयः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८ ॥

भ्रूभङ्गादिति । यः भ्रूभङ्गात् भ्रुवोः कौटिल्यात् बद्धः सिन्धुः सागरो येन तथोक्तः, ते तव मातुलस्य मारीचस्य, कनकमृगरूपिण इति भावः, त्वचि चर्म्मणि विष्टः आसीनः

रावणः। साभ्यसूयम्। आः किमिति वल्गसि? पश्याद्य मे बाहुवीर्य्यमिति संग्रामावतरणं नाटयति (क)।

अत्रावसरे विभीषणः।

सम्भूय प्रसभं पयोधिलहरीपुञ्जैरिव प्रावृता
लङ्का वानरयूथपैः शिखिशिखाभङ्गीपिशङ्गोज्ज्वलैः।
वैदेहीविरहव्यथैकविधुर! क्लिष्टो हि लङ्केश्वरः
तस्मात् तिष्ठति युष्मदीयकटकाटोपः समुज्जृम्भते ॥ १० ॥

---

पुनः तथा मन्त्रिणि साचिव्यकारिणि अनुजे, तवेति शेषः, विभीषणे इति भावः, न्यस्तं कर्म्म येन सः विभीषणार्पित-मन्त्रकार्य्य इत्यर्थः, तव भयपिशुने भयसूचके बाणे शरे दत्ता अर्द्धदृष्टिर्येन सः, लक्ष्मणे सस्मितः मृदुमन्दहासोत्यर्थः, सुग्रीवस्य ग्रीवायां बाहुर्यस्य तथोक्तः सुग्रीवग्रीवायां दत्तहस्त इत्यर्थः, तथा साङ्गदे अङ्गदसहिते वायुपुत्रे हनूमति कृतः चरणयोर्भरः येन तथाभूतः एकं चरणम् अङ्गदाङ्के अपरं चरणं हनूमदङ्के निदधदित्यर्थः, वन्दिना स्तुतिपाठकेन वेदितः ज्ञापितः असौ रघुपतिः रामः अवतात् रक्षतु, अस्मानिति शेषः। अवतादिति क्रियापदं रावणभयादस्य कण्ठे स्खलितं छन्दःपूरणाय कविना प्रयुक्तं बोध्यम्। स्रग्धरा वृत्तम् ॥ ९ ॥

(क) वल्गसि व्याहरसि, भयपिशुने इति यदुक्तं तत्र विरक्त्या उक्तिरियम्।

सम्भूयेति। शिखिनाम् अग्नीनां शिखाभङ्गीवत् पिशङ्गाः पिङ्गलाः उज्ज्वलाश्च तैः वानरयूथपैः कपिसेनापतिभिः पयोधिलहरीपुञ्जैरिव समुद्रतरङ्गनिचयैरिव सम्भूय समेत्य लङ्का प्रसभं वेगेन प्रावृता पूरिता। हे वैदेह्याः सीतायाः

आकण्ठं पिहितवपुर्विशालवक्षाः
प्राकारव्यतिकरजागरूकमूर्द्धा ।
उद्दामे नभसि यथैकसैंहिकेयः
तैरेको रजनीचरो व्यतर्कि लोकैः ॥ ११ ॥

हेलास्फालितरामलक्ष्मणधनुर्ज्यावल्लरीझल्लरी-
झङ्कारप्रसरप्ररूढ़पुलकप्राग्भारनीरन्ध्रिताः ।

---

विरहः अनधिगम इत्यर्थः, तेन या व्यथा सन्तापः तया एकः केवलः विधुरः विक्षुब्धः तत्सम्बुद्धौ, हे रामचन्द्र! यस्मात् युष्मदीयकटकाटोपः वानरसेनानिवेशस्य आड़म्बरः समुज्जृम्भते समुल्लसति तस्मात् हेतोः लङ्केश्वरः रावणः क्लिष्टः हि तिष्ठति क्लेशेन अधुना वर्त्तते । शार्दूलविक्रीड़ितं वृत्तम् ॥१०॥

आकण्ठमिति । तैः लोकैः राघवसैनिकैरिति भावः, आकण्ठं कण्ठपर्य्यन्तं पिहितम् आवृतं स्वसैन्यैः प्राचीरैर्वा वपुः शरीरं यस्य सः विशालं वृहद्वक्षः यस्य तथोक्तः प्राकारस्य प्राचीरस्य व्यतिकरात् सम्पर्कात् जागरूकाः प्रौढ़ाः मूर्द्धानः शिरांसि यस्य तथाभूतः एको रजनीचरः रावणः इति भावः, उद्दामे महति नभसि आकाशे एकः अद्वितीयः सैंहिकेयः सिंहिकासुतः यथा राहुरिव, "तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः" इत्यमरः, व्यतर्कि वितर्कितः, अमानीत्यर्थः । उपमालङ्कारः । प्रहर्षिणी वृत्तं, "त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात् ॥ ११ ॥

हेलेति । हेलया अवलीलया आस्फालिते सञ्चालिते ये रामलक्ष्मणयोः धनुषी, तयोः ज्यावल्लरी मौर्वीमञ्जरी सा एव झल्लरी वाद्यभेदः तस्या झङ्कारप्रसरेण झञ्झननादातिशयेन

व्यावल्गत्कपिकण्ठकाण्डकदलीक्रीडत्कृपाणाञ्चलाः
स्फूर्जत्स्फूर्जथुतर्जनैकचपलाश्चञ्चन्ति रात्रिञ्चराः ॥ १२ ॥

किञ्च। अग्रेसरी रघुपतेः परिणद्धपाक-
किम्पाकपाटलमुखी कपिवीरसेना।
निःशेषमापिबति राक्षसवीरचक्रं
प्रातः प्रभेव तपनस्य तमिस्रजालम् ॥ १३ ॥

युधि हतेषु राक्षसेषु रावणः। भो भो मन्त्रिणः! प्रबोध्यतामयमनुजन्मा कुम्भकर्णः।

---

प्ररूढाः जाताः ये पुलकप्राग्भाराः रोमाञ्चातिशयाः, भयजनिता इति भावः, तैः नीरन्ध्रिताः व्याप्ताः तथा व्यावल्गतां समन्ततः सञ्चरतां कपीनां वानराणां कण्ठा एव काण्डकदल्यः कादलीस्तम्भा इत्यर्थः, तासु क्रीडन्ति चलन्ति कृपाणाञ्चलानि तलवारप्रान्तभागा येषां तथाभूताः रात्रिञ्चराः राक्षसाः स्फूर्जन् स्फुरन् स्फूर्जथुः वज्रनिर्घोषः तद्वत् या तर्जना निर्भर्त्सनविशेषः तत्र एके मुख्याश्चपलाः रता इति यावत्, चञ्चन्ति विचरन्ति। शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

अग्रेसरीति। रघुपतेः रामस्य अग्रेसरी अग्रवर्त्तिनी परिणद्धः प्राप्तः पाको येन तथाभूतं यत् किम्पाकं किम्पाकफलं "माकाल" इति प्रसिद्धं, तद्वत् पाटलं श्वेतरक्तं, "श्वेतरक्तस्तु पाटलः" इत्यमरः, मुखं यस्याः सा कपिवीरसेना वानरभटचमूः प्रातः प्रातःकाले तपनस्य सूर्य्यस्य प्रभा तमिस्रजालमिव अन्धकारस्तोममिव राक्षसवीरचक्रं राक्षसवीराणां चक्रं समूहं निःशेषं यथा तथा आपिबति नाशयतीत्यर्थः। उपमालङ्कारः। वसन्ततिलकं वृत्तम् ॥ १३ ॥

मन्त्रिणः । यदाज्ञापयति देव इति तथा कुर्वन्ति ।

दत्त्वा सन्तप्ततैलानि कुम्भकर्णस्य कर्णयोः ।
निद्रादरिद्रितं चक्रुस्तममात्यपुरोहिताः ॥ १४ ॥

विनिद्रः कुम्भकर्णो राजसमीपमागत्य, जयन्ति जयन्ति प्रथमपौलस्त्यपादाः ।

भिन्नैरावणबन्धुसिन्धुरशिरःसम्पातिभिर्मौक्तिकैः
शश्वद्विश्वजयप्रशस्तिरचनावर्णावलीशिल्पिने ।
नाकान्तःपुरिकाकपोलविलसत्काश्मीरपत्राङ्कुर-
श्रीविन्यासविलासभूषणभुजस्तम्भाय तुभ्यं नमः ॥ १५॥

---

दत्त्वेति । अमात्यपुरोहिताः अमात्यानामग्रेसराः, यद्वा अमात्याश्च पुरोहिताश्च ते कुम्भकर्णस्य कर्णयोः सन्तप्तानि तैलानि दत्त्वा तं कुम्भकर्णं निद्रादरिद्रितं निर्निद्रम् अपगतनिद्रमित्यर्थः, चक्रुः कृतवन्तः । निद्रारहितमिति पाठान्तरम् । अनुष्टुप् वृत्तम् ॥१४॥

भिन्नेति । भिन्ना विदलिता ये ऐरावणस्य ऐरावतस्य बन्धवः ज्ञातयः सिन्धुराः दिग्वारणा इत्यर्थः, तेषां शिरोभ्यः कुम्भेभ्य इति भावः, सम्पतन्तीति तथाक्तैः मौक्तिकैः मुक्ताफलैः, बन्धिवत्यत्र गन्धेति पाठे भिन्नः असिना विदलितः ऐरावण एव गन्धसिन्धुरः गन्धगजः तस्य शिरसः कुम्भात् सम्पतन्तीति तैः मौक्तिकैरित्यर्थः, शश्वत् सर्वदा विश्वेषां जगतां जयस्य प्रशस्तिरचना प्रशंसापत्रकल्पना तस्या वर्णावली अक्षरपङ्क्तिः तस्याः शिल्पी रचयिता तस्मै, नाकान्तःपुरिकाणां सुरनारीणां कपोलेषु विलसन्तः राजन्तः ये काश्मीरपत्राङ्कुराः कुङ्कुमपत्ररचनाः तेषां श्रीविन्यासः शोभासम्पादनं तेन विलासः विनोदः भूषणं येषां तादृशाः भुजा एव स्तम्भा यस्य तथाभूताय, भूषणे-

यद्यपि क्षितिपालानामाज्ञा सर्वत्रगा स्वयम् ।
तथापि शास्त्रदीपेन चरत्येव मतिः सताम् ॥ १६ ॥
इति भ्रातृवचः श्रुत्वा तथेत्याह दशाननः ।
शास्त्रनिःसंशया वाचः सतां व्यसनदुर्लभाः ॥ १७ ॥

रावणः । उत्छिन्नस्फटिकाचलेन्द्रशिखरश्रेणीविघृष्टाङ्गदैः
एभिः पीनतरैः सुरासुरजयप्राप्तप्रतिष्ठैर्भुजैः ।

---

त्यत्र भीषणेति पाठे विलासेन भीषणाः भुजस्तम्भा यस्य तथोक्ता-येत्यर्थः, तुभ्यं नमः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १५ ॥

यदीति । यद्यपि क्षितिपालानां राज्ञाम् आज्ञा स्वयं सर्वत्र गच्छतीति सर्वत्रगा सर्वस्थानगामिनीत्यर्थः, न क्वचित् व्याहन्यते इति भावः, तथापि अव्याहताज्ञत्वेऽपि सतां साधूनां राज्ञामिति शेषः मतिः प्रज्ञा शास्त्रदीपेन चरत्येव शास्त्रमनुसृत्य प्रवर्त्तते इत्यर्थः । चरत्येव मतिः सतामित्यत्र सञ्चरन्त्यवनीश्वरा इति पाठान्तरम् । अनुष्टुप् वृत्तम् ॥ १६ ॥

इतीति । दशाननः रावणः इतीत्थं भ्रातुः कुम्भकर्णस्य वचः वाक्यं श्रुत्वा तथा तदेव कर्त्तव्यं, शास्त्रानुसारेणैव सतां चलितव्यमित्यर्थः, इति आह उवाच । किन्तु सतां साधूनां शास्त्रेण नीतिशास्त्रपर्य्यालोचनयेत्यर्थः, नास्ति संशयो द्वैधबुद्धि-र्यासु तथाविधा वाचः वाक्यानि व्यसनेषु विपत्सु दुर्लभाः दुष्प्रापा इत्यर्थः, विपत्सु तथोपदेष्टारः विरला इति भावः, व्यसनदुर्लभा इत्यत्र कस्य न वल्लभा इति पाठान्तरम् । अनु-ष्टुप् वृत्तम् ॥ १७ ॥

उत्छिन्नेति । उत्छिन्नः उद्धृतः यः स्फटि-काचलेन्द्रः कैलासाद्रिः तस्य शिखरश्रेणीभिः शृङ्गाग्रभागे-

संग्रामे मम कुम्भकर्ण ! विजयः, किन्त्वङ्गजाड़म्बर-
प्रत्याशाशिथिलोऽस्म्यहं ? व्रज पुनः स्वप्नाय निद्रालयम् ॥ १८ ॥

कुम्भकर्णः । सीताप्रियञ्च दलितेश्वरकार्मुकञ्च
बालिद्रुहञ्च रचिताम्बुधिबन्धनञ्च ।
रक्षोहनञ्च विजिगीषुविभीषणञ्च
रामं निहत्य चरणौ तव वन्दिताहे ॥ १९ ॥

देव ! त्वं राक्षसेन्द्रः परिहर तृणवद्विद्विषः शोकशल्यं
हत्वा विद्वेषिवृन्दं कलुषमहमपि क्षालयाम्यद्य रक्तैः ।

---

रित्यर्थः, विघृष्टानि सङ्घर्षेण प्राप्तानि अङ्गदानि भूषणविशेषा येषां तैः सुराश्च असुराश्च तेषां जयेन प्राप्ता लब्धा प्रतिष्ठा ख्यातिः यैः, तथाभूतैः एभिः पीनतरैः अतिपीवरैः भुजैः बाहुभिः, विंशत्येति शेषः, संग्रामे मम विजयः, भावीति शेषः । हे कुम्भकर्ण ! अहं तव भुजयोः आड़म्बरः विक्रमः तस्य प्रत्याशया शिथिलः निश्चिन्त इति भावः, अस्मि भवामि किम् ? तव भुजबलप्रत्याशया नाहं तिष्ठामीत्यर्थः, पुनः स्वप्नाय निद्रार्थं निद्रालयं शयनागारं व्रज गच्छ, त्वत्कृतेन विजयेन मे प्रयोजनं नास्ति इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १८ ॥

सीताप्रियमिति । सीताप्रियञ्च सीतापतिञ्च, दलितं भग्नम् ईश्वरस्य हरस्य कार्मुकं धनुर्येन तञ्च, बालिद्रुहञ्च निहत-बालिनञ्च, रचितं कृतम् अम्बुधेः समुद्रस्य बन्धनं येन तथाभूतञ्च, रक्षोहनञ्च रक्षसां खरदूषणादीनां घातकञ्च, विजिगीषुः विजयार्थी विभीषणो यस्य तथोक्तञ्च ; यद्वा विजिगीषुः विजेतुमिच्छुः विभीषयतीति विभीषणः तञ्च रामं निहत्य विनाश्य तव चरणौ वन्दिताहे वन्दिष्ये । वसन्ततिलकं वृत्तम् ॥ १९ ॥

को रामो लक्ष्मणः कः क इह हरिपतिः कोऽङ्गदः को हनूमान्
कः कालः को विधाता चलति मयि रणे रोषणे कुम्भकर्णे ? ॥२०॥

रावणः। महाबलपराक्रमैः राक्षसभटैः परिवृतो भवतु वत्सः। कुम्भकर्णस्तथा रणशिरसि करोति।

---

देवेति। हे देव! त्वं राक्षसेन्द्रः राक्षसानां नाथः, विद्विषः शत्रोः सकाशात् शोक एव शल्यं तत् तृणवत्, तृणेन तुल्यं परिहर शत्रुभयं परित्यजेत्यर्थः। अहम् अद्य विद्वेषिणां शत्रूणां वृन्दं सङ्घं हत्वा विनाश्य रक्तैः, तेषामिति शेषः, कलुषमपि पापमपि, प्रथमं तवाप्रियवचनोपदेशसमुत्थमिति भावः, क्षालयामि शोधयामि। रोषणे क्रोधने कुम्भकर्णे मयि रणे चलति गच्छति सति रामः कः? लक्ष्मणः कः? इह अस्मिन् रणे हरिपतिः वानराधिपः सुग्रीवः कः? अङ्गदः कः? हनूमान् कः? कालः यमः कः? विधाता च कः? न कोऽपि पुरः स्थातुं समर्थ इति भावः।

राजन्! मा गा विषादं परिहर बलवद्विद्विषः शोकशल्यं
कल्याणान्याश्रयन्तामहमहमिकया नो भवन्तं जहामि।
कः कालः को विधाता क्रिमरिकुलभयं को यमः के च याम्याः
को रामः? के कपीन्द्राः? चलति मयि रणे रोषिते कुम्भकर्णे॥

इति पाठे, हे राजन्! विषादं खेदं मा गाः न गच्छ, मा खिद्यस्वेत्यर्थः। बलवान् विद्विट् शत्रुः तस्मात् शोकशल्यं दुःखशल्यं परिहर, कल्याणानि मङ्गलानि अहमहमिकया परस्परस्पर्द्धितया आश्रयन्तां, त्वामिति शेषः, भवन्तं त्वां नो जहामि न त्यजामि। याम्याः यमानुचराः। अन्यत् सुगमम्। स्रग्धरा वृत्तम्॥ २०॥

अपि कपिकुलमल्लाः ! किं मुधा जातकम्पाः ?
न हि जगति भवद्भिर्युध्यते कुम्भकर्णः ।
अपि जलधरसङ्घो लेढ़ि किं स्वल्पकुल्याम् ?
अथ मशककदम्बं केशरी किं पिनष्टि ? ॥ २१ ॥

नाहं बाली सुबाहुर्न खरत्रिशिरसौ दूषणस्ताड़काहं
नाहं सेतुः समुद्रे न च धनुरपि यत्त्र्यम्बकस्य त्वयात्तम् ।
रे रे राम ! प्रतापानलज्वलमहाकालमूर्त्तिः किलाहं
वीराणामूरुशल्यं समरभुवि वरः संस्थितः कुम्भकर्णः ॥ २२ ॥

---

अपीति । अपि भोः कपिकुलमल्लाः ! वानरचमूवीराः ! मुधा वृथा किं जातः कम्पः येषां तथाभूताः ? यूयमिति शेषः, किमर्थं बिभीथेत्यर्थः । जगति कुम्भकर्णः भवद्भिः युष्माभिः न हि नैव युध्यते । जलधरसङ्घः मेघसमूहः स्वल्पकुल्याम् अल्पां सरितम्, "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः, अपि किं लेढ़ि ? नैव पिबतीत्यर्थः, अतृप्तिकरत्वादिति भावः, अथ केशरी सिंहश्च मशककदम्बं मशकसमूहं पिनष्टि किं ? दलति किम् ? नैवेत्यर्थः, नितरामयोग्यत्वादिति भावः । सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासः । किं स्वल्पकुल्यामित्यत्र कुल्या-मकुल्यामिति पाठः । मशककदम्बमित्यत्र मशककुटुम्बमिति च पाठान्तरम् । मालिनी वृत्तम् ॥ २१ ॥

नाहमिति । रे रे राम ! अहं बाली न, सुबाहुर्न, खर-त्रिशिरसौ खरश्च त्रिशिराश्च न, दूषणः न, अहं ताड़का न, अहं समुद्रे सेतुः न, त्वया यत् त्र्यम्बकस्य हरस्य धनुः आत्तं गृहीतं, भग्नमिति भावः, तत् धनुरपि न, अहं किल प्रतापा-नलेन कवले जगद्ग्रासे महाकालस्य संहाररूपिणो रुद्रस्य

विघटितबहुसेनाचारिवीरः कपीन्द्रं
परिघगुरुभुजाभ्यां गाढ़मापीड्य धृत्वा।
निरगमदतितूर्णं चूर्णयन् पूर्वदिक्कं
कपिकुलमथ लङ्कासम्मुखं कुम्भकर्णः॥ २३॥

तच्छ्रुत्वा रावणः।

यदर्पितं प्राज्यबलेन बालिना
विधाय दोर्मूलवशं दशाननम्।
तदुद्धृतं शल्यमनेन मानिना
निविश्य कक्षाकुहरे कपीश्वरम्॥ २४॥

---

मूर्त्तिः, यद्वा मूर्त्तिरिव मूर्त्तिर्यस्य तथाभूतः वरः श्रेष्ठः, वीराणां प्रतिपक्षभटानाम् उरु महत् शल्यं शल्यभूत इत्यर्थः, कुम्भकर्णः समरभुवि रणभूमौ संस्थितः उपस्थितः। समरभुवि वर इत्यत्र समरभुवि चर इति पाठान्तरम्। स्रग्धरा वृत्तम्॥ २२॥

विघटितेति। अथानन्तरं विघटितासु विमथितासु बहुषु सेनासु चरतीति तच्चारी वीरश्चेति तथाभूतः कुम्भकर्णः पूर्वदिक्कं पूर्वदिग्वर्त्ति-कपिकुलं चूर्णयन् विदलन् परिघवत् गुरू परिघगुरू यौ भुजौ बाहू ताभ्यां कपीन्द्रं सुग्रीवं धृत्वा गाढ़ं यथा तथा आपीड्य निष्पिष्य अतितूर्णम् अतिशीघ्रं लङ्कासम्मुखं निरगमत् निश्चयेन जगाम, "निर्निश्चयनिषेधयोः" इत्यमरः। मालिनी वृत्तम्॥ २३॥

यदर्पितमिति। प्राज्यं प्रभूतं बलं सामर्थ्यं यस्य तथोक्तेन अतिबलवतेत्यर्थः, बालिना कपिराजेन दशाननं, मामिति शेषः, दोर्मूलवशं कक्षानिबद्धमित्यर्थः, विधाय कृत्वा यत् शल्यम् अर्पितं निखातं, मम हृदये इति भावः, अनेन मानिना मानो-

सुग्रीवं बाहुमूले प्लवगबलपतिं कण्ठदेशे भुजेन
क्षिप्त्वा भीमेन गाढ़ं रजनिचरपुरीं सन्दधानो जगाम।
सानन्दं कुम्भकर्णः, तदनु कपिभटस्तस्य तूर्णं सकर्णं
घ्राणं जग्ध्वा जगाम स्वशिबिरमुरसः कूर्परेणाहताच्च ॥ २५ ॥
निश्वस्योत्सृज्य वाष्पं नयनकमलयोरात्मने वारि दत्त्वा,
कृत्वा लङ्कोपगूढ़ं सकरुणमपुनर्भावि नीत्वा त्रिशूलम्।
क्रोधान्धः कालमूर्त्तिः प्रलयहुतवहाङ्गारनेत्रावकीर्णः
छिन्नघ्राणोऽवतीर्णः पुनरपि समरप्राङ्गणे कुम्भकर्णः ॥ २६ ॥

---

त्रतेन कुम्भकर्णेन कक्षाकुहरे भुजामूले कपीश्वरं सुग्रीवं निवेश्य तत् शल्यम् उद्धृतम् उत्पाटितम्। वंशस्थविलं वृत्तं, "वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ॥ २४ ॥

सुग्रीवमिति। कुम्भकर्णः बाहुमूले भुजामूले, स्थितमिति शेषः, प्लवगबलपतिं वानरयूथपतिं सुग्रीवं भीमेन भीषणेन भुजेन कण्ठदेशे क्षिप्त्वा गाढ़ं यथा तथा सन्दधानः संग्टह्णन् सानन्दं यथा तथा रजनिचरपुरीं लङ्कां जगाम। तदनु तदनन्तरं कपिभटः वानरवीरः सुग्रीवः तूर्णं शीघ्रं तस्य कुम्भकर्णस्य सकर्णं घ्राणं कर्णनासिके इत्यर्थः, जग्ध्वा खादित्वा नखैरुत्पाट्येति भावः, कूर्परेण कफोणिना आहतात् प्रहृतात् उरसः वक्षःस्थलात् स्वशिबिरं निजं सेनानिवेशं जगाम। उरसः कूर्परेणाहताच्च इत्यत्र उदरं कूर्परेणाभिहत्येति पाठान्तरं समीचीनं, कूर्परेण उदरम् आहत्येत्यन्वयः। स्रग्धरा वृत्तम् ॥ २५ ॥

निश्वस्येति। कालो कृष्णवर्णा मूर्त्तिर्यस्य सः, यद्वा कालस्येव यमस्येव मूर्त्तिर्यस्य सः कुम्भकर्णः छिन्नघ्राणः निकृत्तनासिकः अत एव क्रोधेन अन्धः निर्व्विवेक इत्यर्थः, निश्वस्य

तं दृष्ट्वैव प्रविष्टा गिरिवरकुहरं त्रस्तचित्ताः कपीन्द्राः
केचित् पादान्तरन्तःप्रचलितपवनान्दोलिताः खे चलन्ति।
केचिद्दोर्दण्डचण्डभ्रमणनिपतिताः शोणितान्युद्गिरन्ति
प्राणान् केचित्प्रवीराः कथमपि जहति स्फीतफुत्कारभिन्नाः ॥२७॥

---

दीर्घमिति भावः, नयनकमलयोः वाष्पम् अश्रुजलम् उत्सृज्य त्यक्त्वा आत्मने वारि दत्त्वा स्वाश्रुजलेन भाविनः प्रेतस्य स्वस्य तर्पणं विधायेति भावः, अपुनर्भावि पुनर्भवरहितम् अत एव सकरुणं सशोकं यथा तथा लङ्काया उपगूढम् आलिङ्गनं कृत्वा त्रिशूलम् अस्त्रं नीत्वा गृहीत्वा प्रलये कल्पान्ते यो हुतवहः अग्निः तस्य अङ्गारवत् प्रज्वलितदग्धकाष्ठवत् ये नेत्रे ताभ्याम् अवकीर्णः युक्तः सन् इत्यर्थः, पुनरपि समरप्राङ्गणे युद्धभूमौ अवतीर्णः उपनीतः। प्रलयहुतवहाङ्गारनेत्रावकीर्ण इत्यत्र प्रलयहुतवहाङ्गारनेत्रो विकर्ण इति पाठान्तरं समीचीनम्। स्रग्धरा वृत्तम् ॥ २६ ॥

तस्मिति। कपीन्द्राः वानरसेनापतयः, केचिदिति शेषः, तं कुम्भकर्णं दृष्ट्वैव त्रस्तचित्ताः भीतान्तःकरणाः सन्तः गिरिवरस्य सुवेलस्य कुहरं गह्वरं प्रविष्टाः। केचित् वीराः पादयोः चरणयोः, कुम्भकर्णस्येति भावः, अन्तरन्तः अभ्यन्तरात् अभ्यन्तरात् प्रचलितेन पादविक्षेपवेगात् प्रचलितेनेति भावः, पवनेन आन्दोलिताः उत्क्षिप्ताः सन्तः इत्यर्थः, खे आकाशे चलन्ति उड्डीयन्ते इत्यर्थः। केचित् दोर्दण्डाभ्यां चण्डं यत् भ्रमणं णिजन्तात् भ्रमधातोरनट्प्रत्ययः, भ्रामणमित्यर्थः, तेन निपतिताः भ्रामणात् परं निपतिता सन्तः, इति भावः, शोणितानि

उत्क्षिप्य शूलमजयं त्रिपुरान्तकस्य
संहारकेतुमिव कोटितड़ित्प्रभञ्च ।
घोरं ज्वलन्तमुरसि क्षिपति स्म रक्षः
तारापतेस्तदिषुणा रघुणा निरस्तम् ॥ २८ ॥

क्रोधाग्नेर्जाठराग्नेः कपिशिविरगतो मुद्गरञ्चाददानो
वक्त्रे निक्षिप्य कांश्चित्कवलयति भटानुत्कटं कुम्भकर्णः ।
कांश्चित्पद्भ्यां पिनष्टि श्वसनसहचरा वानराः कर्णरन्ध्रात्
निर्गच्छन्त्येक एतान् पुनरपि च शनैश्चर्वयन्नत्ति घोरम् ॥ २९ ॥

---

रक्तानि उद्गिरन्ति उद्वमन्ति । केचित् प्रवीराः प्रकृष्टा वीराः स्फीतेन फूत्कारेण भिन्नाः सन्ताड़िता इत्यर्थः, कथमपि प्राणान् जहति त्यजन्ति । स्रग्धरा वृत्तम् ॥ २७ ॥

उत्क्षिप्येति । रक्षः कुम्भकर्णः त्रिपुरान्तकस्य रुद्रस्य संहारकेतुमिव संहारध्वजमिव कोटितड़िताभिव प्रभा यस्य तं विद्युत्कोटिसमप्रभमित्यर्थः, अजयं दुर्वारं घोरं दारुणं ज्वलन्तं दीप्यमानं शूलं तारापतेः सुग्रीवस्य उरसि वक्षसि क्षिपति स्म चिक्षेप । रघुणा रामेण इषुणा शरेण तत् शूलं निरस्तञ्च निकृत्तञ्च । कोटितड़ित्प्रभाभिरिति पाठे कोटितड़ित्प्रभाभिः विद्युत्कोटिदीप्तिभिः घोरं दुष्प्रेक्ष्यमित्यर्थः । वसन्ततिलकं वृत्तम् ॥ २८ ॥

क्रोधाग्नेरिति । कुम्भकर्णः मुद्गरम् आददानः गृह्णन् कपीनां वानराणां शिविरगतः सेनानिवेशप्रविष्टः सन् क्रोधाग्नेः जाठराग्नेः क्रोधानलात् जठरानलाच्च हेतोः कांश्चित् भटान् कपिवीरान् वक्त्रे वदने निक्षिप्य उत्कटं यथा तथा कवलयति ग्रसति । कांश्चित् वानरान् पद्भ्यां पिनष्टि नि-

सव्येन सान्द्रशिविरञ्च करेण धुन्वन्
व्यात्ताननः समदकुम्भिकरप्रभेण ।
सुग्रीवमेव कपिकुम्भधरेषु सत्सु
जग्राह कोपकलितो युधि कुम्भकर्णः ॥ ३० ॥
तातं विलोक्य विषमस्थमथाङ्गदस्तं
गारुत्मतेन भुवि पातयति स्म शत्रुम् ।

---

र्दलति । केचित् वानराः श्वसनेन प्रश्वासवातेन सह चरन्तीति तथोक्ताः, निश्वासवातेन उदरगामिनः सन्तः इत्यर्थः, कर्णरन्ध्रात् कर्णविवरात् निर्गच्छन्ति । एकश्च कुम्भकर्णः पुनरपि कर्ण-रन्ध्रात् निर्गतानपि एतान् शनैश्चर्वयन् घोरं दारुणं यथा तथा अत्ति भक्षयति । मुद्गरञ्चाददान इत्यत्र मुद्गरं व्याददान इति, निक्षिप्य कांश्चिदित्यत्र निक्षिप्य कोटिमिति, उत्कटमित्यत्र उत्कटानिति, चर्वयन्नत्तीत्यत्र चर्वितानत्तीति च पाठान्तरं सुगमम् । स्रग्धरा वृत्तम् ॥ २९ ॥

सव्येनेति । युधि युद्धे कोपकलितः कोपाक्रान्तः कुम्भ-कर्णः व्यात्ताननः विस्तृतवदनः सन् समदः मदमत्तः यः कुम्भी हस्ती तस्य करप्रभेण शुण्डनिभेन सव्येन वामेन करेण हस्तेन सान्द्रं कपिभिराकीर्णमिति भावः, शिविरं सेनानिवेशं धुन्वन् कम्पयन्,आलोड़यन्नित्यर्थः, सत्सु विद्यमानेषु कपय एव कुम्भधरा हस्तिनः तेषु मध्ये सुग्रीवमेव, दक्षिणेन करेणेति शेषः, जग्राह गृहीतवान् । वसन्ततिलकं वृत्तम् ॥ ३० ॥

तातमिति । अथानन्तरम् अङ्गदः तातं पितरं पितृव्यमिति यावत्, सुग्रीवं विषमस्थं विपन्नं, कुम्भकर्णहस्तपतितत्वादिति भावः, विलोक्य दृष्ट्वा गारुत्मतेन गरुड़पाशेन तं शत्रुं कुम्भकर्णं

मुक्तोऽपि न श्वसिति यावदसौ कपीन्द्र-
स्तावद्बबन्ध नरसिंहपदाऽङ्गदं सः ॥ ३१ ॥
दृष्ट्वा नीलस्तमुभयमपि ग्रस्तमाक्रम्य रक्षः-
स्कन्धे मौलौ श्रवणहृदयघ्राणवक्त्रोदरेषु ।
तीव्राघातैर्दहति कुपितः स्वेन रूपेण वीरः
क्रव्यादोऽभूत्तदनु विकलः प्रोत्थितौ वानरेन्द्रौ ॥ ३२ ॥

लङ्काशिखरस्थो रावणः ।

लङ्केश्वरस्तमवलोक्य रणे ज्वलन्तं
कादम्बिनीसहचरोऽमृतवारिधाराः ।

---

भुवि भूतले पातयति स्म । असौ कपीन्द्रः सुग्रीवः मुक्तोऽपि कुम्भकर्णहस्तात् भ्रंशितोऽपि यावत् न श्वसिति, तावत् स कुम्भकर्णः अङ्गदं नरसिंहपदा नृसिंहचरणरूपेण पाशेन बबन्ध । वसन्ततिलकं वृत्तम् ॥ ३१ ॥

दृष्ट्वेति । नीलः वीरः तमुभयमपि सुग्रीवाङ्गदौ अपीत्यर्थः, ग्रस्तं कुम्भकर्णेनाक्रान्तमित्यर्थः, दृष्ट्वा कुपितः सन् आक्रम्य उत्प्लुत्य रक्षसः कुम्भकर्णस्य स्कन्धे मौलौ शिरसि श्रवणहृदयघ्राणवक्त्रोदरेषु कर्णवक्षःस्थलनासिकामुखोदरेषु तीव्राघातैः, दारुणप्रहारैः दहति पोड़यति स्मेत्यर्थः। तदनु तदनन्तरं तत्र तत्र प्रहारानन्तरमित्यर्थः, क्रव्यादः कुम्भकर्णः स्वेन रूपेण विकलः विह्वस्तः, नितरां व्याकुल इत्यर्थः, अभूत् । वानरेन्द्रौ सुग्रीवाङ्गदौ प्रोत्थितौ प्रकर्षेण उत्तस्थतुः । मन्दाक्रान्ता वृत्तम् ॥ ३२ ॥

लङ्केश्वर इति । लङ्केश्वरो रावणः रणे ज्वलन्तं नीलस्य प्रहारेण नितरां सन्तप्यमानं तं कुम्भकर्णम् अवलोक्य काद-

तूर्णं मुमोच तदुपर्य्यथ लब्धसंज्ञो
भोक्तुं कृतान्त इव नीलनलौ स दध्यौ ॥ ३३ ॥

दम्भोलिः कुम्भकर्णं गिरिमिव तरसाऽपातयज्जानुबन्धं
कण्ठे गाढ़ं विधृत्य स्वभुजगुरुमदं जाम्बवान् उग्ररोषः ।
निर्मुक्तौ तावभूतामभवदथ मरुत्पुष्पवृष्टिस्तदङ्गे
शूलाघातेन रोषाद्रजनिचरभटस्तं निरस्योपतस्थे ॥ ३४ ॥

---

स्विनी मेघमाला तत्सहचरः तत्सहायवानित्यर्थः, आज्ञया तत्-क्षणं जलधरमालामानयन् सन्नित्यर्थः, तस्य कुम्भकर्णस्य उपरि अमृतवारिधाराः सुधोपमजलधाराः तूर्णं शीघ्रं मुमोच ववर्ष इत्यर्थः । अथामृतधारावर्षणानन्तरं स कुम्भकर्णः लब्धसंज्ञः प्राप्तचेतनः सन् कृतान्त इव नीलनलौ भोक्तुं खादितुं दध्यौ चिन्तयामास । वसन्ततिलकं वृत्तम् ॥ ३३ ॥

दम्भोलिरिति । उग्ररोषः तीव्रकोपः जाम्बवान् दम्भोलिः वज्रः गिरिमिव पर्वतमिव स्वभुजयोर्गुरुर्महान् मदो गर्वो यस्य तं कुम्भकर्णं जानुबन्धं जानुभ्यां बद्ध्वा, णमुल्प्रत्ययः, कण्ठे गाढ़ं यथा तथा विधृत्य आक्रम्य तरसा बलेन अपातयत् भूमौ पातितवान् । तौ नीलनलौ निर्मुक्तौ कुम्भकर्णस्य आक्रमणादिति भावः, अभूतां संवृत्तौ । अथानन्तरं तदङ्गे तस्य जाम्बवतः अङ्गे मरुतां देवानां पुष्पवृष्टिः अभवत् अपतदित्यर्थः । ततो रजनिचरभटः राक्षसवीरः कुम्भकर्णः रोषात् क्रोधात् शूलाघातेन शूलप्रहारेण तं जाम्बवन्तं निरस्य निराकृत्य उपतस्थे उत्तस्थावित्यर्थः । कण्ठे गाढ़ं विधृत्येत्यत्र कण्ठं गाढ़ं विरच्येति, उग्ररोष इत्यत्र उग्रवेश इति, शूलाघातेनेत्यत्र गुल्फाघातेनेति, रजनिचरभट इत्यत्र रजनिचरवर इति,

आलोकितो रघुवरेण सलक्ष्मणेन
कालान्तकादिव रिपोः परिशङ्कितेन ।
स्थानं जगाम हनुमान् समरेऽवतीर्य
माहेशमुग्रनरसिंह इवारुणाक्षः ॥ ३५ ॥

मैनाको मेरुशृङ्गे स्थित इव हनुमत्पाणिपद्मे महीध्रः,
कल्पान्ते मन्दराग्रेऽञ्जन इव समरे मुद्गरः कुम्भकर्णः ।
अद्रिं क्रव्यादवीरः प्रहितमनिलजेनाच्छिनत् मुद्गरेण
लाङ्गूलेनाञ्जनेयोऽद्भुतजनितरुषा मुद्गरं द्राक् चकर्ष ॥ ३६ ॥

---

उपतस्थे इत्यत्र उपतस्थाविति च पाठान्तरम् । स्रग्धरा वृत्तम् ॥ ३४ ॥

आलोकित इति । काले प्रलये अन्तकः संहारकः रुद्र इत्यर्थः तस्मादिव रिपोः शत्रोः कुम्भकर्णात् परिशङ्कितेन किमयं विधास्यतीति सञ्जातशङ्केनेत्यर्थः, सलक्ष्मणेन रघुवरेण रामेण आलोकितः दृष्टः, नेत्रेङ्गितेन प्रेरित इति भावः, हनुमान् अरुणाक्षः क्रोधादालोहितनयनः सन् समरे युद्धे अवतीर्य उग्रश्चासौ नरसिंहश्चेति उग्रनरसिंहः भीषणनरसिंहावतारः स इव माहेशं महेशस्य इदं महेश्वरसम्बन्धीत्यर्थः, स्थानं स्थितिं, संहारमूर्त्तिरुद्रवदवस्थानमिति भावः, जगाम प्राप, कालान्तक इव तस्थौ इत्यर्थः । आलोकित इत्यत्र आलक्षित इति पाठः । माहेशम् इत्यत्र माहेश इति पाठे माहेशः महेश्वरावतारः हनूमानित्यन्वयः । वसन्ततिलकं वृत्तम् ॥ ३५ ॥

मैनाक इति । मेरोः सुमेरुपर्वतस्य शृङ्गे मैनाकः तदाख्य-गिरिरिव हनूमतः पाणिरेव पद्मं तत्र महीध्रः पर्वतः स्थितः । कल्पान्ते युगान्ते मन्दरस्याद्रेरग्रे शिखरे अञ्जन इव अञ्जना-

कुम्भकर्णो हनूमन्तं निरुध्य छद्मना बली
रावणाय ददौ भ्रात्रे उपायनमिवादरात् ॥ ३७ ॥

कुम्भकर्णेन आनीतं हनूमन्तं गृहीत्वाऽशोकवने सीतां प्रति रावणः। सीते! पश्य पश्य।

रामः स्त्रीविरहेण हारितवपुस्तच्चिन्तया लक्ष्मणः,
सुग्रीवोऽग्रजसूनुसैन्यभयतो विन्ध्यस्य मूलं गतः।
गण्यः कस्य विभीषणः ? स च रिपोः कारुण्यदैन्यातिथिः
लङ्काद्वारकपाटपाटनपटुर्बद्धोऽयमेकः कपिः ॥ ३८ ॥

---

द्रिरिव समरे युद्धे कुम्भकर्णे कुम्भकर्णहस्ते इति भावः, मुद्गरः अस्त्रविशेषः स्थित इत्यन्वयः। क्रव्यादवीरः राक्षसवीरः कुम्भकर्णः मुद्गरेण अनिलजेन वायुपुत्रेण हनूमता प्रहितं प्रक्षिप्तम् अद्रिं पर्वतम् अच्छिनत् चूर्णयामास। आञ्जनेयः अञ्जनासुतः हनूमान् अद्भुतं यथा तथा जनिता या रुट् रोषः तया; यद्वा अद्भुतं यथा तथा जनिता रुट् कोपः, स्फूर्त्तिरिति भावः यस्य तेन लाङ्गूलेन द्राक् झटिति मुद्गरं चकर्ष आकृष्टवान्। स्रग्धरा वृत्तम् ॥ ३६ ॥

कुम्भकर्ण इति। बली बलवान् कुम्भकर्णः छद्मना कपटेन, रन्ध्रेणेति भावः, हनूमन्तं निरुध्य आक्रम्य भ्रात्रे रावणाय आदरात् उपायनमिव उपढौकमिव ददौ अर्पयामास। अनुष्टुप् वृत्तम् ॥ ३७ ॥

राम इति। रामः स्त्रिया तवेति भावः, विरहेण वियोगेन हारितं नाशितं वपुः शरीरं येन तथाभूतः, मृतोपम इति भावः। लक्ष्मणः तस्य रामस्य चिन्तया हारितवपुरित्यन्वयः। सुग्रीवः अग्रजसूनोः अङ्गदस्य सैन्यानाञ्च अन्येषां

अथ रावणसीतयोरुक्तिप्रत्युक्ती ।

भवित्री रम्भोरु ! "त्रि"दशवदनग्लानिरचिरात्
स ते रामः स्थाता "न" युधि पुरतो लक्ष्मणसखः ।
इयं यास्यत्युच्चै"र्वि"पदमधुना वानरचमूः
लघिष्ठेदं षष्ठाक्षरपरविलोपात् पठ पुनः ॥ ३९ ॥

---

वानराणाञ्चेति भावः, भयतः प्राणभयादित्यर्थः, विन्ध्यस्य गिरेः मूलं तत्प्रदेशं गतः । विभीषणः कस्य गण्यः ? न कस्यापी-त्यर्थः, यतः सः रिपोः शत्रोः रामस्य कारुण्यस्य अनुकम्पायाः, "कृपा दयानुकम्पा स्यात् कारुण्यं करुणा घृणा" इत्यमरः, दैन्येन अतिथिः आश्रित इति भावः । एकः केवलः लङ्काद्वारस्य यः कपाटः आवरणीभूतवस्तुविशेषः तस्य पाटने विध्वंसने पटुः समर्थः अयं कपिर्हनूमान् बद्धः, तस्मान्नैवाधुना रामस्य जयाशेति विचार्य्य मां भजेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३८ ॥

भवित्रीति । हे रम्भोरु ! अचिरात् शीघ्रं त्रिदशानां देवानां वदनग्लानिः मुखमालिन्यं भवित्री भाविनीत्यर्थः । स लक्ष्मणसखः लक्ष्मणसहाय इत्यर्थः, ते तव रामः युधि युद्धे पुरतः अग्रतः, सेनेति शेषः, न स्थाता न स्थातुं शक्ष्यतीति यावत्, इयं वानरचमूः कपिसेना अधुना इदानीम् उच्चैर्महतीं विपदं यास्यति प्राप्स्यति, शीघ्रं निधनं गमिष्यतीत्यर्थः । इति राव-णोक्तिः । रे लघिष्ठ ! नीच ! षष्ठाक्षराणां पराणि अक्षराणि त्रि-न-वि इत्येतानि तेषां विलोपात् विलोपं कृत्वेत्यर्थः, ल्यबर्थे पञ्चमी, इदं पद्यं पुनः पठ उच्चारय, तथाच—"भवित्री रम्भोरु ! दशवदनग्लानिरचिरात् स ते रामः स्थाता युधि पुरतो

अथ चरणयुगं तद्वक्षसि स्थापयित्वा
खरतरनखराग्रैर्गाढ़मुत्पाट्य कर्णौ।
क्रकचकठिनदन्तैरस्य सन्दश्य नासाम्
उदपतदतिवेगादुग्रकर्म्मा कपीन्द्रः॥ ४०॥
सपदि परिनिवृत्तः क्रोधनः कुम्भकर्णः
तुमुलमतुलमन्त्राशेषशस्त्रं व्यतानीत्।
निशितशरनिपातैर्लीलया तत्र रामो
निरभिनददसीयं तत्तदङ्गं क्रमेण॥ ४१॥

---

लक्ष्मणसखः। इयं यास्यत्युच्चैः पदमधुना वानरचमूः” इति सुगमम्। शिखरिणी वृत्तम्॥ ३९॥

अथेति। अथानन्तरम् उग्रकर्म्मा दारुणकर्म्मा कपीन्द्रः हनूमान् तद्वक्षसि तस्य कुम्भकर्णस्य वक्षसि चरणयुगं स्थापयित्वा सुदृढ़मिति भावः, खरतरैः अतितीक्ष्णैः नखराग्रैः कर्णौ गाढ़ं यथा तथा उत्पाट्य उन्मूल्य क्रकचवत् कठिनाः दन्ताः तैः अस्य कुम्भकर्णस्य नासां सन्दश्य छित्त्वेति भावः, अतिवेगात् अतिवेगमाश्रित्येत्यर्थः, यवर्थे पञ्चमी, उदपतत् उत्पपात। एतत् पद्यं सुग्रीवसंग्रामे प्रयोज्यं नात्रेति केचिदाचक्षते। मालिनी वृत्तम्॥ ४०॥

सपदीति। सपदि तत्क्षणं क्रोधनः कोपाक्रान्तः कुम्भकर्णः परिनिवृत्तः सङ्ग्रामं प्रति निवृत्तः सन् अतुलानि अनुपमानि मन्त्रेण अशेषाणि विविधानि शस्त्राणि यस्मिन् तद् यथा तथा तुमुलं युद्धमिति शेषः, व्यतानीत् वितस्तार। रामः, तत्र युद्धे निशितानां शराणां निपातैः, लीलया अवहेलया अमुष्य इदम् अदसीयं कुम्भकर्णसम्बन्धीत्यर्थः, तत्तत् अङ्गं

अत्रावसरे वानराः।

अन्येषां पुरतो मदस्फुटिरियं, यत् कुम्भकर्ण! त्वया
त्रासार्थं क्रियते समस्तमुचिता नास्मासु युक्तं तव।
पश्यन्नप्यपरां पराक्रमगतिं यातोऽसि जातान्धतां
कापाली किमु शङ्करोऽपि मनुजो रामो, वयं वानराः? ॥ ४२ ॥

अत्रान्तरे रघुपतिः शरयुग्ममैन्द्रं
द्राक् कुम्भकर्णनिधनाय रणे मुमोच।
भित्त्वा विवेश हृदयं धरणीमथैकं
मूर्द्धानमुद्धतमखण्डयदस्य चान्यम् ॥ ४३ ॥

---

हस्तपदादिकं क्रमेण निरभिनत् निर्बिभेद, निकृत्तवानित्यर्थः। मालिनी वृत्तम् ॥ ४१ ॥

अन्येषामिति। हे कुम्भकर्ण! अन्येषां पूर्वं त्वया निर्जितानामिति भावः, पुरः अग्रतः यत् त्रासार्थं तेषामन्येषां भीतिप्रदर्शनार्थं समस्तं क्रियते इयं मदस्फुटिः गर्वप्रकटनम् उचिता युक्ता, अस्मासु तव न युक्तं, गर्वप्रकटनमिति शेषः, पराक्रमगतिं विक्रमपद्धतिम् अपराम् अन्यविधां, न हि सर्वत्र सर्वैर्जयो लभ्यते इति भावः, पश्यन्नपि जातान्धतां जन्मान्धतां, नितरां विवेकराहित्यमिति भावः, यातः गतोऽसि, शङ्करोऽपि कापाली कपालधारी किमु? रामः मनुजः मानवः किमु? वयं वानराः किमु? यथा शङ्करः कापालिकव्रती निन्दितचरित इति भावः, न, तथा रामोऽपि मनुजः मनुष्यधर्म्मा न, वयमपि वानरयोनौ उत्पन्ना अपि तत्प्रकृतयो नेति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४२ ॥

अत्रेति। अत्रान्तरे अस्मिन्नवसरे रघुपतिः रामः रणे

छिन्ने कुम्भकर्णमूर्द्धि पतति हनूमान् वदति।
धीरं धारय कूर्म्मराज! धरणीं सार्द्धं फणिस्वामिना
दिङ्नागाः! कुरुत स्थिरान् कुलगिरीन् दन्तैरुदग्रैः चणम्।
यस्मादेतदकाण्डखण्डनगलद्रक्तौघमत्युन्नतं
कृत्तं रामशरोत्करैः पतति यत्तत् कौम्भकर्णं शिरः॥ ४४॥
सद्यो राघवमल्लभल्लदलितग्रीवाप्रकाण्डं पतत्
निःसङ्गं द्रुहिणप्रणामुरतुलं दंष्ट्राकरालं शिरः।

---

कुम्भकर्णस्य निधनाय संहाराय द्राक् झटिति ऐन्द्रम् इन्द्र-दैवतं शरयुग्मं मुमोच तत्याज। अथ तच्छरद्वयमोचनानन्तरम् एकं शरम् अस्य कुम्भकर्णस्य हृदयं भित्त्वा धरणीं पृथ्वीं विवेश, अन्यं शरम् उद्धतम् उग्रं मूर्द्धानम् अखण्डयत् चकर्त्त। वसन्त-तिलकं वृत्तम्॥ ४३॥

धीरमिति। हे कूर्म्मराज! फणिस्वामिना नागराजेन, शेषनागेनेत्यर्थः, सार्द्धं सह धरणीं पृथिवीं धीरं दृढं यथा तथा धारय, हे दिङ्नागाः! दिग्गजाः! उदग्रैः उन्नतैः दन्तैः कुल-गिरीन् "महेन्द्रो मलयः सह्यः शुक्तिमान् पारियात्रकः। विन्ध्यश्च हिमवांश्चैव सप्तैते कुलपर्वताः॥" इत्युक्तान् चणं स्थिरान् निश्चलान् कुरुत, यस्मात् अकाण्डेन आकस्मिकेन खण्डनेन कर्त्तनेन गलन् निःसरन् रक्तौघः शोणितसमूहः यस्मात् तथाभूतं रामस्य शरोत्करैः शरसङ्घैः कृत्तं छिन्नम् अत्युन्नतं यदेतत् कुम्भकर्णस्य इदं कौम्भकर्णं कुम्भकर्णसम्बन्धि शिरः, तत् पतति, युष्मासु अस्मिन्नवसरे प्रमत्तेषु एतत्पातेन सृष्टिभङ्गः स्यादिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ४४॥

सद्य इति। हनूमता सद्यः सपदि राघव एव मल्लः वीरः

द्राक् शाखामृगचक्रचूर्णनभयादादाय तारापथात्
प्रक्षिप्तश्च महार्णवे हनुमता दृष्टश्च गत्वा सुरैः ॥ ४५ ॥
देवाः ! सर्वे विमानान्यपनयत रवेः स्यन्दनो यातु दूरं
रे रे शाखामृगेन्द्राः ! परिहरत रणप्राङ्गणं राक्षसाश्च ! ।
वेगस्रस्ताञ्जनाद्रिप्रतिनिधिरवधिः सर्वविस्मापकानां
लङ्कातङ्कैकहेतुर्निपतति नभसः कौम्भकर्णः कबन्धः ॥ ४६ ॥

---

तस्य भल्लेन अस्त्रविशेषेण दलितः ग्रीवाप्रकाण्डः महती ग्रीवेत्यर्थः, यस्य तथोक्तं, "प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि" इत्यमरः, निःसङ्गं नास्ति सङ्गः आसङ्गः, कण्ठेनेति भावः, यस्य तत् कण्ठसङ्गवर्जितमित्यर्थः, कण्ठात् विच्युतं न तु तत्र लग्नमिति भावः, द्रुहिणस्य ब्रह्मणः प्रणप्ता प्रपौत्रः तस्य कुम्भकर्णस्येत्यर्थः, ब्रह्मणः पुत्रः पुलस्त्यः तत्पुत्रः विश्रवाः, तत्पुत्रः कुम्भकर्ण इत्यस्य ब्रह्मणः प्रपौत्रत्वमिति भावः, दंष्ट्राभिः प्रकटिताभिरिति भावः, करालं भीषणं पतत् शिरः शाखामृगाणां वानराणां चक्रस्य सैन्यस्य चूर्णनं पेषणम्, उपरिपातेनेति भावः, तस्माद्भयं तस्मात् हेतोः तारापथात् नक्षत्रमार्गात्, अन्तरीक्षादित्यर्थः, द्राक् झटिति आदाय गृहीत्वा महार्णवे महासमुद्रे प्रक्षिप्तश्च सुरैः देवैः गत्वा दृष्टश्च । शार्दूलविक्रीडितं वृत्तम् ॥ ४५ ॥

देवा इति । हे सर्वे देवाः ! विमानानि देवयानानि अपनयत अपसारयत, रवेः सूर्य्यस्य स्यन्दनः रथः दूरं यातु गच्छतु । रे रे शाखामृगेन्द्राः ! वानरवीराः ! राक्षसाश्च ! रणप्राङ्गणं समरभूमिं परिहरत परित्यजत । वेगेन, वज्रेणेति

उत्क्रान्तोऽपि स्वदेहात् प्रवरसुरवधूदोर्भिराकृष्यमाणः
प्राणत्राणाय भर्त्तुः पुनरपि समरापेच्छया नारुरोह ।
संगीतैर्नारदाद्यैर्मृदुमुरजरवैः स्तूयमानो विमानं
वीरः संग्रामधीरो रणशिरसि कथं कथ्यते कुम्भकर्णः ? ॥ ४७ ॥

---

पाठान्तरे वज्रेण वज्राघातेनेत्यर्थः, स्रस्तः विच्युतः योऽञ्जनाद्रिः तस्य प्रतिनिधिः सदृशः ; यद्वा स प्रतिनिधिर्यस्य तथाभूतः सर्वेषां विस्मापकानां विस्मयकरपदार्थानाम् अवधिः सीमाभूतः, लङ्कायाः आतङ्को भयं तस्य एकः अद्वितीयः, मुख्य इत्यर्थः, हेतुः कारणं कुम्भकर्णस्य अयं कौम्भकर्णः कुम्भकर्णसम्बन्धी कबन्धः छिन्नशिराः देहः नभसः अन्तरीक्षात् निपतति । स्रग्धरा वृत्तम् ॥ ४६ ॥

अत्रोत्प्रेक्षते, उत्क्रान्त इति ।—संग्रामेषु धीरः अचलः वीरः, य इति शेषः, स्वदेहात् उत्क्रान्तोऽपि विनिःसृतोऽपि प्रवराणाम् उत्तमानां सुरवधूनां देवाङ्गनानां दोर्भिः भुजैः आकृष्यमाणः तथा नारदाद्यैः मुनिभिः मृदुः अल्पाल्पः मुरजस्य मृदङ्गविशेषस्य रवः येषु तैः सङ्गीतैः सुष्ठु गानैः स्तूयमानः प्रशस्यमानः सन् भर्तुः स्वामिनः रावणस्य, भ्रातुरिति पाठान्तरं, त्राणाय रक्षणाय, रामादिति भावः, पुनरपि समरापेच्छया संग्रामाभिलाषेण विमानं देवयानं न आरुरोह स कुम्भकर्णः रणशिरसि कथं कथ्यते ? कथं वर्ण्यते ? नैव वर्णयितुं शक्यते इत्यर्थः । रणशिरसीत्यत्र शिव शिव स इति पाठान्तरे शिव शिवेति विस्मये । अत्र व्यञ्जकप्रयोगाभावात् प्रतीयमानोत्प्रेक्षा । रणभूमौ पतन् कबन्धः कुम्भकर्णोऽयं पुनरायात इवेति लोकैरमन्यतेति भावः । स्रग्धरा वृत्तम् ॥ ४७ ॥

प्रविश्य मन्दोदरी ।

लङ्कानाथ ! तवानुजो युधि हतो रामेण, रत्नाकरं
संलङ्घ्य प्लवगैस्तथा परिवृता पूर्द्वारि तेऽवस्थिताः ।
रामेऽपि स्मृतिगोचरे सति यदा तत्रैव रोषान्विता
सीता सम्प्रति सम्मता किमु भवेत् ? तूष्णीं तदैष स्थितः ॥ ४८ ॥

रावणः । अहह ! हतविधे ! मरुच्चन्द्रेत्यादिकं पठति । ततः सत्वरमाखण्डलखण्डनदृष्टप्राचण्ड्यं मेघनादं समराय वृणोति स्म । (ख) मेघनादोऽपि समरावतरणं नाटयति । वानराः पलायन्ते ।

मेघनादः ।

क्षुद्राः ! सन्त्रासमेते विजहित हरयः ! क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परमसी सायका निष्पतन्तः ।

---

लङ्कानाथेति । हे लङ्कानाथ ! तव अनुजः कुम्भकर्णः रामेण युधि युद्धे हतः, तथा प्लवगैः रत्नाकरं समुद्रं संलङ्घ्य पूर्लङ्का परिवृता आच्छादिता, ते प्लवगाः द्वारि अवस्थिताः । रामे स्मृतिगोचरे स्मृते सति यदा तत्रैव तदवस्थायामेव सीता रोषान्विता कुपिता, त्वयि इति शेषः, सम्प्रति इदानीं सम्मता अनुरक्ता भवेत् किमु ? नैव अनुरक्ता भवेदित्यर्थः । तदा तस्मिन् काले, मन्दोदर्य्या एवमुक्ते इत्यर्थः, एषः रावणः तूष्णीं स्थितः न किञ्चिदुवाचेत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४८ ॥

(ख) आखण्डलेति । आखण्डलस्य इन्द्रस्य खण्डनेन पराजयेन दृष्टं प्राचण्ड्यम् औद्धत्यं यस्य तम् इन्द्रजितमित्यर्थः, वृणोति स्म न्ययुङ्क्तेत्यर्थः ।

सौमित्रे! तिष्ठ, पात्रं त्वमसि न हि रुषां, नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥४९॥

सुग्रीवमारुतिनलाङ्गदमित्रनीला
वर्षासु कालजलदाचरितं प्रचण्डम्।
तं रावणिं गगनमण्डलमास्थितं नो
पश्यन्ति, तान् प्रहरति स्म शरैरनेकैः ॥ ५० ॥

---

क्षुद्रा इति। हे क्षुद्राः हरयः वानराः! एते यूयं सन्त्रासं भयं विजहित त्यजत, अमी क्षुण्णौ दलितौ, विदीर्णौ इत्यर्थः, शक्रस्य इन्द्रस्य इभकुम्भौ ऐरावतकुम्भौ यैः ते सायकाः बाणाः युष्माकं देहेषु निष्पतन्तः सन्तः लज्जां दधति प्राप्नुवन्ति, हे सौमित्रे! लक्ष्मण! तिष्ठ, त्वं रुषां कोपानां, मदीयानामिति शेषः, पात्रं भाजनं नासि न भवसि, ननु भोः! अहं मेघनादः, जातमात्र एव मेघवत् गर्जितवानित्यस्य मेघनाद इति संज्ञा; किञ्चिद् ईषत् भ्रूभङ्गलीलया भ्रूभङ्गिरूपविलासेन नियमितः बद्धः जलधिः येन तथाभूतं रामम् अन्वेषयामि अनुसन्दधामि, राम एव मम प्रतिपक्षः सम्भवति न तु यूयमिति भावः। स्रग्धरा वृत्तम् ॥ ४९ ॥

सुग्रीवेति। सुग्रीवः मारुतिर्हनूमान् नलः अङ्गदः मित्रः तदाख्यो वानरभेदः नीलः ते वर्षासु कालः कृष्णवर्णः यो जलदः तद्वदाचरितम् आचरणं यस्य तथाभूतं गगनमण्डलमास्थितं प्रचण्डं तं रावणिं मेघनादं नो पश्यन्ति नावलोकयन्ति, प्रत्युत अनेकैः विविधैः शरैः तान् सुग्रीवादीन् प्रहरति स्म आजघान। मेघान्तर्लीनम् अनवरतं शरान् वर्षन्तं तं सुग्रीवादयः न अवलोकयाञ्चक्रुरिति तात्पर्य्यम्।

मायारथं समधिरुह्य नभःस्थलस्थो
गम्भीरकालजलदध्वनिरुज्जगर्ज ।
बाणैरपातयदथो फणिपाशबन्धैः
तौ मेरुमन्दरगिरी परिभूतशक्रः ॥ ५१ ॥

अत्रान्तरे सरमा राक्षसी रावणाज्ञया रामलक्ष्मणयोः इमां गतिं सीतायै कथितवती ।

सीता । हा आर्य्यपुत्र ! हा वत्स लक्ष्मण ! मदर्थे युवयोरेतादृशी गतिः ।

किं भार्गवच्यवनगोतमकश्यपानां
वाणी वशिष्ठमुनिलोमशकौशिकानाम् ।

---

सुग्रीवमारुतिनलाङ्गदनीलमुख्या बाष्पान्धकारजलदान्तरितमिति, शरैरनेकैरित्यत्र स घोरबाणैरिति च पाठान्तरम् । वसन्ततिलकं वृत्तम् ॥ ५० ॥

मायारथमिति । अथानन्तरं परिभूतः शक्रो येन स इन्द्रजिदित्यर्थः, मायया कल्पितो रथः मायारथः, मध्यपदलोपिसमासः, तं समधिरुह्य समारुह्य नभःस्थले तिष्ठतीति तथोक्तः गम्भीरः कालजलदस्येव ध्वनिर्यस्य स सन् उज्जगर्ज उच्चैर्ननाद । तथा फणिपाशबन्धैः फणिपाशः नागपाशः तेन बन्धः येषु तैः बाणैः शरैः मेरुमन्दरगिरी सुमेरुमन्दराचलनिभावित्यर्थः, तौ रामलक्ष्मणौ अपातयत् बद्ध्वा पातयामासेत्यर्थः । परिभूतशक्र इत्यत्र पविनेव शक्र इति पाठे पविना वज्रेण शक्र इन्द्र इवेत्यर्थः । वसन्ततिलकं वृत्तम् ॥ ५१ ॥

किमिति । अहह ! इति खेदे । भार्गव-च्यवन-गोतम-कश्यपानां तथा वशिष्ठमुनि-लोमश-कौशिकानाञ्च यतस्त्वं

जातानृताप्यहह! याऽऽलपिता च वै मे
त्वं मग्नचूचुककुचा सधवा भवित्री ॥ ५२ ॥
अमरपतिजिता तौ नागपाशेन बद्धौ
अथ गरुड़निपातोन्मुक्ततत्पाशबन्धौ।
विदधतुरतियुद्धं, तत्र रामानुजन्मा
शितशरहृतजीवं मेघनादं चकार ॥ ५३ ॥
जनमुखरणवार्त्ता श्रूयते राक्षसेन्द्र!
तव तनयसुरेशः पातितो लक्ष्मणेन।

---

मग्नम् आभोगान्तर्लीनं चूचुकं कुचाग्रं ययोः तादृशौ "चूचुकन्तु कुचाग्रं स्यात्" इत्यमरः, कुचौ यस्याः तथाभूता, अतः सधवा भवित्री स्याः, न कदाचिद् वैधव्यं लप्स्यसे इति भावः, इति मे मम या आलपिता उक्ता वाणी अनृतापि मिथ्यैव च वै जाता किम्?। वाचेति पाठे वाचा वागित्यर्थः। आवन्त-स्त्रीलिङ्गः। उक्तञ्च सामुद्रिके—"आभोगमग्नशिरसौ यस्याः स्तः सततं कुचौ। सा नारी सधवा नित्यं न कदाचित् तद-प्रिया॥" इति। वसन्ततिलकं वृत्तम् ॥ ५२ ॥

अमरेति। अमरपतिजिता इन्द्रजिता नागपाशेन बद्धौ तौ रामलक्ष्मणौ अथ कियत्कालानन्तरं गरुड़निपातेन वैन-तेयागमनेन उन्मुक्तः परित्यक्तः स पाशबन्धः याभ्यां तथोक्तौ सन्तौ अतियुद्धं महारणं विदधतुः चक्रतुः। तत्र महारणे रामानुजन्मा लक्ष्मणः मेघनादं शितेन सुतीक्ष्णेन शरेण हृतः जीवः यस्य तं चकार निजघानेत्यर्थः। मालिनी वृत्तम् ॥ ५३ ॥

जनेति। हे राक्षसेन्द्र! रावण! लक्ष्मणेन तव तनय-सुरेशः पुत्रेन्द्रः, पुत्रश्रेष्ठ इत्यर्थः, पातितः निहतः, इति जन-

वदति च दशवक्त्रो रुष्टचित्तः सभायां
मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ॥ ५४ ॥

रावणः सनिर्वेदम् ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः,
सोऽप्यत्रैव निहन्ति राक्षसकुलं, जीवत्यहो रावणः ।
धिग्धिक् शक्रजितं, प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ? ॥ ५५ ॥

---

मुखेभ्यः रणवार्त्ता श्रूयते, इत्युक्ते केनचित्, दशवक्त्रः रावणः रुष्टचित्तः आकुलितहृदयः सन् सभायां मशकगलकरन्ध्रे हस्तियूथं प्रविष्टञ्च इति वदति कथयति स्मेत्यर्थः, भूते वर्त्तमानवत् प्रयोगश्चिन्त्यः । मशकगलविवरे हस्तियूथप्रवेश इव मेघनादस्य लक्ष्मणेन निधनं सर्वथा असम्भवमेवेति भावः । हृष्टचित्त इति च पाठान्तरं, तथा पाठे दैवो विचित्रा गतिरिति हृष्टचित्तत्वमिति भावः । मालिनी वृत्तम् ॥ ५४ ॥

न्यक्कार इति । मे मम, त्रिभुवनविजेतुरिति भावः, अरयः शत्रव इति यत् अयमेव न्यक्कारः धिक्कारः, तत्रापि तथा न्यक्कारेऽपि असौ अरिः तापसः अतिक्षुद्र इति भावः, ननु सोऽस्तु किन्तेन ? इत्याह, स इति ।—सोऽपि तापसोऽपि अत्रैव लङ्कायामेव, आगत इति शेषः । नन्वागतस्तिष्ठतु एकतस्तेन किम् ? इत्यत आह, निहन्तीति ।—राक्षसकुलं राक्षसवंशम्, एकं द्वौ त्रीन् वा नेति भावः, निहन्ति निर्मूलयति, न तु प्रहरतीति भावः । अहो आश्चर्य्यं रावणः जीवति प्राणान् धारयति, इत्थं गतेऽपीति शेषः । शक्रजितम् इन्द्रजितं धिक् धिक् पुनः पुनः निन्दामीत्यर्थः, "धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः, यः शक्रं

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोत्तोलनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णाञ्चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः ॥ ५६ ॥

---

जितवान् सोऽपि एनं क्षुद्रं न हतवानिति निन्दावीजमिति भावः। प्रबोधितं विद्यते अस्येति प्रबोधितवान् प्रबोधित इति यावत् तेन कुम्भकर्णेन किम्? न किमपि तेन कर्त्तुं शक्तमिति भावः, स्वर्ग एव ग्रामटिका क्षुद्रो ग्रामः, अल्पार्थे टिप्रत्यये ततः स्वार्थे कन्प्रत्ययः, तस्या विशेषेण यथेच्छमिति भावः, लुण्ठनं तेन वृथा उच्छूनाः उद्दृप्ताः तैः एभिः भुजैः विंशत्या, समिति शेषः, किम्? न किमपि कर्त्तुं शक्यते इत्यर्थः। अत्र विधेयस्य न्यक्कारस्य अयमित्यनुवाद्यप्रयोगानन्तरं प्रयोज्यत्वम् "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इति नये-नोचितमपि तदकरणात् विधेयाविमर्षदोषः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ५५ ॥

मूर्ध्नामिति। उद्वृत्तं गर्वितं यत् कृत्तं कर्त्तनं तेन अविरलम् अनल्पम् अजस्रमित्यर्थः, गलात् कण्ठात् गलतां निः-सरतां रक्तानां संसक्ताभिः अविरताभिः धाराभिः प्रवाहैः धौतः क्षालितः यः ईशस्य शम्भोः अङ्घ्रिः चरणः तस्य प्रसादेन अनु-कम्पया उपनतः उपगतः जयः सर्वोत्कर्षः तेन जगति भुवने जातः मिथ्या महिमा प्रभावः येषां तथोक्तानां मूर्ध्नां शिरसां कैलासस्य पर्वतस्य उत्तोलने उद्धरणे या इच्छा अभिलाषः तस्या व्यतिकरः सम्बन्धः तत्पिशुनः तत्सूचकः उत्सर्पी अति-प्रवृद्धः यो दर्पः गर्वः तेन उद्धुराणाम् उत्कटानाम् एषां दोष्णां

हतेषु रावणपुत्रेषु सर्वेषु रावणं प्रति मन्दोदरी ।

दृष्ट्वा दैन्यं भगिन्यास्त्रिशिरस उतवा मातुलस्यापि नाशं
तालानां भेदनं तत् कपिवरहननं तच्च सुग्रीवसख्यम् ।
कर्म्माण्युद्यानहन्तुर्जलनिधितरणे यो न जातस्तदानीं
सोऽयं नष्टे कुलेऽस्मिन् कथमिह कमितुर्जायते ते विवेकः ? ॥५७॥

राव । रामाय प्रतिपक्षकक्षशिखिने दास्यामि वा मैथिलीं
युद्धे राघवसायकैरभिहतः स्वर्गं गमिष्यामि वा ।

---

भुजानाञ्च इह अस्मिन् समये एतत् फलं किम् ? यत् नगर्य्यां लङ्काया रक्षणे प्रयासः क्लेशः, असामर्थ्यमिति भावः । स्रग्धरा वृत्तम् ॥ ५६ ॥

दृष्ट्वेति । भगिन्याः सूर्पणखायाः दैन्यं नासाकर्णच्छेदन-जनितं कातर्य्यमित्यर्थः, त्रिशिरसः उतवा अथवा मातुलस्यापि मारीचस्यापि नाशं, तालानां, सप्तानामिति शेषः, भेदनं तत् प्रसिद्धं, कपिवरस्य बालिनः हननं बधं, तच्च सुग्रीवेण सख्यं मानुषस्य वानरसङ्गमसम्भवमिति भावः, तथा उद्यानहन्तुः अशोकवनभङ्गकारिणो हनूमत इत्यर्थः, जलनिधितरणे समुद्र-लङ्घने विषये कर्म्माणि चेष्टितानि दृष्ट्वा तदानीं तस्मिन् काले यो विवेकः बोधः न जातः, नष्टे अस्मिन् कुले राक्षसवंशे इह इदानीं कमितुः सीताकामुकस्य ते तव सोऽयं विवेकः कथं जायते ? तव अधुना विवेकोदयः न युक्तः इति भावः । स्रग्धरा वृत्तम् ॥ ५७ ॥

रामायेति । प्रतिपक्षाः शत्रव एव कक्षाः शुष्कतृणानि तत्र शिखी अग्निः तस्मै शत्रुघातिने इत्यर्थः, रामाय मैथिलीं सीतां दास्यामि प्रत्यर्पयिष्यामि वा, युद्धे राघवस्य सायकैः शरैः

नीतिज्ञे ! कथयस्व देवि ! कतरः पक्षो गृहीतस्त्वया
तन्मे ब्रूहि यथास्मदीयमभवत् मन्मात्रशेषं कुलम् ॥ ५८ ॥

रे काल ! त्वमकाललब्धविभवः स्वैरं सकामो भव
स्वैरं भूषय सर्वदा शवशिरःश्रेणीभिरङ्गं स्वकम् ।
तस्माद्राघवमेत्य शंस, सहसा युद्धाय वै सम्प्रति
सन्नद्धः करवालभीषणभुजो ह्यस्त्येव लङ्केश्वरः ॥ ५९ ॥

हेलोत्तोलितचन्द्रचूड़गिरयस्त्रैलोक्यदर्पापहाः
लङ्कातङ्कहराः, पुरन्दरपुरस्त्रीवर्गवन्दीकृताः ।

---

अभिहतः निहतः सन् स्वर्गं गमिष्यामि वा, हे नीतिज्ञे ! देवि ! अनयोर्मध्ये त्वया कतरः पक्षः कल्पः गृहीतः ? श्रेयानिति आदृतः ? इत्यर्थः, तत् मे मह्यं मम वा ब्रूहि कथय, यथा यतः अस्मदीयं कुलम् अहमेव शेषो यस्य तत् मन्मात्रशेषम् अभवत्, इदानीं त्वमेवात्र मुख्यं कल्पमुपदिशेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५८ ॥

रे इति । रे काल ! त्वम् अकाले अकाण्डे लब्धः विभवः येन तथोक्तः सहसा लब्धसमृद्धिरित्यर्थः, स्वैरं स्वच्छन्दं सकामः सिद्धमनोरथः भव, शवानां प्रेतानां शिरःश्रेणीभिः मुण्डमालाभिः स्वकम् अङ्गं शरीरं सर्वदा स्वैरं यथेच्छं भूषय अलङ्कुरु, अलङ्करोषीत्यर्थः, तस्मात् तव प्रागुक्तालङ्कारस्य आवश्यकत्वादित्यर्थः, राघवं रामम् एत्य प्राप्य, तत्समीपं गत्वेत्यर्थः, सहसा हठात् सम्प्रति अधुना युद्धाय संग्रामकरणार्थं शंस कथय, करवालैः भीषणाः भुजा यस्य तथाभूतः लङ्केश्वरः रावणः सन्नद्धः बद्धपरिकरः हि अस्त्येव, सर्वदा इति शेषः । कालं प्रति आक्षेपवचनमिदम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५९ ॥

वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गबद्धस्पृहाः
सोत्कर्षं दशकन्धरस्य जयिनः खेलन्ति दोःकेलयः ॥ ६० ॥

अथ रामं प्रति हनूमान् दर्शयति ।

नीलोऽयं दशमुखपाणिपङ्कजानाम्
अङ्केषु भ्रमरतनुभ्रमं तनोति ।
अप्येको दशमुखमौलिपीठिकासु
द्राक् कुर्वन् परिषदिन्द्रनीललीलाम् ॥ ६१ ॥

---

हेलेति । हेलया अवलीलया उत्तोलितः उद्धृतः चन्द्रचूड़स्य हरस्य गिरिः कैलासो यैः तथोक्ताः, त्रयाणां लोकानां समाहारः त्रिलोकी सा एव त्रैलोक्यं, स्वार्थे ष्यञ्प्रत्ययः, तस्य दर्पम् अपघ्नन्तीति तादृशाः त्रिभुवनजयिन इति भावः, लङ्काया आतङ्कं भयं मत्कृतमिति भावः हरन्तीति तथा, पुरन्दरपुरस्य स्वर्गस्य स्त्रीवर्गः नारीसङ्घः वन्दीकृतः बलात् हृत्वा कारायां बद्ध इत्यर्थः यैः तथाभूताः वैदेह्याः सीतायाः कुचकुम्भयोः ये कुङ्कुमरसाः काश्मीरलेपाः तेषु व्यासङ्गे समासक्तौ बद्धा स्पृहा येषां तथोक्ताः जयिनः सर्वजेतारः दशकन्धरस्य रावणस्य दोष्णां भुजानां केलयः क्रीड़नानि, चेष्टितानीति यावत्, सोत्कर्षम् अत्युत्कर्षेण खेलन्ति क्रीड़न्ति, राजन्ते इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६० ॥

नील इति । अयं नीलः तदाख्यो वानरसेनापतिः एकोऽपि द्राक् झटिति दशमुखस्य रावणस्य मौलयः किरीटा एव पीठिका आसनविशेषाः तासु परिषदिन्द्रनीललीलां सभास्थितनीलकान्तमणिविलासं कुर्वन् सन् दशमुखस्य रावणस्य पाणिपङ्कजानां करपद्मानाम् अङ्केषु अभ्यन्तरेष्विति यावत्,

भङ्क्त्वा काञ्चनशेखरं मणिगणानाकीर्य्य विष्वक् ततः
छित्त्वा कुण्डलमण्डलं विकलयन् कल्पद्रुपुष्पस्रजम् ।
अङ्घ्रिभ्यामभिलङ्घ्य क्लृप्तरुधिरासारं पुनः पुप्लुवे
दुर्मत्तस्य दशाननस्य शिरसि क्रीड़न् प्लवङ्गाधिपः ॥ ६२ ॥
किञ्च । येयं विभीषणे मुक्ता शक्तिः क्रूरेण रक्षसा ।
लक्ष्मणेन गृहीता सा प्रियेव निजवक्षसा ॥ ६३ ॥

---

भ्रमरतनुभ्रमं भ्रमरशरीरभ्रान्तिं तनोति विस्तारयति, प्राप्नोतीत्यर्थः । नील उत्पत्य रावणशिरःसु पतितः रावणेन बाहुभिर्बद्ध इति भावः । प्रहर्षिणी वृत्तम् ॥ ६१ ॥

भङ्क्त्वेति । प्लवङ्गाधिपः वानरसेनानीः नीलः दुर्मत्तस्य मदोद्धतस्य दशाननस्य शिरसि क्रीड़न् विचरन् काञ्चनशेखरं हेमकिरीटं, हेमकिरीटानीत्यर्थः, जातावेकवचनं, भङ्क्त्वा चूर्णयित्वेत्यर्थः, ततः तस्मात् काञ्चनशेखरात् मणिगणान् रत्ननिचयान् विष्वक् समन्तात् आकीर्य्य निक्षिप्य कुण्डलमण्डलं कर्णभूषणसमूहं छित्त्वा कल्पद्रुपुष्पस्रजं कल्पतरुकुसुममालां विकलयन् छिन्दन् अङ्घ्रिभ्यां चरणाभ्याम् अभिलङ्घ्य प्रहत्य क्लृप्तः रचितः रुधिरासारः शोणितधारासम्पातो यस्मिन् तत् यथा तथा पुनः पुप्लुवे उत्पपात । शार्दूलविक्रीड़ितं वृत्तम् ॥६२॥

येयमिति । क्रूरेण दारुणेन रक्षसा रावणेन या इयं शक्तिः अस्त्रविशेषः विभीषणे विभीषणं प्रतीत्यर्थः, विषये सप्तमी, मुक्ता प्रहिता, सा शक्तिः प्रियेव प्रेयसी कान्तेव लक्ष्मणेन निजवक्षसा स्वेन उरसा गृहीता, रावणः शक्त्या लक्ष्मणं जघानेति भावः । उपमालङ्कारः । अनुष्टुप् वृत्तम् ॥ ६३ ॥

अथ रावणशक्तिविह्वले लक्ष्मणे रामविलापः ।

वत्सोत्तिष्ठ धनुर्गृहाण रिपवः सैन्यं विनिघ्नन्ति नः
किं शेषेऽद्य, निराकृताः किमरयः, प्रत्याहृता किं प्रिया ? ।
भ्रातर्देहि वचो जहीहि हृदयभ्रान्तिं नृपं विद्धि मां
कैकेयि प्रियसाहसे ! सुतवधान्मातः ! कृतार्था भव ॥ ६४ ॥
तातः स्वर्गमुपागतः प्रियसखी दैवेन दूरीकृता
नीता दुष्टनिशाचरेण बलिना पत्नी मनोहारिणी ।

---

वत्सेति । हे वत्स लक्ष्मण ! उत्तिष्ठ गात्रोत्थानं कुरु, धनुः गृहाण, रिपवः शत्रवः नः अस्माकं सैन्यं विनिघ्नन्ति नाशयन्ति । अद्य इदानीं किं किमर्थं शेषे ? निद्रासि ? अरयः शत्रवः निराकृताः निर्जिताः किम् ? नैव निर्जिता इत्यर्थः, प्रिया जानकी प्रत्याहृता किम् ? नैव प्रत्याहृतेत्यर्थः । हे भ्रातः ! वचः वाक्यं देहि कथयेत्यर्थः, हृदयभ्रान्तिं चित्तमोहं जहीहि त्यज, मां नृपं राजानं, तव ज्येष्ठत्वात् प्रभुमिति भावः, विद्धि जानीहि, राज्ञा पृष्टेन निरुत्तरेण न स्थातव्यमिति भावः । हे प्रियसाहसे ! साहसकारिणि ! कैकेयि ! मातः ! सुतस्य पुत्रस्य लक्ष्मणस्य वधात् वधं निशम्येत्यर्थः, यवर्थे पञ्चमी, कृतार्था सिद्धमनोरथा भव । शार्दूलविक्रीडितं वृत्तम् ॥ ६४ ॥

तात इति । तातः पिता, "तातस्तु जनकः पिता" इत्यमरः, स्वर्गम् उपागतः मृत इत्यर्थः, दैवेन दुर्भाग्येण प्रियसखी प्रिया सङ्गिनी मनोहारिणी पत्नी दूरीकृता राज्यात् अपनीता सती बलिना बलवता दुष्टनिशाचरेण रावणेन नीता

भ्राता सर्वगुणैकरत्ननिलयः सन्दिग्धदेहोऽधुना
दुःखाद्दुःखपरम्परापरिचयं दैवेन नीता वयम् ॥ ६५ ॥
सुग्रो । पातालान्न समुद्धृतो वत बलिर्नीतो न मृत्युः क्षयं
नोन्मृष्टं शशलाञ्छनस्य मलिनं ? नोन्मूलिता व्याधयः ।
शेषस्यापि धरां विधृत्य न हृता भारावली क्षम्यतां
चेतःसत्पुरुषाभिमानपदवी मिथ्यैव किं खिद्यसे ? ॥६६॥
सुग्रीवप्रबोधितस्य रामस्य वचनम् ।
भ्रातुर्वहिस्त्रिभुवने न हि बन्धुरस्ति
प्राणार्द्धभागवटितः परिवेष एषः ।

---

हृतेत्यर्थः । सर्वे गुणा एव एकानि मुख्यानि रत्नानि तेषां निलयः आधारः भ्राता लक्ष्मणः अधुना साम्प्रतं सन्दिग्धदेहः जीवितसंशय इत्यर्थः । अतः वयं दैवेन विधिना दुःखात् दुःखपरम्पराभिः परिचयः सङ्गः तं नीताः प्रापिताः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६५ ॥

पातालादिति । बलिः दैत्यराजः पातालात् न समुद्धृतः, वत खेदे, मृत्युः क्षयं न नीतः न प्रापितः, शशलाञ्छनस्य चन्द्रस्य मलिनं कलङ्कः न उन्मृष्टं नापनीतं व्याधयः रोगाः न उन्मूलिताः न निःशेषिताः, न उन्मूलयितुं शक्ता इत्यर्थः, शेषस्य अनन्तनागस्यापि धरां पृथ्वीं विधृत्य, स्थितस्येति शेषः, भारावली भारबाहुल्यं न हृता नापनीता, दैवेनेति सर्वत्र कर्त्तृपदमूहनीयम् ; कोऽतिवर्त्तते दैवमिति भावः, तस्मात् क्षम्यतां सह्यतां, चेतसः मनसः सन् वर्त्तमानः यः पुरुषाभिमानः अहमेव पुरुषः नाहं दैवस्य वश इत्यभिमानपदवी अहङ्कारधर्म मिथ्या अलीक एव, किं कथं खिद्यसे ? क्षुभ्यसीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६६ ॥

हा लक्ष्मण! क्षितिभुजो रघुनन्दनस्य
त्वं यासि कालसदनं किमुपेक्षसे माम्?॥ ६७॥
धनुषि निपुणशिक्षा वेदमन्त्रेषु दीक्षा
जनकनृपतिगेहे चाग्रतो मे विवाहः।
इदमनुचितमस्मिन्नग्रजे विद्यमाने
शमनभवनयाने यद्भवानग्रगामी॥ ६८॥
यास्यामि कालसदनं सह लक्ष्मणेन
सीतापि यास्यति भयाद्दशकण्ठगेहम्।

---

भ्रातुरिति। त्रिभुवने त्रिलोक्यां भ्रातुः वहिः पृथगित्यर्थः, बन्धुः न हि अस्ति नैव विद्यते। एष भ्रातेत्यर्थः, क्षितिभुजो राज्ञः रघुनन्दनस्य रामस्य प्राणानामर्द्धभागेन घटितः निर्मितः परिवेषः अवयवभेद इत्यर्थः। हा लक्ष्मण! त्वं कालसदनं यमालयं यासि गच्छसि, मां किं कथम् उपेक्षसे? न गणयसीत्यर्थः। वसन्ततिलकं वृत्तम्॥ ६७॥

धनुषीति। मे मम धनुषि धनुर्वेदे निपुणशिक्षा सुष्ठु शिक्षा, वेदमन्त्रेषु दीक्षा अध्ययनं, जनकनृपतिगेहे विवाहश्च अग्रतः प्राक्, तवेति शेषः, तवाग्रत एवाहं धनुर्वेदं वेदमन्त्रञ्च शिक्षितवान् परिणीतवांश्चेति निष्कर्षः, अस्मिन् अग्रजे मयि विद्यमाने वर्त्तमाने, जीवतीत्यर्थः, भवान् शमनभवनयाने यमालयगमने विषये अग्रगामी अग्रेसरो भवतीति यत् इदमनुचितमयुक्तमित्यर्थः। मालिनी वृत्तम्॥ ६८॥

यास्यामीति। अहं लक्ष्मणेन सह कालसदनं शमनगृहं यास्यामि गमिष्यामि, सीतापि भयात् आवयोर्वियोगेन भयं

यास्यन्ति वानरचमूपतयः स्वदेशान्
हा हन्त ! नास्ति गतिरेव विभीषणस्य ॥ ६८ ॥
अयि राघवाविति पुरा मधुरं
परिपीय पौरमुनिलोकवचः ।
अयि राघवेति गरलप्रतिमं
कथमद्य रामहतकः पिबति ? ॥ ७० ॥
महाशय ! मया सार्द्धं त्वमरण्यमुपागतः ।
न गच्छामि त्वया साकं नाकमप्यहमत्रपः ? ॥ ७१ ॥

---

प्राप्येत्यर्थः, दशकण्ठस्य गेहं यास्यति गमिष्यति, वानरचमूपतयः कपिसेनाध्यक्षाः स्वदेशान् यास्यन्ति गमिष्यन्ति, हा हन्त खेदे, विभीषणस्यैव गतिः उपायो नास्ति । वसन्ततिलकं वृत्तम् ॥ ६८ ॥

अयीति । अयीति कोमलामन्त्रणे, अयि राघवौ ! रामलक्ष्मणौ ! इति मधुरं पौराणां नगरवासिनां मुनीनां लोकानां जनानां वचः वाक्यं पुरा पूर्वं परिपीय आस्वाद्य अयि राघव ! इति गरलप्रतिमं विषोपमं, वच इति शेषः, रामहतकः हतभाग्यो रामः कथं पिबति ? केन प्रकारेण आस्वादयति ? लक्ष्मणरहितः रामः कथं जीविष्यति ? इति भावः । प्रमिताक्षरा वृत्तं, "प्रमिताक्षरा सजससैः कथिता" इति लक्षणात् ॥ ७० ॥

महाशयेति । हे महाशय ! महानुभाव लक्ष्मण ! त्वं मया सार्द्धम् अरण्यम् उपागतः उपनीतः । अहम् अत्रपः निर्लज्जः त्वया साकं सह नाकमपि स्वर्गमपि, कुस्थानं दूरे तिष्ठत्विति भावः, न गच्छामि ? सुहृद्ध्वंसोऽकृतज्ञोऽहमिति भावः । अनुष्टुप् वृत्तम् ॥ ७१ ॥

ओषधानयनप्रस्तावे नलादीनां वाक्यम् ।

नलस्त्रिरात्रात् पुनरेति गत्वा तत्राह मैन्दद्विविदौ द्विरात्रम् ।
सुग्रीवनीलौ पुनरेकरात्रं वीराङ्गदो यामचतुष्टयेन ॥ ७२ ॥

अथ महौषधिमानेतुं गते हनूमति रामवाक्यम् ।

मातर्निशीथिनि ! चिरं भव दीर्घयामा
तातान्धकार ! वपुषा गगनं पिधेहि ।
नाथ प्रभाकर ! रुचां न कुरु प्रचारं
यावन्न दृष्टिपथमेति समीरसूनुः ॥ ७३ ॥

---

नल इति । नलः त्रिरात्रात् तिसृभिः रात्रिभिरित्यर्थः, त्र्यहादिति भावः, गत्वा ओषधिपर्वतमिति भावः, पुनरेति ओषधिं गृहीत्वेति भावः, मैन्दस्य द्विविदस्य द्विरात्रं दिनद्वय-मध्ये इति यावत्, सुग्रीवस्य नीलस्य पुनः किन्तु एकरात्रम् एकेनाह्नेत्यर्थः, वीरश्चासौ अङ्गदश्चेति वीराङ्गदः यामचतुष्टयेन एकेन दिनेन एकया रात्र्या वेत्यर्थः, गत्वा पुनरेति इति तत्र तेषु मध्ये आह इति सर्वसम्बन्धः । उपजाति वृत्तम् ॥ ७२ ॥

मातरिति । हे मातः निशीथिनि ! रजनि ! चिरं व्याप्य दीर्घयामा दुर्गतिवाह्यप्रहरा भव । हे तात अन्धकार ! वपुषा शरीरेण गगनम् आकाशं पिधेहि आच्छादय । हे नाथ प्रभाकर ! सूर्य्य ! त्वं रुचाम् आलोकानां प्रचारं न कुरु, समीरसूनुः हनूमान् यावत् दृष्टिपथं, ममेति शेषः, न एति न आगच्छति, हनूमदागमनपर्य्यन्तं भवन्तः कृपया स्वस्व-व्यापारेषु शैथिल्यं कुर्वन्तु, नो चेत् सूर्य्योदयमात्र एव लक्ष्मणस्य प्राणविगमो भविष्यतीति भावः । वसन्ततिलकं वृत्तम् ॥७३ ॥

अथ हनूमदानीतौषधिविशल्ये सौमित्रौ समुत्थिते
रावणं प्रति शुकसारणवाक्यम् ।

हत्वा मायामयीं तां रजनिचरवधूं, भीमरूपां ह्रदस्थां
ग्राहीं प्रोन्मथ्य वीर्य्यात् प्रथममथ बलं रक्षसां मर्द्दयित्वा ।
जित्वा गन्धर्व्वकोटिं झटिति ततमणिज्वालमादाय शैलं
प्राप्तः श्रीमद्धनूमान्, पुनरपि भविता लक्ष्मणस्ते पुरस्तात् ॥७४॥

अथैतदाकर्ण्य समरमवतरति रावणे राक्षसवानराणां वाक्यम् ।

अयमनुकृतवल्लीफुल्लतापिञ्छगुच्छो
रणभुवमवतीर्णः कार्मुकी रामभद्रः ।

---

हत्वेति । प्रथमं प्राक् मायामयीं कपटप्रचुरां तां रजनिचरवधूं राक्षसीं, पथि विघ्नभूतत्वेन रावणेन रचितामिति भावः, हत्वा विनाश्य भीमरूपां भीषणाकृतिं ह्रदस्थां ह्रदवर्त्तिनीं ग्राहीं कुम्भीरीं वीर्य्यात् बलात् प्रोन्मथ्य संहृत्य अथानन्तरं रक्षसां बलं सैन्यं, पथि स्वगमनविघ्नार्थं सन्नद्धमिति भावः, मर्द्दयित्वा निहत्य श्रीमान् हनूमान् गन्धर्वाणां कोटिं निचयानित्यर्थः, तच्छैलस्थितामिति भावः, जित्वा तता विस्तृता मणीनां रत्नानां ज्वाला प्रभा यत्र तं शैलं द्रोणाद्रिं गन्धमादनं वा आदाय गृहीत्वा प्राप्तः उपस्थितः, अतः पुनरपि लक्ष्मणः विगतशल्य इति भावः, तव पुरस्तात् रणाग्रवर्त्तीत्यर्थः, भविता भविष्यति । स्रग्धरा वृत्तम् ॥ ७४ ॥

अयमिति । अयं कार्म्मुकी धन्वी अत एव अनुकृतः वल्ल्या लतया सहितः फुल्लः विकस्वरः तापिञ्छगुच्छः तमालस्तवकः येन तथाभूतः रामभद्रः, वल्लीधनुषोः तमालरामाङ्गयोश्च

अयमपि दशकण्ठः कुण्ठिताम्भोदशोभः ।
परिकलयति रामं भ्रान्तकोदण्डदण्डम् ॥ ७५ ॥

राव । रे रे वीरप्रवीराः ! कुरुत रणमितः किं पलायध्वमिति ?
सन्नद्धीभूय शस्त्रैर्भजत रिपुगणान् को भयस्यावकाशः ? ।
हत्वाऽद्याहं हनूमद्रणविजयिबलं जाम्बवन्तञ्च नीलं
तान् वा प्रौढ़ाङ्गदादीन् करकलितधनू राममन्वेषयामि ॥
॥ ७६ ॥

रामः । भो लङ्केश्वर ! दीयतां जनकजा, रामः स्वयं याचते,
कोऽयं ते मतिविभ्रमः ? स्मर नयं,नाद्यापि किञ्चित् कृतम् ।

---

साम्यादिति भावः, रणभुवं समरभूमिम् अवतीर्णः युद्धार्थं प्रवृत्त इत्यर्थः । कुण्ठिता सङ्कोचिता, निर्जितेत्यर्थः, अम्भोदस्य मेघस्य शोभा येन तथोक्तः, मेघोपम इत्यर्थः, अयं दशकण्ठोऽपि रावणोऽपि भ्रान्तः वलयितः कोदण्डदण्डः धनुर्यष्टिर्यस्य तं रामं परिकलयति अभिगच्छति । उपमालङ्कारः । मालिनी वृत्तम् ॥ ७५ ॥

रे रे इति । रे रे वीरेषु प्रवीराः प्रकृष्टवीराः ! रणं कुरुत युध्यध्वमित्यर्थः, किं कथम् इतः रणक्षेत्रात् पलायध्वं पलायनं कुरुत ? एते यूयं सन्नद्धीभूय बद्धपरिकरा भूत्वा शस्त्रैः रिपुगणान् शत्रुनिवहान् भजत युञ्जीत, भयस्य अवकाशः अवसरः कः ? नास्ति भयमित्यर्थः, अद्य अहं हनूमतः रणविजयि बलं जाम्बवन्तं नीलञ्च तान् प्रौढ़ा बलोत्कटाः ये अङ्गदादयः तान् वा हत्वा निहत्य करैः हस्तैः, कलितं गृहीतं धनुः येन तथाभूतः सन् रामम् अन्वेषयामि अनुसन्दधामि ; यद्वा करकलितधनूराममित्येकं पदं करेण कलितं गृहीतं धनुर्येन स चासौ रामश्चेति विग्रहः तम् अन्वेषयामि । स्रग्धरा वृत्तम् ॥ ७६ ॥

नैवञ्चेत् खरदूषणत्रिशिरसां कण्ठस्रजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः॥ ७७॥
अत्रान्तरे रावणहनूमतोरुक्तिप्रत्युक्ती।
साधु वानर! गच्छ त्वं श्लाघ्यं जीवसि भूतले।
धिगस्तु मम जीवित्वं यत्त्वं जीवसि रावण!॥ ७८॥
राव। चक्रे चक्रं मुरारेर्मयि कुपितवधूकुण्डलाक्षेपलीलाम्
अस्मिन्नंसे विभिन्नस्खलितविसलताकाण्डवत् कालदण्डः।

---

भो इति। भो लङ्केश्वर! जनकजा सीता दीयतां प्रत्यर्प्यतां रामः स्वयं याचति प्रार्थयते। अयं ते तव कः मतिविभ्रमः? बुद्धिमोहः? नयं नीतिं, "मातृवत् परदारेषु परद्रव्येषु लोष्ट्रवत्। आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः॥" इत्युक्तमिति भावः, स्मर मनसि आलोचयेत्यर्थः। अद्यापि इदानीमपि न किञ्चित् तव शरीरं प्रतीति भावः, कृतम्, एवम् इत्थं मदुक्तरूपं चेत् यदि न, करोषीति शेषः, तदा खरस्य दूषणस्य त्रिशिरसश्च तेषां कण्ठास्रजा कण्ठशोणितेन पङ्किलः सकर्दमः, आविल इत्यर्थः, एष मम धनुषः ज्याबन्धेन मौर्वीसङ्गमेन बन्धूकृतः मित्रीकृतः पत्री शरः न सहिष्यते न क्षमिष्यते। शार्दूलविक्रीडितं वृत्तम्॥ ७७॥

साध्विति। हे वानर! साधु गच्छ, त्वं भूतले श्लाघ्यं जीवसि। इति रावणोक्तिः। रे रावण! मम जीवित्वं जीवनं धिगस्तु निन्दितं भवतु, यत् यतः त्वं जीवसि, त्वामनिघ्नतो जीवनं विफलमिति भावः। अनुष्टुप् वृत्तम्॥ ७८॥

चक्रे इति। हे राम! मुरारेः विष्णोश्चक्रं सुदर्शनाख्यमित्यर्थः, मयि मदङ्गे इत्यर्थः, कुपिता या वधूः, कान्ता तस्याः

वक्षस्यूर्जस्वि वज्रं गतमिव च तुलां स्त्रैणहारप्रहारैः
यत्सत्यं पत्रिणस्ते मम वपुषि घने मन्मथास्त्रीभवन्ति ॥ ७९ ॥

रामस्य दिव्यास्त्रोपक्रमे रावणवाक्यम् ।

आग्नेयास्त्रं हृदयदवथुर्वारुणं शस्त्रमुच्चैः
धारावाष्पः, पवनशरतां यान्ति निश्वासदण्डाः ।

---

कुण्डलेन कर्णभूषणेन यः आक्षेपः प्रहारः तस्य लीलां विलासं चक्रे अकार्षीत्, कालदण्डः यमदण्डः अस्मिन् अंसे मत्स्कन्धदेशे इत्यर्थः, टलितः विप्लुतः, मृदित इत्यर्थः, यो विसलताकाण्डः मृणालवल्लीदण्डः तद्वत् विभिन्नः विदलितः, विफलतां गत इत्यर्थः । ऊर्जस्वि ऊर्जस्वलं, महाबलमित्यर्थः, वज्रम् ऐन्द्रमिति भावः, वक्षसि, ममेति शेषः, स्त्रीणामयं स्त्रैणः स्त्रीसम्बन्धीत्यर्थः, यो हारः स्रक् तस्य प्रहारैः तुलां साम्यं गतमिव च प्राप्तमिव, ते तव पत्रिणः शराः घने निविड़े, कठिने इत्यर्थः, मम वपुषि शरीरे मन्मथस्य कामस्य अस्त्राणि मन्मथास्त्राणि कुसुमानीति भावः, अमन्मथास्त्राणि मन्मथास्त्राणि भवन्ति मन्मथास्त्रीभवन्ति अभूततद्भावे च्विप्रत्ययः, कुसुमसदृशानि भवन्तीत्यर्थः, इति यत् तत् सत्यं, तव शरा न मां किञ्चिदपि व्यथयन्तीति भावः । अत्र प्रथमे पादे कथमन्यस्य धर्म्ममन्यो वहत्विति चक्रकुण्डलयोर्बिम्बप्रतिबिम्बभावप्रत्यायनात् निदर्शनालङ्कारः, "सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत्,सा निदर्शना ॥" इति लक्षणात्, द्वितीये पादे उपमा, तृतीये उत्प्रेक्षा, चतुर्थे च रूपकमित्येषां संसृष्टिः । स्रग्धरा वृत्तम् ॥ ७९ ॥

तज्जानक्या किमिव न कृतं रक्षसां स्वामिनो मे
दिव्यैरस्त्रैर्यदयमपरं तापसः कर्त्तुकामः ॥ ८० ॥

रामः । रे रे निशाचरपते ! त्वरितं गृहाण
बाणासनं त्रिदशदर्पहरं शरञ्च ।
निर्वापयामि विरहाग्निमहं प्रियाया
मन्दोदरीतरलनेत्रजलप्रवाहैः ॥ ८१ ॥

---

आग्नेयास्त्रमिति । अयं तापसः दिव्यैराग्नेयादिभिरस्त्रैः यदपरं यदन्यत् कर्त्तुकामः कर्त्तुमिच्छुः, रक्षसां स्वामिनो राक्षसेश्वरस्य मे मम जानक्या तत् किमिव न कृतं सर्वमेव कृतमित्यर्थः, तथाहि हृदयदवथुः हृत्सन्तापः आग्नेयास्त्रं तत्-कार्य्यमिति भावः, उच्चैरतिमात्रः धारावाष्पः अश्रुधारा वारुणं वरुणदैवतं शस्त्रं तत्कार्य्यमिति भावः, जातमित्युभयत्रान्वयः निश्वासदण्डाः दीर्घा निश्वासा इत्यर्थः, पवनशरतां वायव्यास्त्रतां यान्ति प्राप्नुवन्ति, वायव्यास्त्रकार्य्यतया परिणमन्तीत्यर्थः, दिव्यास्त्रकार्य्याणि हृदयसन्तापादीनि जानकीविरहे मया अनुभूतानि तापसेन रामेन पुनरपरं किमेभिर्विधास्यति इति भावः । मन्दाक्रान्ता वृत्तम् ॥ ८० ॥

रे रे इति । रे रे निशाचरपते ! रावण ! त्वरितं शीघ्रं त्रिदशानां देवानां दर्पहरं गर्वापहं, जयसाधनमिति भावः, बाणासनं शरासनं, धनुरित्यर्थः, शरञ्च गृहाण, अशस्त्रं न हन्यादिति शास्त्रादिति भावः । अहं मन्दोदर्य्याः तरलैः गलितैरिति यावत्, नेत्रजलानां प्रवाहैः प्रियायाः सीतायाः विरहाग्निं निर्वापयामि शीतलयामि, त्वां हत्वेति शेषः । वसन्ततिलकं वृत्तम् ॥ ८१ ॥

रावणः ।

स्त्रीमात्रं ननु ताड़का भृगुसुतो वृद्धस्तपस्वी द्विजो
मारीचो मृग एव भीतितरलो वाली पुनर्वानरः ।
भोः काकुत्स्थ ! विकत्थसे किमधुना ? वीरो जितः कस्त्वया ?
दोर्दण्डस्तरुणायते यदि पुनः कोदण्डमारोपय ॥ ८२ ॥

जातश्चण्डांशुवंशे त्वमसि, पुनरहं पद्मयोनेः प्रपौत्रो
राहुक्रूराकृतिर्मे स्फुरति दशमुखी, त्वं किलैकाननेन्दुः ।
बाहूनां विंशतिर्मे विफलितकुलिशा, दोर्युगं निर्जितं ते
स्पर्द्धां बध्नासि मोघां रघुतनय ! मया पौरुषे वा कुले वा ॥८३॥

---

स्त्रीमात्रमिति । भोः काकुत्स्थ ! ताड़का स्त्रीमात्रं ननु स्त्रीमात्रमेव, भृगुसुतः परशुरामः वृद्धः स्थविरः तपस्वी द्विजः ब्राह्मणः, मारीचः भीतितरलः भयाकुलः मृग एव, वाली वानरः पुनः वानर एव । एतेषां जये किं पौरुषम् ? इति भावः । अधुना किं विकत्थसे ? श्लाघसे ? त्वया को वीरः जितः ? न कोऽपीत्यर्थः, यदि दोर्दण्डः भुजदण्डः तरुणायते तरुणवदाचरति, तवेति शेषः, यदि बाहुवीर्य्यं तवास्तीति भावः, तदा पुनः कोदण्डं कार्मुकम् आरोपय शरेण सन्धेहीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८२ ॥

जात इति । त्वं चण्डांशोः सूर्य्यस्य वंशे कुले जातोऽसि, अहं पुनः पद्मयोनेः ब्रह्मणः प्रपौत्रः । मे मम दशानां मुखानां समाहारः दशमुखी, समाहारद्विगुः, राहुवत् क्रूरा भीषणा आकृतिर्यस्याः सा, तथाभूता स्फुरति दीप्यते, त्वं किल त्वन्तु एकमेव आननं मुखम् इन्दुरिव यस्य तथाभूतः एकेनैव राहुणा इन्दुर्ग्रस्यते किं पुनर्दशभिरिति ध्वनिः । मे मम बाहूनां विंशतिः विफलितं व्यर्थीकृतं कुलिशं वज्रं यया तादृशी, ते तव दोर्युगं बाहुद्वयं

रामः। सत्यं ते पद्मयोनिः प्रथमकुलगुरुः, किन्तु तज्जन्मभूमिः
पद्मस्यैवोपजीव्यो मम तु विजयते वंशवीजं विवस्वान्।
धिक् ते वक्त्राणि तानि प्रकटयसि पुरा यानि जीवन्मृतानि
स्पष्टं व्याचष्ट बाली मम युधि पुरतो बाहुबाहुल्यवीर्य्यम्
॥ ८४ ॥
छित्त्वा मूर्ध्नः किमिति स हतो धूर्ज्जटिर्यद्यमीषां
दोःस्तम्भानां त्रिभुवनजयश्रीरियं वास्तवी ते।

---

निर्जितं पराभूतमेवेत्यर्थः। हे रघुतनय! पौरुषे पुरुषकारे वा कुले वा वंशे वा, मया सहेत्यर्थः, स्पर्द्धां मोघां विफलां बध्नासि करोषि, नैव त्वं केनापि मम प्रतिस्पर्द्धीति वाक्यार्थः। स्रग्धरा वृत्तम् ॥ ८३ ॥

सत्यमिति। पद्मयोनिः ब्रह्मा ते तव प्रथमः आद्यः कुलगुरुः कुलप्रतिष्ठापक इत्यर्थः, सत्यम् अवितथमित्यर्थः। तु किन्तु मम वंशवीजं कुलगुरुः विवस्वान् सूर्य्यः तस्य ब्रह्मणः, तव कुलगुरोरिति भावः, जन्मभूमिः जन्मस्थानस्य पद्मस्य उपजीव्यः जीवनाधायकः, विकासक इति भावः, विजयते सर्वोत्कर्षेण वर्त्तते। ते तव तानि वक्त्राणि वदनानि प्रकटयसि प्रकाशयसि, कीर्त्तयसीति यावत्, यानि पुरा पूर्वं जीवन्ति मृतानि वा जीवतस्तव मृतानि, हराराधने स्वेनैव कर्त्तनादिति भावः, धिक् निन्दामीत्यर्थः, बाली युधि युद्धे मम पुरतः बाहूनां बाहुल्यस्य विंशतेरिति भावः, वीर्य्यं, तवेति शेषः, स्पष्टं सुव्यक्तं व्याचष्ट कथितवान्, त्वज्जेता बाली मया निहत इत्यनेनैव तव वीर्य्यं प्रकटितमिति भावः। स्रग्धरा वृत्तम् ॥८४॥

छित्त्वेति। यदि ते तव अमीषां दोःस्तम्भानां बाहुदण्डानाम् इयं त्रिभुवनजयश्रीः त्रिलोकविजयलक्ष्मीः वास्तवी

मूर्द्धानो वा न खलु भवतो दुर्लभाः सम्भवेयुः
यद्देवस्य त्वमसि जगतां शिल्पिनोऽपि प्रपौत्रः ॥ ८५ ॥

अथ श्रीरामचन्द्रस्य हस्तयोरुक्तिप्रत्युक्ती ।

रे रे दक्षिणहस्त ! साधु समये भोक्तुं भवानग्रणी-
र्युद्धे मां पुरतो निधाय भवता किं पृष्ठतो गम्यते ? ।
नैवं वाम ! दयानिधे रघुपतेरागत्य कर्णान्तिकं
पृच्छाम्येकमसंशयं दशमुखः किं बध्य एवेत्यसौ ? ॥ ८६ ॥

---

वस्तुगत्या सिद्धा, स्वाभाविकीत्यर्थः, तदा मूर्ध्नः शिरांसि छित्त्वा स धूर्जटिः शम्भुः किमिति किमर्थं वृतः ? प्रार्थितः ? त्रिभुवनजयश्रियमिति शेषः । यत् यतः त्वं जगतां शिल्पिनः स्रष्टुः देवस्य ब्रह्मणः प्रपौत्रः, अतः भवतः मूर्द्धानः शिरांसि वा न खलु नैव दुर्लभाः दुष्प्रापाः सम्भवेयुः । ब्रह्मा हि स्वप्रपौत्रं छिन्नशिरसं दृष्ट्वा सृष्टौ स्वस्य सामर्थ्यात् अवलीलया पुनः शिरोभिः योजयितुं शक्नोतीति धियैव त्वं शिरांसि निकृत्तवान् न तु वास्तवसाहसेनेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ८५ ॥

रे रे इति । रे रे दक्षिणहस्त ! साधु भद्रं, समये भोजनकाले भवान् भोक्तुम् अग्रणीः अग्रेसरः, भवतीति शेषः, भवता युद्धे मां पुरतः अग्रतः निधाय नियुज्य किं कथं पृष्ठतः पश्चात् गम्यते ? पलाय्यते ? । इति वामहस्तोक्तिः । रे वाम ! हस्तेति शेषः, एवम् इत्थं, त्वया यदुच्यते तदिति भावः, न, नाहं पलाये इति यावत्, दयानिधेः दयामयस्य,कमपि हिंसितुमनिच्छत इति भावः, रघुपतेः रामस्य कर्णान्तिकं कर्णसमीपम् आगत्य असौ दशमुखः रावणः असंशयं निश्चितमेव किं बध्यः ? हन्तव्यः किम् ? इति एकं केवलं पृच्छामि, दयामयस्यास्य अयं बध्यो

अथ रामेण छिद्यमाने रावणशिरसि जनानां वाक्यम्।

एतन्नूनं दशमुखशिरः स्रंसते कण्ठपीठात्
चक्षुर्दत्ते(र्धत्ते) धनुषि सशरे चैतदुग्राट्टहासम्।
एतद्रामं प्रति च कुरुते विभ्रमं क्रोधवाचा
एतल्लङ्कामभिचरति च स्त्रीजनाश्वासनाय॥ ८७॥

यस्यां यस्यां ककुभि रभसात् स्पष्टदंष्ट्राकरालं
लङ्काभर्त्तुर्निपतति शिरो भल्लनिर्लूनकण्ठम्।
तस्यां तस्यां तरलितदृशा स्वर्गिवर्गेण नष्टं
प्राक्संस्कारक्रमभयवता योजनानां शतानि॥ ८८॥

---

न वेति ज्ञानार्थमेव पृच्छतो मे प्रयाणं न तु पलायनमिति भावः। इति दक्षिणहस्तोक्तिः। शार्दूलविक्रीड़ितं वृत्तम्॥८६॥

एतदिति। नूनमुत्प्रेक्षे, एतत् दशमुखस्य शिरः कण्ठपीठात् स्रंसते भ्रश्यति, एतत् अपरमित्यर्थः, सशरे धनुषि चक्षुः दत्ते अर्पयति, धत्ते इति वा पाठः। एतत् अन्यत् उग्राः भीषणाः अट्टहासाः उच्चहासविशेषा यस्य तत्; यद्वा उग्राट्टहासम् एतत् सशरे धनुषि चक्षुः दत्ते इत्यन्वयः। एतत् तृतीयमिति भावः, क्रोधवाचा कटूक्त्या इत्यर्थः, रामं प्रति विभ्रमं विरूपं, विकटरूपतामित्यर्थः, कुरुते दर्शयतीत्यर्थः। एतत् चतुर्थमिति यावत्, स्त्रीजनानाम् आश्वासनाय सान्त्वनाय लङ्काम् अभिचरति च लङ्कां प्रति निरीक्षते चेति भावः। मन्दाक्रान्ता वृत्तम्॥ ८७॥

यस्यामिति। भल्लेन बाणविशेषेण निर्लूनः निकृत्तः कण्ठो यस्य तत् स्पष्टाभिः प्रकटिताभिः दंष्ट्राभिः करालं भीषणं लङ्काभर्त्तुः रावणस्य शिरः यस्यां यस्यां ककुभि दिशि रभसात्

ते भूमौ पतिताः पुनर्नवनवानालोक्य मूर्ध्नोऽपरान्
नो खि(च्छि)द्यन्त इमे न इत्यपि चिरं प्रीत्याट्टहासं दधुः ।
येऽहंपूर्विकया प्रहारमभजन् मां छिन्धि मां छिन्धि मां
छिन्धोत्युक्तिपराः पुरारिपुरतो लङ्कापतेर्मौलयः ॥८९॥

हत्वा ते दशमं शिरो दशमुख ! प्रायो नभोमण्डले
दृष्टो देवगणैः समं सुरपतिस्तातश्च यस्मान्मया ।
तस्मात्त्वां पुनरन्यजन्मनि रिपुं वाञ्छाम्यहन्त्वा(वा)लपन्
रामश्चुम्बति रावणस्य वदनं सीतावियोगातुरः ॥ ९० ॥

---

वेगात्, "रभसो वेगहर्षयोः" इत्यमरः, निपतति, तस्यां तस्यां ककुभि स्वर्गिवर्गेण देववृन्देन प्राक् संस्कारः पूर्वधारणा तस्य क्रमेण अनुसारेण यद्भयं तद्विद्यते अस्येति तद्वता अत एव तरलितदृशा चपलदृष्टिना, कातरचक्षुषा सता इत्यर्थः, योजनानां शतानि नष्टं पलायितम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८८ ॥

ते इति । ये लङ्कापतेः रावणस्य मौलयः शिरांसि अहंपूर्विकया अहमहमिकया मां छिन्धि मां छिन्धि मां छिन्धि इत्युक्तिपराः वदन्तः पुरारेः हरस्य पुरतः अग्रतः प्रहारं कर्त्तनम् अभजन् प्रापुः, ते भूमौ पतिताः पुनर्नवनवान् अपरान् मूर्ध्नः शिरांसि छिद्यमानानिति शेषः, आलोक्य दृष्ट्वा इमे न उच्छिद्यन्ते न उच्छिद्यन्त एव न केवलं वयमिति शेषः, इति धियापि प्रीत्या आनन्देन चिरं बहुक्षणम् अट्टहासम् उच्चैर्हासविशेषं दधुः हसन्ति स्मेत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८९ ॥

हत्वेति । हे दशमुख ! ते तव दशमं शिरः हत्वा निकृत्य नभोमण्डले आकाशमार्गे मया यस्मात् यतः प्रायः बाहुल्येन देवगणैः समं सह सुरपतिरिन्द्रः तातः पिता च दृष्टः अव-

छिन्ना छिन्ना नवीनाऽभवदथ बहुशो राक्षसाधीशशीर्ष-
श्रेणीत्यालोक्य मुग्धः सकलकपिकुलैर्मातलेर्वाक्यजातैः ।
बुद्ध्वा तं मर्मवध्यं ज्वलितशिखिनिभं ब्रह्मबाणं गृहीत्वा
भित्त्वा वक्षःस्थले तं क्षयमनयदथो रावणं रामचन्द्रः ॥ ९१ ॥

रणशिरसि सुरस्त्रीमुक्तमन्दारदामा
स्वयमयमवतीर्णो लक्ष्मणन्यस्तहस्तः ।
विरचितजयशब्दो वन्दिभिः स्यन्दनाङ्का-
द्दिनकरकुललक्ष्मीसत्कृतो रामचन्द्रः ॥ ९२ ॥

---

लोकितः, तस्मादहं त्वाम् अन्यजन्मनि पुनर्जन्मान्तरे पुनः रिपुं शत्रुं वाञ्छामि अभीप्सामि इति आलपन् कथयन् सीतावियोगातुरः रामः रावणस्य वदनं चुम्बति तदानीमाकाशमण्डले देवगणवृतदेवेन्द्रेण सह उपस्थितस्य पितुर्दर्शनेन आनन्दातिशयात्, रावणशिरः सदेवगणपितृदर्शनहेतुरतीव प्रियमिति बोधेनेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ९० ॥

छिन्नेति । अथानन्तरं राक्षसाधीशस्य रावणस्य शीर्षश्रेणी छिन्ना छिन्ना पुनः पुनश्छिन्नापीत्यर्थः, बहुशः बहुवारं नवीना पुनरुत्थितेत्यर्थः, अभवत् इति आलोक्य दृष्ट्वा सकलकपिकुलैः सह मुग्धो विस्मितः रामचन्द्रः मातलेः इन्द्रसारथेः, रावणयुद्धे रामं मदीयरथमारोपयेति देवेन्द्रादेशात् आगतस्येति भावः, वाक्यजातैः वचनसमूहैः, तं रावणं मर्मवध्यं मर्मणि हृदये वध्यः तं न तु शिरश्छेदनवध्यमिति भावः, बुद्ध्वा विदित्वा अथो अनन्तरं ज्वलितशिखिनिभं ज्वलदग्निसमं ब्रह्मबाणं ब्रह्मास्त्रं गृहीत्वा तं, रावणं वक्षःस्थले उरसि भित्त्वा निर्भिद्य क्षयम् अनयत् नीतवान् । स्रग्धरा वृत्तम् ॥ ९१ ॥

रणेति । दिनकरस्य सूर्य्यस्य कुललक्ष्मीः वंशश्रीः तया सत्कृतः

नेपथ्ये ।

सर्वा गीर्वाणवन्द्या ! व्रजत निजगृहान् रन्तुमाधोरणा ! द्राक्
स्वर्गेभस्तम्भशालां नय सुरकरिणं यामिका ! यात देवाः ! ।
भूयो देवद्रुमाणां ननु भवतु वने नन्दने सन्निवेशो
द्वारि क्षिप्तं यदेतद्दशवदनशिरः किङ्करैरन्तकस्य ॥ ८३ ॥

---

अलङ्कृत इत्यर्थः, अयं रामचन्द्रः रणशिरसि रणाग्रे सुरस्त्रीभिः देवाङ्गनाभिः मुक्तं वृष्टं मन्दारदाम देवतरुविशेषपुष्पमाला यस्मिन् तथोक्तः, लक्ष्मणे न्यस्तः अर्पितः हस्तो येन सः धृत-लक्ष्मणहस्त इत्यर्थः, वन्दिभिः स्तुतिपाठकैः विरचितः उच्चरितः जयशब्दः जयध्वनिर्यस्य तथाभूतः सन् स्यन्दनाङ्कात् देवेन्द्रप्रेरित-रथोत्सङ्गात् स्वयम् अवतीर्णः अवरुरोह । मालिनी वृत्तम् ॥८२॥

सर्वा इति । हे गीर्वाणवन्द्याः ! वन्दीभूताः देवाङ्गनाः ! गीर्वाणवन्द्य इत्यत्र गीर्वाणवध्व इति पाठे गीर्वाणानां वध्वः कामिन्यः ! इत्यर्थः, सर्वा यूयं रन्तुं विहर्त्तुं निजगृहान् स्वालयान् व्रजत गच्छत, आधोरणाः ! हस्तिपालाः ! "आधोरणा हस्तिपकाः" इत्यमरः, यूयं द्राक् झटिति सुरकरिणम् ऐरावतं स्वर्गेभस्तम्भशालां स्वर्गेस्थितहस्तिशालां, स्वर्गे ततस्तम्भशाला-मिति पाठे स्वर्गे तस्य सुरकरिणः स्तम्भशालां बन्धनागार-मित्यर्थः, नयत प्रापयत । हे यामिकाः ! प्रहरिणः ! प्रहरपालने नियुक्ता इति यावत्, देवाः ! यूयं यात गच्छत, स्वस्वावास-मिति शेषः । ननु भोः ! नन्दने वने सुरोद्याने भूयः पुनः देवद्रुमाणां पारिजातादीनां सन्निवेशो भवतु, यत् यस्मात् एतत् दशवदनस्य रावणस्य शिरः किङ्करैः, यमस्येति शेषः,

अथ मन्दोदरीविलापः।

असुराधिपमयतनया दशमुखपत्नी सुरेन्द्रजिज्जननी।
अहमनुकम्प्या कपिभिर्धिग्दैवं विसदृशारम्भम् ॥ ८४ ॥

क्वाम्भोधिः, क्व च सेतुबन्धनविधिः, क्वावस्थितिर्भूभृतां ?
लङ्केशः क्व च, राघवो जलनिधेः पारे क्व वा दुस्तरे ? ।
किष्किन्ध्याद्रिनिवासिनोऽपि कपयः, क्वैते निशाचारिणः ?
कार्य्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम् ॥ ८५ ॥

---

अन्तकस्य यमस्य द्वारे क्षिप्तं नीतं, यतो रावणभयं सर्वेषामपगतमिति भावः। स्रग्धरा वृत्तम् ॥ ८३ ॥

असुरेति। अहम् असुराधिपस्य मयस्य तनया कन्या, दशमुखस्य रावणस्य पत्नी अग्रमहिषी, सुरेन्द्रजितो मेघनादस्य जननी माता इदानीं कपिभिर्वानरैः अनुकम्प्या दयनीया, यद्येते मां प्रति दयन्ते तदैव मम त्राणं नान्यथेति भावः, अतः विसदृशः अकस्मात् विपरीत इत्यर्थः, आरम्भः कर्म्म यस्य तथाभूतं दैवं धिक् निन्दामि, "धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः। आर्य्या वृत्तम् ॥ ८४ ॥

क्वेति। अम्भोधिः समुद्रः क्व ? सेतुबन्धनविधिश्च क्व ? भूभृतां पर्वतानाम् अवस्थितिः क्व ? लङ्केशः रावणः क्व ? जलनिधेः सागरस्य दुस्तरे पारे राघवो वा रामश्च क्व ? एते किष्किन्ध्याद्रिनिवासिनः कपयः वानराः अपि क्व ? एते निशाचारिणः राक्षसाश्च क्व ? एतेषां परस्परं योगो न कदापि कथमपि सम्भवतीति भावः, तस्मात् कार्य्याणां गतयः प्रसराः विधेरपि ब्रह्मणोऽपि, किमन्येषामिति भावः, आलोचनागोचरं चिन्तनायत्तं न यान्ति न चिन्तनीया भवन्तीति

भुजाग्रजाग्रत्करवालजालकेलीकलाखण्डितकालदण्डम् ।
तं रावणं हन्त तथापि हन्तुं को रामबाणादपरः प्रवीणः ? ॥९६॥

शिवशिरसि शिरांसि यानि रेजुः
शिव शिव ! तानि लुठन्ति गृध्रपादे ।
अयि ! खलु विषमः पुराकृतानां
विलसति जन्तुषु कर्म्मणां विपाकः ॥ ९७ ॥

---

यावत्, विधिरपि कस्मिन् किं फलं स्यादिति तर्कयितुं न शक्नोतीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ९५ ॥

भुजेति । भुजाग्रेषु जाग्रत् दीप्यमानं यत् करवालजालम् असिनिवहः तस्य केलीकलाभिः विस्फुरणलेशैः खण्डितः निराकृतः कालदण्डः अन्तकदण्डः येन तथाभूतं तं रावणं तथापि तथैव, तेनैव प्रकारेणेत्यर्थः, हन्तुं नाशयितुं राम-बाणात् अपरः कः प्रवीणः ? समर्थः ? न कोऽपीत्यर्थः, हन्त खेदे । उपजाति वृत्तम् ॥ ९६ ॥

शिवेति । यानि शिरांसि, निकृत्तानीति शेषः, शिवस्य शिरसि, निहितानीति शेषः, रेजुः शुशुभिरे इत्यर्थः, शिव शिवेति खेदे, हे शिव ! हे शिव ! तानि शिरांसि तव शिरसि प्राक् निहितानीति भावः, इदानीं गृध्राणां शकुनानां पादे चरणे लुठन्ति, त्वया किमप्यत्र प्रतिविधातुं न शक्यते इति भावः । तथाहि अयि दैव ! पुराकृतानां प्राक्तनानां कर्म्मणां विषमो दारुणः विपाकः परिणामः जन्तुषु प्राणिषु विलसति खलु फलत्येवेत्यर्थः । अत्र उत्तरार्द्धस्य पूर्ववाक्यार्थहेतुत्वात् वाक्यार्थ-हेतुकं काव्यलिङ्गमलङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ९७ ॥

राक्षसाः । रावणस्य रणे भङ्गः, पुष्पकस्य पराभवः ।
कपिभिर्विजिता लङ्का, जीवद्भिः किं न दृश्यते ? ॥८८॥
जन्म ब्रह्मकुलेऽग्रजो धनपतिर्यः कुम्भकर्णाग्रजः,
सूनुर्वासवजित्, स्वयं दशशिरा दोर्दण्डका विंशतिः ।
अस्त्रं कामगमं, विमानमजयं मध्येसमुद्रं पुरी
सर्वं निष्फलमेतदेव नियतं दैवं परं दुर्जयम् ॥ ८९ ॥
यस्यैषा नगरी समुद्रपरिखा, कामप्रदं कानन-
माज्ञा शक्रशिखामणिप्रणयिनी, त्रैलोक्यराज्यं परम् ।

---

रावणस्येति । रणे रावणस्य भङ्गः पराजयः, पुष्पकस्य दिव्यरथविशेषस्य पराभवः गतेर्व्याघात इति भावः, जात इति शेषः, कपिभिर्वानरैः लङ्का निर्जिता, असम्भवमिदमिति भावः, जीवद्भिः जनैः किं न दृश्यते ? सर्वमेव दृश्यते इत्यर्थः, जगति न किञ्चिदसम्भवमिति भावः । अनुष्टुप् वृत्तम् ॥ ८८ ॥

जन्मेति । ब्रह्मणः कुले वंशे जन्म उत्पत्तिः, धनपतिः कुबेरः अग्रजः ज्येष्ठः, यः कुम्भकर्णस्य अग्रजः, सूनुर्मेघनादः वासवजित् इन्द्रजेता, स्वयं दशशिराः दशाननः, दोष्णां भुजानां दण्डा एव दण्डकाः, स्वार्थे कन्प्रत्ययः, विंशतिः, अस्त्रं कामेन इच्छया गच्छतीति तथाभूतम्, अजयं दुर्वारं विमानं रथः, पुष्पकमित्यर्थः, पुरी लङ्का समुद्रस्य मध्ये इति मध्येसमुद्रं, तिष्ठतीति शेषः, एतत् सर्वं निष्फलं विफलं, जातमिति शेषः, तस्मात् दैवमेव नियतं, परम् अत्यर्थं दुर्जयं जेतुमशक्यं, दैवप्रातिकूल्ये सर्वमेव नश्यतीति भावः । अत्र चतुर्थपादशेषांशवाक्यस्य पूर्ववाक्यहेतुत्वेन निर्देशात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ८९ ॥

यस्येति । यस्य एषा समुद्रः परिखा परिवेष्टनभूतजल-

छित्त्वा येन शिरांसि तीव्रतपसा संसेवितः शङ्करः
तस्यैषा गतिरीदृशी किमपरं सर्वं विनष्टं हठात् ॥१००॥
आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो ! नेदृग् वरो लभ्यते
स्याच्चेदेष न रावणः, क्व नु पुनः सर्वत्र सर्वे गुणाः ? ॥१०१॥

---

राशिर्यस्याः तथाभूता नगरी लङ्का, काननम् उद्यानं कामप्रदं स्वेच्छासुखदमित्यर्थः, आज्ञा शक्रस्य इन्द्रस्य शिखामणिः शिरोरत्नं तस्य प्रणयिनी प्रणयवती, इन्द्र आज्ञावह इति भावः, परं श्रेष्ठम्, एकाधिपत्यमिति भावः, त्रैलोक्यराज्यं त्रिभुवनराजत्वं, तीव्रं कठोरं तपः यस्य तथाभूतेन येन शिरांसि छित्त्वा शङ्करः शिवः संसेवितः समाराधितः, तस्य रावणस्य ईदृशी इत्थम्भूता एषा गतिः स्ववंशेन समरे पतनमेव, जातेति शेषः, अपरं किं वक्तव्यमिति भावः, हठात् दैवात् सर्वं विनष्टं भवतीति शेषः । अत्रापि पूर्ववत् काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १०० ॥

आज्ञेति । शक्रशिखामणिप्रणयिनी आज्ञा, इन्द्र आज्ञावह इति भावः, शास्त्राणि नवं नूतनं विंशतेरधिकमित्यर्थः, चक्षुः, शास्त्रदर्शित्वं न तु मूर्खत्वमिति भावः, पिनाकिनि भूतपतौ शिवे भक्तिः भजनं, लङ्का इति ख्याता दिव्या उत्तमा पुरी पदं स्थानं निवास इत्यर्थः, द्रुहिणस्य ब्रह्मणः अन्वये वंशे उत्पत्तिश्च, महाकुलीनत्वमिति भावः, तत् अहो ! आश्चर्यं, यत् ईदृक् इत्थम्भूतः वरः सर्वविजयेन त्रिलोकाधिपत्यरूपः, न लभ्यते, केनापीति शेषः, एषः रावयतीति रावणः लोक-

अथ मन्दोदर्य्यां प्रणमन्त्यां रामं प्रति विभीषणः ।

इयमियं मयदानवनन्दिनी त्रिदशनाथजितः प्रसवस्थली ।
किमपरं दशकन्धरगेहिनी त्वयि करोति करद्वययोजनम् ॥१०२॥

रामः । मन्दोदरी तव विभीषण ! पट्टराज्ञी
भूयादिमाञ्च परिपालय वीर ! लङ्काम् ।
आज्ञाप्य तं तदिति दत्तसमस्तराज्यं
सीतां सभोपनयनाय दिदेश रामः ॥ १०३ ॥

---

पीड़क इति भावः, न स्यात् चेत् यदि, पुनः किन्तु क्व नु सर्वत्र सर्वे गुणाः ? वसन्तीति शेषः, नैव कुत्रापि सर्वेषां गुणानां सद्भाव इत्यर्थः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। अत्र च न रावण इत्येतावतैव पर्य्याप्तत्वे क्व नु पुनरित्यादिकथनात् समाप्तपुनरात्तता दोष इति दर्पणः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १०१ ॥

इयमिति। इयम् उपस्थितेति भावः, इयं मयदानवस्य नन्दिनी कन्या, त्रिदशनाथजितः इन्द्रजितः प्रसवस्थली जननी, अपरं किं ? वक्तव्यमिति शेषः, दशकन्धरस्य रावणस्य गेहिनी सहिषी त्वयि करद्वययोजनं प्रणतिमित्यर्थः, करोति त्वां प्रणमतीत्यर्थः। द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ १०२

मन्दोदरीति। हे विभीषण ! मन्दोदरी तव पट्टराज्ञी प्रधानमहिषी भूयात्, हे वीर ! इमां मन्दोदरीं लङ्काञ्च परिपालय परिरक्ष, दत्तं समस्तं राज्यं यस्मै तं तं विभीषणम् इति आज्ञाप्य आदिश्य तदिति पञ्चम्यन्तमव्ययं, तत् तदनन्तरमित्यर्थः, रामः सभायाम् उपनयनाय, यद्वा समीपनयनायेति

अथ सतीत्वपरीक्षार्थमग्निप्रवेशे सीतावाक्यम् ।

अयं रामः स्वामी तदनुजवरो लक्ष्मण इह
स्वयं वायोः सूनुर्द्युतिकरमुखा वानरगणाः ।
ममाकारो जातो यदि दशमुखे भाववशगः
तदाहं भस्म स्यामिति विशति वह्नौ रघुवधूः ॥ १०४ ॥

वचसि मनसि काये जागरे स्वप्नसङ्गे
यदि मम पतिभावो राघवादन्यपुंसि ।
तदिह दह ममाङ्गं पावनं पावकेदं
सुकृतदुरितभाजां त्वं हि कर्मैकसाक्षी ॥ १०५ ॥

---

पाठः, सीतां दिदेश अनुमेने। सीतासमीपनयनायेति पाठे सीतायाः समीपे स्वसन्निधौ नयनम् आनयनं तस्मै दिदेश आज्ञापयामास । वसन्ततिलकं वृत्तम् ॥ १०३ ॥

अयमिति। अयं स्वामी रामः, इह अस्मिन् प्रदेशे तस्य अनुजवरः भ्रातृप्रवरः लक्ष्मणः, स्वयं वायोः सूनुः हनूमान्, द्युतिकरः सूर्य्यः तदात्मजत्वात् सुग्रीवोऽपि द्युतिकरोऽत्रोच्यते। द्युतिकरः सुग्रीवः मुखं प्रधानं येषां ते वानरगणाः, तिष्ठन्तीति शेषः, यदि मम आकारः अङ्गं दशमुखे रावणे भावेन अनुरागेण वशगः वशवर्त्ती जातः, तदाहं भस्म स्याम् इति, उक्त्वेति शेषः, रघुवधूः सीता वह्नौ अग्नौ विशति प्रविष्टवती। शिखरिणी वृत्तम् ॥ १०४ ॥

वचसीति। वचसि वाक्ये, मनसि चित्ते, काये अङ्गे, जागरे जागरावस्थायां, स्वप्नसङ्गे निद्रावस्थायां, स्वप्नभावे इति पाठान्तरं, राघवात् रामात् अन्यः पुमान् तस्मिन् मम पतिभावः यदि, जात इति शेषः, तत् तदा, हे पावक! पवित्रता-

वह्नौ प्रविष्टायां सीतायाम्।

पदे पाणौ लाक्षा, वसनमिव कौसुम्भरजनं
कटीदेशे केशेष्वरुणरुचि कह्लारकुसुमम्।
हरिद्रामुद्रास्ये घनकुचतटे कण्ठनिकटे,
कृशानुर्वैदेह्याः शपथसमये भूषणमभूत्॥ १०६॥

वह्निर्ज्वालाः सृजति कियतीर्जानकी किं विधत्ते
कीदृक्छाया रघुपतिमुखे, कर्म्म किं लक्ष्मणस्य।

---

साधन! अग्ने! इव अस्मिन्, समये इति शेषः, मम इदं पावनं विशोधनीयम् अङ्गं दह भस्मीकुरु, हि यतः त्वं सुकृतदुरित-भाजां पुण्यपापकारिणां कर्म्मणः सुकृतदुष्कृतरूपस्येति भावः, एकः मुख्यः साक्षी साक्षात् द्रष्टा। तथाच मनुः, "आदित्य-चन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तम्॥" इति। मालिनी वृत्तम्॥ १०५॥

पदे इति। कृशानुरग्निः वैदेह्याः शपथसमये दिव्यव्यापार-काले भूषणम् अलङ्कारः अभूत्, तथाहि पदे चरणे पाणौ करे लाक्षा अलक्तकरसः, कटीदेशे कौसुम्भरजनं कुसुम्भकुसुमरस-रञ्जितमित्यर्थः, वसनमिव वस्त्रमिव, केशेषु अरुणरुचि रक्तप्रभं कह्लारकुसुमं रक्तोत्पलम्, आस्ये मुखे घनकुचतटे निविड़े स्तनतटे कण्ठनिकटे गलदेशे च हरिद्रामुद्रा हरिद्राविलेपनं, जातमिति शेषः। शिखरिणी वृत्तम्॥ १०६॥

वह्निरिति। वह्निः अग्निः कियतीः किम्परिमाणाः ज्वालाः सृजति? आविष्करोतीत्यर्थः, जानकी सीता किं विधत्ते? करोति? रघुपतेः रामस्य मुखे छाया कान्तिः कीदृक? किंरूपा?

इत्थं यावद्विवदति जनः कौतुकोच्छूननेत्रः
तावच्छन्नं गगनमखिलं द्योतमानैर्विमानैः ॥ १०७ ॥

ततश्च । सीतामुदीक्ष्य सुमुखीं शिखिनः प्रवेशे
मुक्तास्तथा सुमनसः सुरसुन्दरीभिः ।
स्रग्विक्रयः सकलखेचरमालिकानां
जातो यथा चिरतरं त्रिदिवे महार्घः ॥ १०८ ॥

अथ । वह्नेः शुद्धिविधायिनो भगवतस्तेजोभिरभ्युन्नतै-
रम्लानामनसूयया विरचितां मौली स्रजं बिभ्रती ।

---

लक्ष्मणस्य कार्य्यं किम् ? किमाचरति स इति भावः, जनो लोकस्तत्रस्थ इति यावत्, कौतुकेन कुतूहलेन उच्छूनानि स्फीतानि नेत्राणि यस्य तथाभूतः सन् इत्थमेवम्प्रकारं यावत् विवदति वितर्कयति तावत् अखिलं समग्रं गगनम् अन्तरीक्षं द्योतमानैः विराजमानैः विमानैः देवयानैः छन्नं पूरितम्, अभूदिति शेषः, देवाः सर्वे आकाशमार्गे अवतस्थिरे इति भावः । मन्दाक्रान्ता वृत्तम् ॥ १०७ ॥

सीतामिति । शिखिनः वह्नेः, शिखिनीति पाठान्तरं, प्रवेशे सुमुखीं प्रफुल्लवदनां सीताम् उदीक्ष्य ऊर्द्धदेशात् दृष्ट्वा सुरसुन्दरीभिः विद्याधरीभिः तथा तेन प्रकारेण सुमनसः पुष्पाणि मुक्ताः वृष्टाः, यथा त्रिदिवे स्वर्गे सकलखेचरमालिकानां सर्वेषां देवमालाकराणां चिरतरं दीर्घकालं स्रग्विक्रयः कुसुममालाविक्रयणं महार्घः महामूल्यः जातः । वसन्ततिलकं वृत्तम् ॥ १०८ ॥

वह्नेरिति । जानकी अभ्युन्नतैः स्वशरीरनिःसृतैरित्यर्थः, तेजोभिः भगवतो देवस्य वह्नेः शुद्धिविधायिनो पावनी सती

पादाङ्गुष्ठनखाग्रदत्तनयना नीवीविनिन्यासतः
स्तोकालच्यमुखी कृशानुवलयाद्द्राङ्निर्गता जानकी ॥ १०९ ॥

अदग्धायां सीतायां दशरथसमेतानां देवानां वाक्यम्।

विरम विरम राम! त्वत्कलत्रं पवित्रं
वयमधिगतवन्तः साक्षिणो लोकपालाः।
किमपरमनलेऽस्मिन् हेमवल्लीव शुद्धा
कुलविपुलविभूषां जानकी ते तनोतु ॥ ११० ॥

---

अनसूयया अत्रिपत्न्या विरचितां गुम्फित्वा दत्तामिति यावत् अम्लानाम् अमलिनां, नित्योज्ज्वलामिति यावत्, स्रजं मालिकां मौलौ धम्मिल्ले, "मौलिः किरीटधम्मिल्लौ" इत्यमरः, बिभ्रती दधाना पादाङ्गुष्ठयोर्नखाग्रेषु दत्तनयना दत्तदृष्टिः, न त्वन्यतो दत्तदृष्टिरिति भावः, नीवी कटिवसनग्रन्थिः तस्या विनिन्यासतः विशेषेण बन्धनप्रयत्नत इत्यर्थः, प्रस्खलनभयादिति भावः, हेतोः स्तोकमीषत् आलच्यं मुखं यस्याः तथाभूता सती द्राक् सपदि, झटितीत्यर्थः, "द्राग् झटित्यञ्जसाह्नाय" इत्यमरः, कृशानुवलयात् अग्निमण्डलात्, अग्निराशेरित्यर्थः, निर्गता उत्तस्थावित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ १०९ ॥

विरमेति। हे राम! विरम विरम, जानकीं प्रति असतीत्वसंशयादिति भावः, तव कलत्रं पत्नी जानकी पवित्रं विशुद्धम्। लोकपालाः साक्षिणः सर्वान्तर्यामिनः वयम् अधिगतवन्तः ज्ञातवन्तः। अपरम् अधिकं किं, वक्तव्यमिति शेषः, जानकी अस्मिन् अनले अग्नौ शुद्धा सती हेमवल्लीव हेमलतेव ते तव कुलस्य वंशस्य विपुलां महतीं विभूषाम् अलङ्कृतिं, शोभामित्यर्थः, तनोतु विस्तारयतु। मालिनी वृत्तम् ॥ ११० ॥

अदृष्टायां सीतायां जनानां वाक्यम्।

भग्नं यद्धनुरीश्वरस्य शिशुना यज्जामदग्न्यो जितः
त्यक्ता यच्च गुरोर्गिरा वसुमती बद्धो यदम्भोनिधिः।
एकैकं दशकन्धरक्षयकृतो रामस्य किं वर्ण्यते ?
दैवं निर्णय येन सोऽपि सहसा सीतावियुक्तीकृतः ॥१११॥

अथ श्रीरामं प्रति तेषां स्तुतिवचनम्।

विजेतव्या लङ्का चरणतरणीयो जलनिधिः
विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः।
तथाप्येको रामः सकलमजयद्राक्षसकुलं
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ ११२ ॥

---

भग्नमिति। शिशुना रामेण ईश्वरस्य धनुः भग्नम् इति यत्, जामदग्न्यः भार्गवः जित इति यत्, गुरोः पितुः गिरा वचसा, आज्ञयेति यावत्, वसुमती पृथिवी, राज्यमित्यर्थः, त्यक्ता इति यत्, अम्भोनिधिः समुद्रः बद्ध इति यत्, तत्तत् एकैकं दशकन्धरक्षयकृतः रावणसंहारिणो रामस्य किं वर्ण्यते ? किं कीर्त्त्यते ? किन्तु दैवं विधिं निर्णय निश्चिनुहि, येन सोऽपि रामः सहसा सीतावियुक्तीकृतः सीताविरहदुःखं प्रापित इत्यर्थः, न कोऽपि दैवम् अतिवर्त्तितुं शक्नोतीति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १११ ॥

विजेतव्येति। लङ्का सुरासुरैः अजेयेति भावः, विजेतव्या जयनीया, जलनिधिः समुद्रः चरणाभ्यां तरणीयः लङ्घनीयः, पौलस्त्यः रावणः विपक्षः शत्रुः, रणभुवि संग्रामक्षेत्रे कपयः वानराः सहायाः, तथापि इत्थं जयप्रातिकूल्येऽपि एकः रामः सकलं समग्रं राक्षसकुलम् अजयत् जितवान्। तथाहि महतां

रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं
प्रोत्सिक्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥ ११३ ॥

रामं प्रति लोकपालाः ।

अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतरत्
विशल्यं सौमित्रेरयमुपनिनायौषधिवरम् ।

---

महाप्रभावाणां जनानां क्रियासिद्धिः कार्य्यसिद्धिः सत्त्वे बले, महानुभावतायामित्यर्थः, भवति तिष्ठति, उपकरणे बाह्यसामग्र्यां न, भवतीत्यन्वयः, सत्त्ववतां किमसाध्यमिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शिखरिणी वृत्तम् ॥ ११२ ॥

राम इति । रामः गुरोः पितुराज्ञां मालामिव मूर्ध्नि शिरसि निधाय काननम् अगात् गतवान् । भरतेन तस्मिन् रामे भक्तिः तया तद्भक्त्या हेतुना मात्रा जनन्या सहैव अखिलं राज्यम् उज्झितं त्यक्तं, माता त्यक्ता राज्यञ्च त्यक्तमित्यर्थः । अनुगतौ आश्रितौ तौ सुग्रीवविभीषणौ परां महतीं सम्पदं नीतौ प्रापितौ । तथा प्रोत्सिक्ताः प्रकर्षेण गर्विताः दशकन्धरप्रभृतयः रावणादयः समस्ताः द्विषः शत्रवः ध्वस्ता निहताः । अत्र प्रथमे पादे उपमा, द्वितीये सहोक्तिः, तल्लक्षणमुक्तं दर्पणे, "सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः । सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत् ॥" इति, तदनयोः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ११३ ॥

अधाक्षीदिति । अयं नोऽस्माकं लङ्काम् अधाक्षीत् ददाह,

इति स्मारं स्मारं त्वदरिनगरीभित्तिलिखितं
हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥ ११४ ॥
हत्वा तु रावणं घोरं सीतामादाय राघवः ।
अयोध्यायां गमिष्यामि मुमुदे सहलक्ष्मणः ॥ ११५ ॥

सीतां प्रति रामः ।

यस्यामनिर्जरितचन्द्रिकमर्कपादैः
त्रासान्निशाचरपतेरुषसि व्यलासि ।
व्यावर्त्त्य वक्त्रकमलं कमलाक्षि ! पश्य
लङ्केति तां नवविभीषणराजधानीम् ॥ ११६ ॥

---

अयम् उदन्वन्तं समुद्रम् अतरत् उत्तीर्णवान्, अयं सौमित्रेः लक्ष्मणस्य विशल्यं शल्योद्धरणम् ओषधिवरम् उपनिनाय आनीतवान्, इतीत्थं स्मारं स्मारं पुनः पुनः स्मृत्वा तव अरि नगर्याः शत्रुपुर्याः लङ्काया भित्तौ कुड्ये लिखितं चित्रितं, हनूमन्तं कुपितो राक्षसगणः दन्तैः दशति, अयमेव अस्माकं सर्वानर्थहेतुरिति प्रहरतीत्यर्थः ! शिखरिणी वृत्तम् ॥ ११४ ॥

हत्वेति । राघवः रामः घोरं भीषणं रावणं हत्वा तु विनाश्यैव सीतामादाय अयोध्यायां गमिष्यामीति सहलक्ष्मणः लक्ष्मणेन सहितः मुमुदे ननन्द । सह सीतयेति पाठान्तरम् । अनुष्टुप् वृत्तम् ॥ ११५ ॥

यस्यामिति । हे कमलाक्षि ! पङ्कजनयने ! यस्यां लङ्कायां अर्कपादैः सूर्यकिरणैः निशाचरपतेः रावणात् त्रासात् भयात् उषसि प्रभाते न निर्जरिता निःशेषेण जीर्णतामनीता, अग्रस्तेति यावत्, चन्द्रिका यस्मिन् तद् यथा तथा व्यलासि विजृम्भितं, यत्र नित्यज्योत्स्नासु रजनीषु प्रभातेऽपि सूर्यकिरणै-

लङ्कां प्रति सीतावाक्यम्।

छिन्ना न दिव्यतरवस्तव कच्चिदाहो ?
कच्चिद्धता न परिखाः कनकाम्बुजिन्यः ?।
प्लुष्टा न कच्चिदिनरत्नमहागृहाश्च ?
कच्चिन्न काञ्चनमया दलिताश्च शालाः ? ॥ ११७ ॥

रामः। अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताड़िते हनूमता द्रोणाद्रिरत्राहृतः।

---

चन्द्रिकामालिन्यं न स्यादिति भावः। वक्त्रकमलं मुखपद्मं व्यावर्त्त्य प्रत्यावर्त्त्य लङ्केति ख्यातां तां नवविभीषणराजधानीं पश्य अवलोकय। वसन्ततिलकं वृत्तम् ॥ ११६ ॥

छिन्नेति। आहो लङ्के! तव दिव्यतरवः छिन्ना न कच्चित् ? कच्चिदिति प्रश्ने, न छिन्ना किम् ? अपितु छिन्ना एवेत्यर्थः। कनकाम्बुजिन्यः काञ्चनपद्मशालिन्यः परिखाः तव वेष्टनजलराशयः हृताः न कच्चित् ? न विलोड़िताः किम् ? अपितु विलोड़िता एवेत्यर्थः। इनरत्नमहागृहाश्च सूर्य्यकान्तमणिनिर्मिताः महान्तः तव गृहाः सदनानि न प्लुष्टा न दग्धाः कच्चित् ? अपितु भस्मीकृता एवेत्यर्थः। काञ्चनमयाः सौवर्णाः शालाः प्राकाराः, "प्राकारो वरणः शाल" इत्यमरः, कच्चित् न दलिताश्च ? न भग्नाश्च ? अपितु दलिता एवेत्यर्थः, यादृक् तेऽहङ्कारः तथैव त्वं ध्वस्तासीति भावः। इदमेव वृत्ते चारमिति बोध्यम्। वसन्ततिलकं वृत्तम् ॥ ११७ ॥

अत्रेति। अत्र अस्मिन् प्रदेशे फणिपाशबन्धनविधिः नागपाशबन्धनव्यापारः आसीत्। भवत्या देवरः भवद्देवरः तस्मिन् लक्ष्मणे इत्यर्थः, शक्त्या तदाख्येन अस्त्रेण वक्षसि गाढं दृढं

दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी ॥११८॥
वैदेहीं समवाप्य दाशरथिनारब्धे प्रयाणेऽग्रतो
दृष्टाः पुष्पकसंस्थितेन रभसादाकाशमारोहता ।
लङ्कासागरजानकीवनरणक्षौण्यश्चमत्कारिका
जम्बूवज्जलविन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ११९ ॥

---

यथा तथा ताड़िते प्रहृते सति हनूमता अत्र प्रदेशे द्रोणाद्रिः गन्धमादनगिरिः आहृतः आनीतः । हे मृगाक्षि ! हरिणनयने ! अत्र दिव्यैः लक्ष्मणस्य शरैः इन्द्रजित् लोकान्तरं प्रापितः निहत इत्यर्थः । अत्र अस्मिन् प्रदेशे केनापि राक्षसपतेः रावणस्य कण्ठाटवी कण्ठकाननं कृत्ता छिन्ना च, अत्र केनापीत्यनेन आत्मगर्वः परिहृत इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥११८॥

वैदेहीति । वैदेहीं सीतां समवाप्य लब्ध्वा दाशरथिना रामेण प्रयाणे अयोध्यायात्रायाम् आरब्धे सति पुष्पकसंस्थितेन अत एव रभसात् वेगात् आकाशम् आरोहता सता अग्रतः चमत्कारिकाः चमत्कारविधायिन्यः लङ्का-सागर-जानकीवन-रणक्षोण्यः क्रमेण जम्बूवत् जलविन्दुवत् जलजवत् जम्बालवत् जालवत् दृष्टाः अवलोकिताः, तथाच लङ्का सागरमध्ये पतितं जम्बूफलमिव, सागरः जलविन्दुवत् स्वल्पजलाशय इव जानकीवनम् अशोकवनं जलजवत् पद्ममिव, "जलजं शङ्खपद्मयोः" इत्यमरः, रणक्षोणी रणक्षेत्रं जम्बालवत् पङ्कविशिष्टं जालवत् आनायवत्. "आनायः पुंसि जालं स्यात्" इत्यमरः, निपतितवीराणां जालसंयुक्तपङ्कसदृशकृष्णवर्णत्वादिति भावः, आलोकिता इति निष्कर्षः शार्दूलविक्रीड़ितं वृत्तम् ॥ ११९ ॥

अथ दहनविशुद्धां तां समादाय सीतां
रजनिचरकपीन्द्रैर्वन्दितः पुष्पकेण।
पुरमगमदयोध्यां मन्त्रियूथैर्मिलित्वा
सपदि भरतदत्तां राज्यलक्ष्मीं स भेजे॥ १२०॥

अयोध्यां गते रामे वशिष्ठवाक्यम्।

शिष्ये शम्भोर्व्यधित यदयं यच्च धातुः प्रपौत्रे
कस्तेनास्मिन् जगति न जनो विस्मितः सस्मितश्च ?।
अभ्युत्थातुं वयमपि ततो रामभद्रं प्रवृत्ता
दिष्ट्या दृष्टं दशरथकुलं श्वेतमानैर्यशोभिः॥ १२१॥

---

अथेति। अथानन्तरं स रामः दहनविशुद्धाम् अग्निपरिपूतां तां सीतां समादाय रजनिचरकपीन्द्रैः राक्षसेन्द्रकपिप्रवरैः सह पुष्पकेण रथेन वन्दितः सादरं गृहीत इति यावत्, अयोध्यां पुरम् अगमत्। तत्र सपदि तत्क्षणं मन्त्रियूथैः मन्त्रिवर्गैः, पैतृकैः सुमन्त्रादिभिरिति भावः, मिलित्वा सङ्गत्य भरतेन दत्तां प्रत्यर्पितां राज्यलक्ष्मीं भेजे प्राप। मालिनी वृत्तम्॥ १२०॥

शिष्ये इति। अयं रामः शम्भोः शिष्ये भार्गवे परशुरामे यत्, धातुः ब्रह्मणः प्रपौत्रे रावणे यच्च व्यधित विहितवान्, शम्भुशिष्यं रावणञ्च यत् निर्जितवानित्यर्थः, अस्मिन् जगति को जनः तेन कर्म्मणा न विस्मितः न चमत्कृतः ? न सस्मितश्च न सानन्दहासश्च ? इत्यर्थः, सर्व एव विस्मयं गतः आनन्दितश्चेत्यर्थः, ततः कारणात् वयमपि प्रवृद्धा अपीति भावः, रामभद्रम् अभ्युत्थातुम् उत्थाय अभिनन्दितुं प्रवृत्ताः प्रारब्धाः, दिष्ट्या भाग्येन

सीतां प्रति ।

अन्ययोगव्यवच्छेदादुपास्ते यदरुन्धती ।
संविभक्तं त्वया पुत्रि ! तत् सम्प्रति पतिव्रतम् ॥ १२२ ॥

दशवदनविमर्दख्यातबाहुप्रताप-
प्रतिहतपरचक्रं नष्टशङ्काकलङ्कम् ।
सुचिरमनुजबन्धुश्रेणिसामान्यभोगं
सुखितसकललोकं रामराज्यं बभूव ॥ १२३ ॥

अच्छेद्यश्चन्दनाद्यैरपि जलधिजलैस्तैरनिर्वापणीयः
सीताश्रीरामयोर्यश्चिरतरमनयच्चित्तमुत्तप्तभावम् ।

---

दशरथस्य कुलं श्वेतमानैः शुभ्रीभवद्भिः यशोभिः, पूर्णमिति शेषः, दृष्टम् । मन्दाक्रान्ता वृत्तम् ॥ १२१ ॥

अन्येति । हे पुत्रि ! अरुन्धती अन्ययोगव्यवच्छेदात् अपरनारीयोगं विनेत्यर्थः, यत् पतिव्रतं पतिव्रताधर्मम् उपास्ते सेवते, सम्प्रति इदानीं तत् पतिव्रतं त्वया संविभक्तं सम्यग् विभज्य गृहीतमित्यर्थः, जगति अरुन्धत्या समा पतिव्रता नासीत् इदानीन्तु त्वं तस्याः प्रतिस्पर्द्धिनी जातासीति भावः । अनुष्टुप् वृत्तम् ॥ १२२ ॥

दशेति । दशवदनस्य रावणस्य विमर्देन ख्यातो यो बाहुप्रतापः भुजवीर्य्यं तेन प्रतिहतानि निर्जितानि परचक्राणि परराष्ट्राणि यस्मिन् तत्, नष्टः विगत इत्यर्थः, शङ्का दुर्जनेभ्यो भयमेव कलङ्कः यस्य तथोक्तम् अनुजाः कनीयांसः भरतादयः बन्धुश्रेणयश्च समस्ताः स्वजनाश्च तासां सामान्यः साधारणः, स्वसमान इत्यर्थः, भोगः यत्र तथाभूतं सुचिरं सुखिताः सकला लोका यस्मिन् तादृशं रामस्य राज्यं बभूव । मालिनी वृत्तम् ॥ १२३ ॥

नीरन्ध्राश्लेषलीलाकलितघनतरस्पर्शसान्द्रामृतौघ-
प्रस्यन्दानन्दभाजोर्निरगमदनलः सोऽपि विश्लेषजन्मा ॥ १२४ ॥

श्रीरामचन्द्रबहुमानविशेषहृद्या
राज्योपभोगमतुलं सुचिरं विधाय ।
सीता समस्तकुलकौतुकमूलभूतम्
आधत्त गर्भमतिनिर्भरशुद्धभावम् ॥ १२५ ॥

---

अच्छेद्य इति । यः चन्दनाद्यैः, शीतोपचारैरिति शेषः, अपि अच्छेद्यः अनपनेयः, तैः जलधिजलैः समुद्रवारिभिरपि अनिर्वापणीयः निर्वापयितुमशक्यः सीताश्रीरामयोः विश्लेषजन्मा विच्छेदजनितः अनलः अग्निः चिरतरं दीर्घकालं चित्तम् अन्तःकरणम् उत्तप्तभावं सन्तापमित्यर्थः, अनयत् प्रापयत्, सोऽपि नीरन्ध्रस्य सान्द्रस्य आश्लेषस्य आलिङ्गनस्य लीलया विलासेन कलितः कृतः यो घनतरः अतिनिविड़ः स्पर्शः तत्र यः सान्द्रः घनः अमृतौघः पीयूषराशिः तस्य प्रस्यन्देन क्षरणेन य आनन्दः तं भजत इति तयोः सतोः निरगमत् निर्वाणं प्राप, तौ परमसुखं सुरतसुखमनुबभूवतुरिति भावः । स्रग्धरा वृत्तम् ॥ १२४ ॥

श्रीरामेति । श्रीरामचन्द्रस्य यो बहुमानः आदरातिशयः तस्य विशेषेण हृद्या अतीव सुखितेत्यर्थः, सर्वजनसन्तोषिणी वा सीता सुचिरं सुदीर्घकालम् अतुलं निरुपमं राज्योपभोगं विधाय आस्वाद्य समस्तकुलस्य सर्वस्य सूर्य्यवंशस्येत्यर्थः, यत् कौतुकं हर्षः तस्य मूलभूतं निदानम् अतिनिर्भरः अत्यन्तः शुद्धः विमलः भावो यस्य तं गर्भम् आधत्त दधार । वसन्ततिलकं वृत्तम् ॥ १२५ ॥

विरहसुचरिताया निष्कलङ्कः स लङ्का-
पतिभवननिवासाशङ्कलोकापवादम् ।
मुखर-मुखरवोत्थं राम आकर्ण्य मेने
जनकनृपसुतायास्त्यागमेवात्मशुद्धिम् ॥ १२६ ॥
विमलकुलकलङ्काशङ्कया दुर्निवारां
रघुकुलतिलकाज्ञां भीतभीतो गृहीत्वा ।
वनभुवमथ नीत्वा दोहदच्छद्मना तां
जनकनृपतिपुत्रीं लक्ष्मणो वाक्यमाह ॥ १२७ ॥

---

विरहेति। निष्कलङ्कः निरपवादः स रामः विरहे सुष्ठु चरितं यस्याः तथाभूतायाः, अपि अत्राध्याहार्य्यः, जनकनृपसुतायाः सीतायाः लङ्कापतेः रावणस्य भवने निवासः तेन आशङ्किनां सञ्जातचरित्रशङ्कानां लोकानां सामान्यजनानाम् अपवादं दुश्चरितेयं सीतेति कुत्सावादं मुखराणां वाचालानां मुखरवात् मुखोच्चरितशब्दात् उत्तिष्ठतीति तथोक्तम् आकर्ण्य श्रुत्वा त्यागमेव, सीताया इति शेषः, आत्मनः शुद्धिं प्रायश्चित्तं मेने अमन्यत, वास्तवविशुद्धताज्ञानेऽपि लोकरञ्जनार्थमिति भावः। विरहसुचिरताया इति पाठे विरहस्य सुचिरतायाः सुदीर्घकालीनत्वात् हेतोरित्यर्थः। मालिनी वृत्तम् ॥ १२६ ॥

विमलेति। अथानन्तरं लक्ष्मणः भीतभीतः अतिभीतः सन् विमले निर्म्मले कुले कलङ्कः अपवादः तस्य आशङ्कया दुर्निवारां दुर्लङ्घ्यां रघुकुलतिलकस्य रामस्य आज्ञां त्यजेना-मित्यादेशं गृहीत्वा दोहदच्छद्मना दोहदो गर्भिण्या अभिलाषः तस्य छद्म कैतवं तेन, एकदा रामसमीपे सीतया कस्ते दोहद इदानीमिति पृष्टया आत्मनो वनविहाराभिलाषः प्रकटितः

दलति दलति वक्षः कम्पते कम्पतेऽङ्गं
तिमिरकवलितं दिक्चक्रमालोकयामि ।
तदपि परवशोऽहं हन्त! मातर्ब्रवीमि
त्वमिह खलभयेन त्यज्यसे राघवेण ॥ १२८ ॥

इति वचनमकस्माद्वज्रपातानुकारं
श्रुतिगतमथ सीता मूर्च्छिता सा पपात ।
अगमदवनतास्यो लक्ष्मणो रामपार्श्वं
मुनिरलभत सीतां तत्र वाल्मीकिनामा ॥१२९॥

---

तच्छालेति भावः, तां जनकनृपतिपुत्रीं सीतां वनभुवम् अरण्यस्थलीं नीत्वा वाक्यं वचनम् आह उवाच। मालिनी वृत्तम् ॥ १२७ ॥

दलतीति। हे मातः! वक्षः हृदयं दलति दलति विदीर्य्यति विदीर्य्यति, अङ्गं शरीरं कम्पते कम्पते, आभीक्ष्ण्ये द्विर्भावः, दिक्चक्रं दिङ्मण्डलं तिमिरैः अन्धकारैः कवलितं ग्रस्तं, पूरितमिति यावत्, आलोकयामि पश्यामि, तदपि तथापि परवशः पराधीनः, प्रभोराज्ञावशंवद इत्यर्थः, अहं ब्रवीमि कथयामि, हन्त खेदे, राघवेण रामेण खलभयेन दुर्जनभयेन हेतुना इह अरण्ये त्वं त्यज्यसे। मालिनी वृत्तम् ॥ ११८ ॥

इतीति। अकस्मात् हठात् वज्रपातानुकारं कुलिशपातोपमम् इति उक्तप्रकारं वचनं श्रुतिगतं श्रोत्रपथमायातं, तस्या इति शेषः। अथ तच्छ्रवणानन्तरमित्यर्थः, सा सीता मूर्च्छिता पपात। लक्ष्मणः अवनतास्यः अधोवदनः सन् रामस्य

सीतामासाद्य वाल्मीकिना ध्यात्वा ज्ञातम्।

रामो दाशरथिर्दिवाकरकुले तस्याङ्गना जानकी
नीतेयं दशकन्धरेण वनतो लङ्कालयं छद्मना।
रामेणापि कपीन्द्रसङ्गतिवशादम्भोनिधिर्हेलया
बद्धः पर्वतमालया रिपुवधादानीय निर्वासिता ॥ १३० ॥

तत्र सीतां प्रति मुनिवाक्यम्।

वत्से! समाश्वसिहि जानकि! मुञ्च तापं
प्राचेतसोऽयमहमस्मि सखा गुरोस्ते।
स्वीयं पितुर्भवनमेव ममाश्रमस्ते
तत्रोपयाहि ननु पुत्रि! लभस्व पुत्रम् ॥ १३१ ॥

---

पार्श्वम् अन्तिकम् अगमत्। तत्रारण्ये वाल्मीकिनामा मुनिः सीताम् अलभत प्राप। मालिनी वृत्तम् ॥ १२९ ॥

राम इति। दिवाकरस्य सूर्य्यस्य कुले दाशरथिः दशरथस्य सुतः रामः, तस्य अङ्गना पत्नी जानकी जनकदुहिता, इयं जानकी दशकन्धरेण रावणेन छद्मना छलेन वनतः अरण्यात् नीता हृतेत्यर्थः, रामेणापि कपीन्द्रेण सुग्रीवेण या सङ्गतिः मैत्री तद्वशात् हेलया अवलीलया पर्वतमालया पर्वतश्रेण्या अम्भोनिधिः समुद्रः बद्धः। ततः रिपोः रावणस्य बाधात् बधं कृत्वेत्यर्थः, यबर्थे पञ्चमी, आनीय प्रत्याहृत्य इयं निर्वासिता अरण्यं नीता। शार्दूलविक्रीडितं वृत्तम् ॥ १३० ॥

वत्स इति। हे वत्से! जानकि! समाश्वसिहि समाश्वस्ता भव, तापं दुःखं मुञ्च त्यज, अयम् अहं प्राचेतसः वाल्मीकिः तव गुरोः पितुः पितुरिति वा पाठः। सखा अस्मि, मम आश्रमः ते तव स्वीयं निजं पितुर्जनकस्य भवनमेव। ननु

तस्या वाल्मीक्याश्रमगताया वृत्तान्तः।

नीतिः सम्यक् प्रणीता फलमिव सुषुवे जानकी पुत्त्रयुग्मं
वाल्मीकिस्तत्र संज्ञां कुश इति लव इत्येतयोः संविधाय।
विद्याश्चाध्याप्य सर्वाः सकलमविकलं गापयित्वा स्ववाक्यं
भव्यं रामायणाख्यं सकलकुलमहानन्दकन्दं चकार॥ १३२॥

वनगतायां सीतायां रामवृत्तान्तः।

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत् क्रतूनाजहार।

---

पुत्रि! तत्र ममाश्रमे उपयाहि आगच्छ, पुत्रं लभस्व, तत्रैव सुप्रसवा सतीति शेषः। वसन्ततिलकं वृत्तम्॥ १३१॥

नीतिरिति। सम्यक् प्रणीता प्रयुक्ता नीतिः सामाद्युपाय इति यावत्, फलमिव जानकी पुत्रयुग्मं द्वौ पुत्रौ सुषुवे प्रसूतवतीत्यर्थः, तत्र वाल्मीकिः एतयोः पुत्रयोः कुश इति लव इति संज्ञां नामकरणं संविधाय यथाविधि कृत्वा सर्वा विद्याश्च अध्याप्य पाठयित्वा, तौ इति शेषः, भव्यं सुन्दरं रामायणाख्यं रामस्य अयनं चरितम् आख्या यस्य तत् स्ववाक्यं स्वप्रणीतं सन्दर्भं सकलं सम्पूर्णम् अविकलं यथायथं गापयित्वा सकल कुलानां सर्वेषामरण्यवासिनाम् ऋषीणामित्यर्थः, महान् आनन्दः तस्य कन्दं मूलं, हेतुभूतमुपायमित्यर्थः, चकार कृतवान्। स्रग्धरा वृत्तम्॥ १३२॥

सीतामिति। दशमुखरिपुः रावणारिः रामः सीतां हित्वा त्यक्त्वा अन्यां कान्तां नोपयेमे न परिणीतवान् इति यत् तथा तस्याः सीताया एव प्रतिकृतिसखः प्रतिमूर्त्तिसहितः क्रतून् अश्वमेधादीन् यज्ञान् आजहार अनुष्ठितवान् इति यत्

वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्त्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ १२३ ॥

अथ ब्राह्मणपुत्रस्य मृतस्य जीवनाय धूमं पिबन्तं मुनिरूपं शूद्रं दृष्ट्वा रामवाक्यम् ।

रे हस्त ! दक्षिण ! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि दुर्भरगर्भखिन्न-
सीताप्रवासनपटोः, करुणा कुतस्ते ? ॥ १२४ ॥

अथ सुवर्णसीताप्रतिकृतिं कृत्वाऽश्वमेधं कुर्वाणे रामभद्रे पौरजनवाक्यम् ।

---

"सस्त्रीको धर्म्ममाचरेत्" इति शास्त्रादिति भावः, तेन श्रवण-विषयप्रापिणा श्रुतिगोचरेण भर्त्तुः वृत्तान्तेन हेतुना सा सीता दुर्वारमपि दुःसहमपि परित्यागदुःखं कथमपि विषेहे सोढ़-वती । मन्दाक्रान्ता वृत्तम् ॥ १२३ ॥

रे हस्त इति । रे दक्षिणहस्त ! मृतस्य द्विजस्य शिशोः अर्भकस्य जीवातवे जीवनौषधाय, "जीवातुर्जीवनौषधम्" इत्य-मरः, शूद्रमुनौ कृपाणम् असिं विसृज निक्षिप । ननु कथमहमीदृङ्‌निर्दयमाचरामीत्यत आह, रामस्येति ।—दुर्भरेण दुर्धरेण गर्भेण खिन्ना क्लान्ता या सीता तस्याः प्रवासने वनप्रेषणे पटुः समर्थः, तत्पर इत्यर्थः तस्य रामस्य गात्रम् अङ्गम् असि, ते तव करुणा कुतः ? नैव करुणा अस्तीत्यर्थः । अत्र उत्तरार्द्धस्य पूर्वार्द्ध-हेतुकत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, "हेतोर्वाक्य-पदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति लक्षणात् । वसन्ततिलकं वृत्तम् ॥ १२४ ॥

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ? ॥१२५॥

अत्रावसरे । जितरघुपतिवीर्य्यावश्वमेधाश्वरोधे
क्रतुसदसि मुनिस्तौ तद्यशो गापयित्वा ।
प्रमुदितहृदि रामे चार्पयित्वाज्ञयास्य
प्रणिहितबुधशिष्यो जानकीमानिनाय ॥ १२६ ॥

ततश्च आगतायां सीतायां लोके साध्वीत्वख्यातिं संवर्द्धयितुमभिलषति रामे सीतावृत्तान्तः ।

---

वज्रादिति । वज्रात् कुलिशादपि कठोराणि कठिनानि, दुष्करकार्य्येषु शत्रुवधादिष्विति भावः, कुसुमादपि मृदूनि कोमलानि, विपन्नजनोद्धरणादिष्विति भावः, लोकोत्तराणाम् अलौकिकजनानां, महात्मनामिति यावत्, चेतांसि को हि को वा विज्ञातुं बोद्धुम् अर्हति ? न कोऽपीत्यर्थः । हीत्यत्र न्विति पाठे नु वितर्के । चेतांसीत्यत्र वृत्तानीति पाठे वृत्तानि चरितानीत्यर्थः । अनुष्टुप् वृत्तम् ॥ १२५ ॥

जितेति । मुनिर्वाल्मीकिः अश्वमेधाश्वस्य रोधे निरोधे कृते सति, ताभ्यां जानकीसुताभ्यामिति शेषः, जितं रघुपतेः रामस्य वीर्य्यं बलं याभ्यां तौ कृतरामपराजयौ इत्यर्थः, तौ कुशलवौ क्रतुसदसि यज्ञसभायां तद्यशः तस्य रामस्य यशः यशस्करं रामायणमिति भावः, गापयित्वा प्रमुदितम् आह्लादितं हृद् यस्य तथाभूते रामे अर्पयित्वा च अस्य रामस्य आज्ञया प्रणिहितः प्रेरितः बुधः विद्वान् शिष्यो येन तथोक्तः, विद्वांसं शिष्यं प्रेरयन् इत्यर्थः, जानकीं सीताम् आनिनाय उपस्थापयामास । मालिनी वृत्तम् ॥ १२६ ॥

तस्या भूयोऽपि वह्नौ विश भवतु नृणां देवि ! विश्वासदार्ढ्यं
रामेणेतीरितायां विनमति वदने, चेदहं देवि ! साध्वी ।
मां द्वैधीभूय भूमे ! नय तदिति कृतव्याहृतौ सत्यवाक्यात्
सद्यो निर्भिन्नभूमेः समभवदतुलं ज्योतिरन्तर्विशन्त्याम् ॥१३७॥

धरण्या नीयमानायां सीतायां वृत्तान्तः ।

प्रत्युद्धर्त्तुं स सीतां पुनरपि धरणीं भेत्तुमभ्युद्यतोऽभूत्
सर्वैरभ्यर्थ्यमानः शममनयदथो राघवः कोपशोकौ ।
सान्द्रानन्दैः समेतः सकलबुधगणैः पुत्त्रयोस्तत्र सीता-
स्नेहं संरोप्य राज्यं चिरमकृत जनानन्दनो रामचन्द्रः ॥ १३८ ॥

---

तस्यामिति । हे देवि ! त्वं भूयोऽपि पुनरपि वह्नौ अग्नौ विश, नृणां मानवानां विश्वासदार्ढ्यं दृढः प्रत्यय इत्यर्थः, भवतु रामेण इतीत्थम् ईरितायाम् उक्तायां तस्यां सीतायां विनमति विनतिं गच्छति वदने, हे देवि भूमे ! पृथिवि ! अहं साध्वी अव्याहतचरिता चेत् यदि, तत् तदा द्वैधीभूय आत्मानं द्विधाकृत्य, आत्मनि रन्ध्रं विधायेत्यर्थः, मां नय इति कृता व्याहृतिरुक्तिर्यया तथाभूतायां, "व्याहार उक्तिर्लपितम्" इत्यमरः, सद्यः तत्क्षणं निर्भिन्ना या भूमिः तस्याः अन्तरभ्यन्तरं विशन्त्यां प्रविशन्त्याम् अतुलं निरुपमं ज्योतिः तेजः समभवत् उद्बभौ । स्रग्धरा वृत्तम् ॥ १३७ ॥

प्रत्युद्धर्त्तुमिति । स राघवः पुनरपि सीतां प्रत्युद्धर्त्तुं सीतायाः प्रत्युद्धरणार्थं धरणीं पृथ्वीं भेत्तुं विदारयितुम् अभ्युद्यतः प्रवृत्तः अभूत् । अथानन्तरं सर्वैः जनैः अभ्यर्थ्यमानः प्रबोध्यमानः इति यावत्, कोपशोकौ धरणीं प्रति कोपं सीतां प्रति शोकञ्चेत्यर्थः, शमं शान्तिम् अनयत् नीतवान्, ततश्च जनानन्दनः लोकरञ्जनो रामचन्द्रः सान्द्रः महान् आनन्दो येषां

अथ मुनिवेशधारिणः कालस्य समागमः, उक्तिप्रत्युक्ती च ।

एकान्तं देहि राजन् ! मुनिविबुध ! ददे वाञ्छितार्थं त्वदीयं
यस्तत्रोपैति बध्यः स भवति भवतो वाक्यमेकं करिष्ये ।
सौमित्रिं द्वारदेशे तदनु रघुपतिर्लोकरोधाय कृत्वा
शुश्राव ब्रह्मवाक्यं सुरपुरगमनाभ्यर्थनं कालवक्त्रात् ॥ १३९ ॥

अत्रान्तरे समागतेन दुर्वाससा लक्ष्मणस्य वचनानुवचनम् ।

रामं दर्शय, दर्शयाम्यवसरे ब्रह्मन् ! मनाक् क्षम्यतां

---

तैः सकलबुधजनैः निखिलैः विद्वज्जनैः समेतः युक्तः सन् तत्र तयोरित्यर्थः, पुत्रयोः कुशलवयोः, उपरि इति शेषः, सीतास्नेहं सीतावात्सल्यं तंरोप्य निधाय चिरं दीर्घकालं राज्यम् अकृत कृतवान् । स्रग्धरा वृत्तम् ॥ १३८ ॥

एकान्तमिति । हे राजन् ! एकान्तं त्वया सह संलापार्थं निर्जनस्थानमित्यर्थः, देहि । इति कालोक्तिः । हे मुनिविबुध ! देवमुने ! इत्यर्थः, अथवा मुनिषु विद्वन्नित्यर्थः, त्वदीयं वाञ्छितार्थम् इष्टार्थम्, एकान्तमिति भावः, ददे ददामीत्यर्थः । इति रामोक्तिः । तत्र एकान्ते य उपैति उपगच्छति, आवयोः संलापकाले इति भावः, सः भवतः तव बध्यः भवति । इति कालोक्तिः । एकं वाक्यं, तवेति शेषः, करिष्ये पालयिष्यामि, तव वचनात् एकं तथा कुर्वाणं बधिष्यामीत्यर्थः । इति रामोक्तिः । तदनु तदनन्तरं रघुपतिः रामः लोकरोधाय लोकानां प्रवेशवारणाय द्वारदेशे सौमित्रिं लक्ष्मणं कृत्वा संरक्ष्येत्यर्थः, कालस्य वक्त्रात् वदनात् सुरपुरगमने स्वर्गयात्रायाम् अभ्यर्थना यत्र तथाभूतं ब्रह्मणो वाक्यं शुश्राव श्रुतवान् । सुरपुरगमनाभ्यर्थने इति पाठे तद्विषये इत्यर्थः । स्रग्धरा वृत्तम् ॥ १३९ ॥

धिक् त्वां मय्यवलेप एष न हि मां जानासि दुर्वाससम् ? ।
रुद्धोऽहं ज्वलितः क्रुधा तव कुलं भस्मीकरोमि क्षणात्
बद्धस्तिष्ठति मूढ़ ! किं कथय रे ! ज्वालाजटालोऽनलः ? ॥१४०॥

एतद्वचनोत्तरे लक्ष्मणपरामर्शः ।

अस्मिंस्तत्र गते पतेदुभयथैवार्य्यस्य धर्म्मो, मनाक्
अप्यत्रैव धृते दहेत् कुलमिदं दुर्मर्षणोऽयं मुनिः ।
तद्गच्छाम्यहमेव तिष्ठतु कुलं, राज्ञः प्रतिज्ञां पुनः
पूर्णां देहमसुं विमुच्य करवे श्लाघ्यः परार्थो बधः ॥ १४१ ॥

---

राममिति । रामं दर्शय । हे ब्रह्मन् ! अवसरे समये दर्शयामि, मनाक् अल्पं क्षम्यतां प्रतीक्ष्यतामित्यर्थः । त्वां धिक्, मयि एषः अवलेपः गर्वः, अवमाननेति यावत्, दुर्वाससं मां न हि जानासि ? अहं रुद्धः रामसन्निधौ गमने निरुद्ध इत्यर्थः, अत एव क्रुधा कोपेन ज्वलितः सन् तव कुलं क्षणात् भस्मीकरोमि, रे मूढ़ ! ज्वालाभिः जटालः जटावान् अनलः बद्धः सन् किं तिष्ठति कथय ? । शार्दूलविक्रीड़ितं वृत्तम् ॥ १४० ॥

अस्मिन्निति । अस्मिन् दुर्वाससि तत्र एकान्ते, कालपुरुषेण सह प्रभोः संलापस्थाने इत्यर्थः, गते प्रविष्टे सति आर्य्यस्य धर्म्मः प्रतिज्ञा उभयथैव उभयेन प्रकारेणैवेत्यर्थः, पतेत् भ्रश्येत्, सम्भावनायां विधिलिङ्; एकतस्तावत् कालवाक्यारक्षणेन द्वितीयतस्तावत् ब्राह्मणबधकरणेन एतदुभयप्रकारेण एव प्रभोः प्रतिज्ञाभङ्गदोषः ब्राह्मणबधजन्यपातित्यदोषश्च सम्भवति इति भावः । पक्षान्तरे अस्मिन् मुनौ मनाक् किञ्चित्कालम् अत्र धृते निरुद्धे सति दुर्मर्षणः असहनः अयं मुनिर्दुर्वासाः कुलमिदं दहेत् भस्मीकुर्य्यात् । तत्तस्मात् अहमेव गच्छामि म्रिये इत्यर्थः,

इति विमृश्य एकान्तभङ्गं कृतवति लक्ष्मणेऽन्तर्हिते च मुनिरूपे काले रामेणापि अभीष्टदानेन सन्तोष्य प्रस्थापिते दुर्वाससि, लक्ष्मणेन स्ववधे प्रतिज्ञापूरणार्थं याचिते रामवृत्तान्तः।

निखिलमुनिवचोभिस्त्याग एवास्य बन्धोः
वध इति स विचार्य्य स्थैर्य्यवान् रामचन्द्रः।
असुचदथ सुमित्रापुत्रमात्माधिकं तं
न हि किमपि गरीयो वाक्यतो ह्युत्तमानाम् ॥ १४२ ॥

तेन त्यक्तः स्वीयदेहोपयोगात् प्रीतो योगाल्लक्ष्मणोऽङ्गं विमुच्य।
सद्यः स्वर्गं पूज्यमानः स लेभे सत्कर्म्मा हि श्रेयसामेव भागी ॥१४३॥

---

कुलं तिष्ठतु, कुलध्वंसो मा भूदिति भावः। अहं पुनः अमुं देहं विमुच्य त्यक्त्वा राज्ञः प्रतिज्ञां पूर्णां सत्यामित्यर्थः, करवै कारवाणि इत्यर्थः, यतः :परार्थो पररक्षार्थो वधः, आत्मन इति शेषः, श्लाघ्यः प्रशस्यः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १४१ ॥

निखिलेति। अथानन्तरं स स्थैर्य्यवान् सुधीरो रामचन्द्रः निखिलानां सर्वेषां मुनीनां वचोभिः वचनैः अस्य बन्धोः भ्रातुः त्याग एव वध इति विचार्य्य आत्माधिकं प्राणाधिकं तं सुमित्रापुत्रम् असुचत्। हि तथाहि उत्तमानां महतां जनानां वाक्यतः वचनात् किमपि गरीयः अतिशयेन गुरु न हि नैव भवतीत्यर्थः। मालिनी वृत्तम् ॥ १४२ ॥

तेनेति। सः लक्ष्मणः तेन रामेण त्यक्तः स्वीयस्य देहस्य उपयोगः प्रयोजनं यस्मिन् तस्मात् योगात् समाधेः, योगमास्थायेत्यर्थः, यवर्थेपञ्चमी, प्रीतः प्रसन्नः, अनाकुलचित्त इत्यर्थः,

ततश्च लक्ष्मणे स्वर्गं गते रामभरतयोरुक्तिप्रत्युक्ती ।

भरत ! कलय राज्यं, देव ! मैवं, प्रवीरे
तव तनययुगेऽस्मिन् युज्यते राज्यलक्ष्मीः ।
अयमहमनुयास्याम्येव शत्रुघ्नयुक्तः
तव चरणसरोजं नाथ देव ! प्रसीद ॥ १४४ ॥
इति भरतवचोभिर्विस्मितोत्फुल्लचेताः
कुशलवकरपद्मे राज्यलक्ष्मीं निधाय ।
सहगमनसमुत्कैर्याचितो लोकवृन्दैः
अतिसकरुणचित्तस्तांस्तथैवानुमेने ॥ १४५ ॥

---

अङ्गं शरीरं विमुच्य विहाय सद्यः सपदि पूज्यमानः, सुरैरिति शेषः, स्वर्गं लेभे प्राप । हि तथाहि सत्कर्म्मा सच्चरितः जनः श्रेयसामिव सद्गतीनामिव भागी, भवतीति शेषः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । इन्द्रवज्रा वृत्तम् ॥ १४३ ।

भरतेति । हे भरत ! राज्यं कलय गृहाण । इति रामोक्तिः । हे देव ! मा एवम् एवं मा वद इत्यर्थः, प्रवीरे, विनीते इति वा पाठः, अस्मिन् तव तनययुगे पुत्रयुगले राज्यलक्ष्मीः युज्यते सङ्गच्छते, ज्येष्ठवंशानुसारिणी हि राज्यलक्ष्मीरिति भावः । हे नाथ ! अयम् अहं शत्रुघ्नेन युक्तः सहितः तव चरण-सरोजं पादपद्मम् अनुयास्याम्येव अनुगमिष्याम्येव । हे देव ! प्रसीद प्रसन्नो भव । मालिनी वृत्तम् ॥ १४४ ॥

इतीति । इतीत्थं भरतस्य वचोभिः वचनैः विस्मितम् उत्फुल्लं चेतः चित्तं यस्य तथोक्तः स रामः कुशलवयोः करपद्मे, करयुग्मे इति वा पाठः, राज्यलक्ष्मीं निधाय समर्प्य सह-गमने समुत्काः समुत्सुकाः तैः लोकवृन्दैः पुरवासिसमूहैः

अथागतेषु वानरराक्षसेषु अनुगमार्थिषु वृत्तान्तः ।

विभीषणहनूमन्तौ कृत्वा स चिरजीविनौ ।
आकल्पं भूरिभोगाय निर्वर्त्यान्यान् सहानयत् ॥ १४६ ॥

ततः सकलायोध्यापरिवृतः सरयूतटं गत्वा ।

स्नात्वाऽसौ सारवेऽन्तःपयसि रघुपतिर्दिव्यदेहो विमाने
तावद्व्योम्नि स्थिरोऽभूदनुगमनकृतोत्साहभाजो जनास्ते ।
यावत्कीटादयोऽपि प्रतिनवसरयूस्नाननिर्मुक्तदेहाः
स्नेहाद्ब्रह्मोपनीतान्यनवरतमहो व्योमयानान्युपेयुः ॥ १४७ ॥

---

याचितः प्रभो! यत्र गच्छसि तत्रास्मानपि नयेत्येवं प्रार्थितः अतएव अतिकरुणम् अतिदयार्द्रं चित्तं यस्य तथाभूतः सन् तान् लोकान् तथैव अनुमेने अनुज्ञातवान् । मालिनी वृत्तम् ॥ १४५ ॥

विभीषणेति । स रामः विभीषणहनूमन्तौ चिरजीविनौ कृत्वा आकल्पं प्रलयकालपर्य्यन्तं भूरिभोगाय यथेच्छसुख-भोगार्थं निर्वर्त्त्य निवार्य्य, संरच्येत्यर्थः, अन्यान् कपिराक्षसान् सह, आत्मनेति शेषः, अनयत्, स्वर्गमिति शेषः । अनुष्टुप् वृत्तम् ॥ १४६ ॥

स्नात्वेति । असौ रघुपतिः रामः सारवे सरयूसम्बन्धिनि अन्तःपयसि अन्तर्जले स्नात्वा अवगाह्य दिव्यदेहः सन् व्योम्नि आकाशे विमाने देवयाने तावत् स्थिरः निश्चलः अभूत् यावत् अनुगमने कृतम् उत्साहमौत्सुक्यम्, अभिलाषमित्यर्थः, भजन्ते इति तथोक्ताः कीटादयः अपि जनाः जीवाः प्रतिनवेन अभि-नवेन सरयूस्नानेन निर्मुक्ताः त्यक्ताः देहः पार्थिवं कलेवरं यैः तथाभूताः सन्तः स्नेहात् अनुरागात् ब्रह्मणा उपनीतानि

एवं दोर्दण्डदर्पं दिशि दिशि परमाश्चर्य्यदं गापयित्वा
हत्वा दुर्वृत्तशान्त्या त्रिभुवनमखिलं स्वस्वधर्म्मप्रवृत्तम्।
भुक्त्वा राज्यं सहस्राधिकमयुतमहो वत्सरान् पूर्णकामः
सार्द्धं पौरैः समस्तैरगमदतिकृती राघवः स्वीयलोकम्॥ १४८॥

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
स्वर्गारोहणनामकोऽत्र नवमो यातोऽङ्क एवेत्यसौ॥ १४९॥

समाप्तोऽयं ग्रन्थः।

---

आनीतानि व्योम[illegible]यानानि विमानानि अनवरतम् अजस्रम् उपेयुः उपजग्मुः, अहो आश्चर्य्यम्। स्रग्धरा वृत्तम्॥ १४७॥

एवमिति। अतिकृती अतिकुशलः राघवः दिशि दिशि एवम् इत्थं [illegible]रमाश्चर्य्यदं दोर्दण्डदर्पं भुजबलगौरवं गापयित्वा कीर्त्तयित्वा [illegible]ख्यापयित्वेत्यर्थः, दुर्वृत्तानां दुराचाराणां दशानना-दीनां [illegible] अखिलं समग्रं त्रिभुवनं स्वस्वधर्मे प्रवृत्तं [illegible] [illegible]स्राधिकमयुतं वत्सरान् एकादशसहस्रवर्षाणि इत्यर्थः [illegible] पूर्णकामः सिद्धमनोरथः समस्तैः पौरैः पुरवासिभिः [illegible] स्वीयलोकं विष्णुलोकं, वैकुण्ठमित्यर्थः, अगमत् जगाम। [illegible]ग्धरा वृत्तम्॥ १४८॥

एष इति। [illegible]र्गारोहणं नाम यस्य सः॥ १४९॥

इति वि, ए, उपाधिधारिणा पण्डितकुलपतिना
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता महानाटक-
व्याख्या समाप्ता।

———